# THE
# VIKRAMANKADEVA CHARITA MAHAKAVYA

## VOL. II

VIII—XIII CANTOES

EDITOR & COMMENTATOR

Pt. VISHWANATH SHASTRI BHARADWAJ
M.A., Kavyateerth, Vidyavageesh,

*Member-Samskrit Sahitya Research Committee,*
*Lecturer, History of Samskrit Literature and Philosophy,*
*Samskrit Mahavidyalaya,*
*Banaras Hindu University, Banaras*

THE
SAMSKRIT SAHITYA RESEARCH COMMITTEE
OF
THE BANARAS HINDU UNIVERSITY

1962

Price Rs. 7/-

सुमन्त्रिते सुविक्रान्ते

सुकृते सुविचारिते ।

प्रारम्भे कृतबुद्धीनां

सिद्धिरव्यभिचारिणी ॥





चालुक्यराज-श्री विक्रमाङ्कदेव ।
(विक्रमादित्य षष्ठ)
शासनकालः १०७६—११२६ ई०
(कल्याणीदुर्ग—देवमन्दिरभित्तिस्थ-चित्रप्रतिकृति)

## विषयानुक्रमणिका



## परिशिष्टानि





॥ श्री ॥

॥ श्री गणेशाय नमः ॥

॥ श्री सङ्कष्टनाशिन्यै नमः ॥

# प्रस्तावनम्

**अयि गीर्वाणवाणीवीणावादनचणा विपश्चिदपश्चिमा विद्वांसः !**

महाकविबिल्हणरचितस्य विक्रमाङ्कदेवचरितमहाकाव्यस्येमं द्वितीयं भागं सविनयं भवतां पुरतः स्थापयतो मे मनसि महानानन्दसन्दोहः समुज्जृम्भते। क्षणभङ्गुरेऽस्मिन् संसारे सत्यामपि षष्ट्युत्तरावस्थायां येयदपि सुरभारतीसेवा भवति सा जगज्जननी सङ्कष्टहरणीकृपयैव। अन्यथाऽस्यामवस्थायामश्रुतपूर्वमहर्घताविकराले कालेऽस्मिंश्च शारीरिकमानसिकपौष्टिकपदार्थाभावात्कथमशक्ते मयि शक्तिसञ्चारः स्यात्। सर्वशक्तिसमन्विता सैवादिशक्तिः शक्तिसञ्चारेणाऽशक्तादपि मत्तो भक्तवात्सल्यतया किमपि कार्यजातं कारयतीति निश्चप्रचम्।

महाकाव्यस्याऽस्य प्रथमभागभूमिकायां सम्पूर्णमहाकाव्यस्य भागद्वितयं एव प्रकाशनं प्रतिज्ञातमासीत्। परञ्च द्वितीयभागस्याऽपि पुनरेकादशसर्गात्मकत्वादेतद्भागकलेवरपीवरत्वभियाऽष्टमसर्गतस्त्रयोदशसर्गान्तोऽयं द्वितीयो भाग एव सामञ्जस्यमुद्वहेदिति निर्धारितम्। तथा चाऽयं द्वितीयो भागो भवतां करकमलेषु स्वरचितरमानामकसंस्कृतटीका हिन्दीभाषानुवादोपेतः परिशिष्टादिसमन्वितश्च संस्थाप्यते। तृतीये भागे महाकाव्यप्रकाशनपूर्तिश्च भवितेत्यपि सूच्यते।

प्रथमभागभूमिकायां महाकाव्यमिदमधिकृत्य गुणदोषविवेचन-नायकनिरूपण-कविचरित्रवर्णन-पाठभेदप्रदर्शनादिकं केषाञ्चिद्विदुषां महाकाव्यस्याऽस्य विषये विसंवादनिराकरणं महाकाव्यस्य तन्नायकस्य च विषये विविधप्रकाशितपुस्तकलेखादीनाञ्च वर्णनं यथामति विस्तरतः कृतमेव। पुनरत्र तदुद्टङ्कनं पिष्टपेषणमेव। अधुना खलु महाकाव्यनायकस्याऽतिप्राचीनं चित्रं, चालुक्यराजवंशस्य विशिष्टपरिचयस्तद्विषयकहस्तलिखितपुस्तकप्राप्तिसौभाग्यादिकमेवाऽत्र संक्षेपेण प्रस्तूयते।

भारतवर्षीय-मध्यप्रदेशस्य दमोहनामके प्रसिद्धे नगरे श्री सरदार ए० ए० चालुकेय पाटिल आइ० ए० एस्० महोदया कलेक्टरपद विभूषयन्तश्चालुक्य-वंशीयाऽस्यण द्वितीयवंशजा इत्यवगम्य तेषा सयोगेन किमपि विशिष्ट चालुक्या-न्वयनृपाणा परिज्ञान सम्भवेदिति विचार्य च पूर्व पत्रादिना परिचय सस्थाप्य गतवर्षे तत्र गत्वा मया तेषा साक्षात्कारो विहित । एते खलु महाभागा नगर-प्रबन्धेषु कठोरा अपि नितान्तसहृदया विद्याविनोदरसिका राजकीय प्राचीनेतिहासान्वेषणाविचक्षणा राजकीयप्रसिद्धचालुक्यकुलगुणोपेता अतिथिसत्कारप्रवणा सम्भाषणमात्रेणैव परहृदयाकर्षका इत्यनुभूय मनसि महान्प्रमोदो जात । वार्तालापप्रसङ्गेन तैरतिप्राचीनानि चालुक्यवंशीयराजपुरुषचिह्नानि स्वर्णघटित-रत्नजटितदेवमूर्तयो दक्षिणावर्तशङ्खाश्चालुक्यनृपादीना चित्राण्येकमुखरुद्राक्ष-मालादीन्यनेकान्यमूल्यवस्तूनि वशपरम्परागतानि प्रदर्शितानि । तत्र चालुक्यान्वय-जातभूमृतामन्येषाञ्च चित्रसग्रहोऽनुपम एव । विक्रमाङ्कदेवचरितमहाकाव्य-नायकभूतस्य विक्रमादित्यषष्ठस्य तत्र चित्रमवलोक्य महान्तमानन्दमविन्दम् । अत्यन्तप्राचीनमप्येतच्चित्र सुदुर्लभमपि सौभाग्येन सुलभमस्मिन् द्वितीये भागे सयोजितञ्चेदस्य शोभाधायक भवेदेवेति मनसा विनिश्चित्य ते तत्प्रतिकृति-प्रदानार्थमस्माभि प्रार्थिता । परमौदार्यवता चालुक्यान्वयसजाताना कृते योग्यायोपयुक्तकार्याय च किमदेयम् । तद्वशगुणवर्णनप्रसङ्गे श्रीबिल्हणमहाकवि-नैवोद्घोषितम् । यथा—

चिन्तामणिर्यस्य पुरो वराकस्तथा हि वार्ता जनविश्रुतेयम् ।
यत्तत्र सौवर्णतुलाधिरूढे चक्रे स पाषाणतुलाधिरोहम् ॥

सर्ग १ श्लो० ९८

उवास तत्रार्थिशतानि पूरयन् फल हि पात्रप्रतिपादन श्रिय ।

सर्ग २ श्लो० २६

धनै कृतार्थीकृतविप्रमण्डल ।

सर्ग २ श्लो० ५६

न भोजराज कविरञ्जनाय मुञ्जोऽथवा कुञ्जरदानदक्ष ।
हस्ताम्बुजे तस्य गुणिप्रियस्य सहर्षमाविष्कृतहेमवर्षे ॥

सर्ग ३ श्लो० ७१

अदरिद्रीकृता भूमिर्विभुदाभिर्विभूतय ।
नीता कुलवधूसाम्य साधूनां वेदमसु श्रिय ॥

सर्ग ४ श्लो० ५२

अदत्त चापरिच्छिन्नमखिन्नः काञ्चनोत्करम् ।
न कृच्छ्रेऽपि महाभागास्त्यागव्रतपराङ्मुखाः ॥

सर्ग ४ श्लो० ६७

यशसि रसिकतामुपागतानां तृणगणनागुणरागिणां धनेषु ।

सर्ग ६ श्लो० २

दासी यद्भुवनेषु विक्रमधनक्रीता ननु श्रीरियम् ।
तेषामाश्रितपोषणाय गहनं किं नाम पृथ्वीभुजाम् ॥

सर्ग ६ श्लो० ९१

कुलपरम्परागता गुणा विशुद्धरक्ताधिष्ठितान् कुलजाताननुसरन्त्येवेति विश्रुतम् । तैरनुक्षणमेव दुर्लभ षष्ठविक्रमादित्यप्रतिकृतिप्रदान सहर्षमङ्गीकृतम् । स्वल्पेनैव कालेन प्रतिकृतिं स्वव्ययेनैव सज्जीकृत्याऽस्मत्सविधे ता तै प्रेषयामासु । सा खलु द्वितीय भागस्याऽग्रावेव सयोजिता वरीवर्ति । अस्माभिरपि "योग्य योग्याय दातव्यमिति" प्राचीनोक्तिमनुसृत्य स्वरचिततद्भागस्य 'रमा' नाम्नी टीका तेभ्य समर्पयितु तेऽभ्यर्थिता । यथाकथमपि तैरङ्गीकृत्याऽस्मदभ्यर्थना तदर्थं स्वप्रतिकृतिश्च प्रदत्ता या समर्पणपत्रेऽत्रैव विनिवेशिताऽस्ति । प्राचीन हस्तलिखित "अभ्यणवशचरितकाव्यम्" विलोक्य तत्पठनस्योत्कण्ठा प्रबुद्धाऽपि काव्यमिदं प्रकाशनान्तरमेव समेषा कृते लभ्य भविष्यतीति तेषामाशय विज्ञाय तत्रैव तेषा स्थाने दिनत्रय यावत्तस्याऽध्ययनमस्माभि कृतम् । तत्र चालुक्यवशोत्पत्तिविषये आदिनृपाणा नामादिविषये च महाकविबिल्हणवर्णनात् प्राचीनेतिहासलेखक डा० आर जी भाण्डारकर, कृष्णस्वामी ऐयङ्गार प्रभृतिनामितिहासग्रन्थेभ्यश्च महान्त भेद समवलोक्य तेषामनुमत्या तत्काव्यस्थ तद्वशस्य प्राचीनोपवर्णनमत्रोट्टङ्क्यते । तद्यथा अभ्यणवशचरितकाव्यादुद्धृतम् — श्रीमहामुनिरुवाच :—

श्रूयता सावधानेन चेतसेम पुरातनम् ।
चालुक्य कुलजातानामैतिह्यं महदद्भुतम् ॥४७॥
विष्णोरशात्समुद्भूतो वंशोऽय वैष्णवो भुवि ।
तद्वंशजाना नामानि पुण्यानि निगदामि वः ॥४८॥
श्रीयाम्नः पुरुषोत्तमस्य महतो नारायणस्य प्रभो-
र्नाभीपङ्करुहाद्बभूव जगत स्रष्टा स्वयम्भूस्ततः ।
जज्ञे मानससूनुरत्रिरितियस्तस्मान्मुनेरत्रितः
सोमो वंशकरः सुधांशुरुदित श्रीकण्ठचूडामणिः ॥४९॥

## अथ द्वितीयः सर्गः ।

स मानी विजयादित्योऽपूर्वशक्तिसमन्वितः ।
बुद्धिमान्नीतिनिपुणो धर्मकर्मरतः सदा ॥१॥

कदाचिच्चित्रकण्ठेन तद्भ्रात्रा विमनायितम् ।
तस्मात्त्यक्त्वा राजधानीमयोध्यां स्वकुलागताम् ॥२॥

धीरो मनस्वी वीरोऽसौ प्रस्थितो दक्षिणां दिशम् ।
स्वकलत्रादिभिर्युक्तो नर्मदायास्तटेऽगमत् ॥३॥

रामवेदाब्जसंख्याके (१४३) शके चौवलिनामके ।
ग्रामे निवसतिं चक्रे श्रीमाहेश्वरसन्निधौ ॥४॥

संतीर्य नर्मदां पश्चात्सर्वैः स्वैरनुयायिभिः ।
अजन्तां विपुलां प्राप सर्वसौख्यप्रदायिकाम् ॥५॥

दानमानैश्च सन्तर्प्य विप्रान्वेदविदां वरान् ।
उवास कतिचित्कालमजन्तायां महाबली ॥६॥

आसीद्राज्यं नर्मदाया दक्षिणे भुवि विश्रुतम् ।
पल्लवान्वयसञ्जात-त्रिलोचननृपस्य च ॥७॥

त्रिलोचनो महावीरो धर्मकर्मरतस्सदा ।
पालयामास तद्राज्यं रामराज्यमिवाद्भुतम् ॥८॥
समापन्नविपत्काले बुद्धिर्मतिमतामपि ।
विपर्यासं समायाति दुर्दैवाभिहता सदा ॥९॥

विजयादित्यराजोऽसौ दुर्भाग्याभिहतस्तदा ।
आक्राम्यति स्म तद्राज्यं शक्तित्रयसमन्वितम् ॥१०॥
तत्राऽभूत्सुमहज्जन्यं वीराणां रोमहर्षणम् ।
शस्त्रैः खण्डितगात्राणां वीराणां रक्तसंस्रवैः ॥११॥

युद्धभूमिः शोणितेन समन्ताच्च परिप्लुता ।
व्याप्ता मुण्डैर्भुजैः पादैः खण्डितैश्च समन्ततः ॥१२॥

ततस्त्रिलोचनस्याऽग्र्यं मदोन्मत्तो मतङ्गजः ।
मर्दयन्परसैन्यानि प्रचचाल महाबली ॥१३॥
विजयादित्यराजोऽपि दृष्ट्वा तं समुपस्थितम् ।
बहुधा छिन्नवर्माऽपि पुरतः संरुरोध तम् ॥१४॥

पदे पदे बाणघातैर्निपिड्योऽपि महाबल ।
चचार शत्रुसैन्यानां गजेंस्तु वदन महत् ॥१५॥

ततस्त्रिलोचनेनाऽसौ हृदि बाणेन ताडित ।
पपाताऽश्वात्तत सैन्य तस्य सर्वं पलायितम् ॥१६॥

गृहीत्वा विजयादित्यभार्यां गर्भवतीं तदा ।
तद्भ्राता तु कथंचिच्चाऽगात्तया सह दु खित ॥१७॥

मुडिवेडुग्राममध्ये विष्णुभट्ट तपस्विनम् ।
वेदवेदाङ्गतत्वज्ञ ब्राह्मण सोमयाजिनम् ॥१८॥

विलोक्य पूर्णगर्भां तां शरणागतवत्सल ।
स्वाश्रय प्रददाति स्म पुत्रीमिव ररक्ष च ॥१९॥

पतिशोकाभिभूता सा राज्ञी तत्राऽवसत्तदा ।
पालयन्ती स्वगर्भं च व्रत वैधव्यज समम् ॥२०॥

अथ काले शुभे राज्ञी सुतमेकमजीजनत् ।
चन्द्रप्रभ दिव्यदेह लक्षणैश्शोभनैर्युतम् ॥२१॥

दृष्ट्वैतद्विष्णुभट्टेन तन्नामकरण कृतम् ।
विष्णुरित्यभिधानेन बालस्य शुभलक्ष्मण ॥२२॥

स्वयमेव प्रसिद्धोऽभूद्विष्णुवर्द्धनसञ्ज्ञया ।
चालुक्यवंशजां कीर्ति वर्द्धयन्निजशौर्यत ॥२३॥

अथ त शिशुरूपेण खेलन्त ललितद्युतिम् ।
विलोक्य राज्ञी प्रीताऽभूद्विस्मता सकल वल्लभम् ॥२४॥

दिने दिने सवयुधे राजराजाधिपोऽभवत् ॥३७॥

कदम्बगङ्गवंशीयान् राज्ञो युद्धे विजित्य च ।
नर्मदात सेतुबन्ध यावद्विस्तीर्णमद्भुतम् ॥३८॥

जित्वा पञ्चाशत्सहस्राधिकलक्षस्य सप्तकान् ।
ग्रामान् संस्थापयामास राज्य स्व दक्षिणापथे ॥३९॥

अस्योत्कटप्रतापेन प्रीत पल्लववंशज ।
काञ्चीश्वरो महाराजो हर्षेण विनयेन च ॥४०॥

प्रादात्कन्यां निजां तस्मै सुन्दरीं गुणगुम्फिताम् ।
दासीवाससमायुक्तामाभूषणविभूषिताम् ॥४१॥

विजयादित्यनामाऽभूत्तत्सूनुर्भूरिविक्रम ।
जयसिंहस्ततो जातो वल्लभेन्द्रादिनामयुक् ॥४२॥

इत्यादि ।

महाकविना बिल्हणेन तु चालुक्यवंशीयनृपाणां दक्षिणस्यां दिशि गमने विक्रमाङ्कदेवचरिते महाकाव्ये,

जिगीषवः केऽपि विजित्य विश्वं विलासदीक्षारसिकाः क्रमेण ।
चक्रुः पदं नागरखण्डचुम्बि-पूगद्रुमायां दिशि दक्षिणस्याम् ॥

सर्ग १ श्लोक ६४

इत्युक्त्यैव समापितम् । न कस्याऽपि राज्ञो नामोल्लेखः कृतः ।

चालुक्यवंशीयमूलपुरुषेषु विक्रमाङ्कदेवचरिते महाकाव्ये हारीतस्योल्लेखस्तदनन्तरञ्च मानव्यनृपस्योल्लेखो दृश्यते । परन्तु 'अय्यणवंशचरिते' काव्ये हारीतमानव्ययोर्नामापि न वर्तते । चालुक्यान्वयनृपः स्वकुलगुरुगोत्रीया बभूवुरिति प्रसिद्धम् । मानव्यविषये तु 'अय्यणवंशचरितकाव्यात्' प्राचीनशिलालेखाच्चाऽवगम्यते यत् चालुक्यवंशीया नृपा मानव्यगोत्रीया आसन् । एवमेव हारीतविषयेऽप्यनुमातुं शक्यते यत्तत्पूर्ववर्तिना राज्ञा कुलगुरौ हारीतसगोत्रत्वात्तेऽपि हारीतगोत्रीया बभूवुः । शिलापट्टादिषु हारीतमानव्यशब्दौ दृष्ट्वैवैतौ प्राचीनतमौ नृपाविति भ्रमेणैव कल्पितं भवेत् । आदिकुलगुरुवंशनाशेऽन्यकुलगुरुप्राप्तौ ते राजानस्तद्गुरुगोत्रत्वेन प्रसिद्धा जाता । अत एव चालुक्यवंशीया नृपाः क्रमशो हारीतमानव्यगोत्रीयास्तदनन्तरञ्च भारद्वाजगोत्रीयकुलगुरौ सति ते भारद्वाजगोत्रीया बभूवुरिति श्री सरदार ए ए चालुकेय पाटिल महोदयाच्चालुक्यवंशीयादवगतम् । तस्माद्धारीतमानव्याविति चालुक्यान्वयजातानां भूभुजां गोत्रनामनी न तु तद्वंशजादिनृपनामनीति सिद्धम् ।

विक्रमाङ्कदेवचरिते महाकाव्येऽन्यपूर्ववर्तिनृपान् हित्वा तैलपनृपादेव वर्णनं प्रारभते । परिशिष्टे प्राचीनचालुक्यान्वयभूभृतां परिज्ञानार्थं चालुक्यनृपवंशावलिः सकलिता वर्तते । तेनैतत्सर्वं सुस्पष्टं भविष्यत्येव । स्वाश्रयभूतभूपवर्णनाभिनिवेशस्तस्य महाकवेर्बिल्हणस्य तत्पूर्ववर्तिनां समेषां भूपतीनां विस्तृतवर्णनमप्रासङ्गिकमेवेति प्रसिद्धानां तत्पूर्ववर्तिनृपाणां संक्षेपेण वर्णनं समाप्य प्रस्तुतभूपतेः स्वाश्रयदातुः सुविस्तृतवर्णनमेव समुचितम् । नैतन्महाकाव्यमिति ह्रास इति समेषां पूर्ववर्तिनां राज्ञामत्र वर्णनाभावो न कथमपि दोषावहः ।



साबाजीराव ! विद्यावनजलद ! एसमालुकेयाऽऽद. ए एस्. !
श्रीमन् ! अप्पासिरायापरपदविदित ! ग्रामनानाधिकार !
कल्याणीराजवंशाम्बुधिशिशिरकर ! त्वत्कराब्जे रमाख्यां
व्याख्यामेतां निधत्ते प्रणयपरवशो भारद्वे विश्वनाथः ॥

## दशमे सर्गे–

तदनन्तरं विवाहमहोत्सवः सजातः। अत्रम कर्तुमुद्यता अपि राजानो विक्रमाङ्कदेवप्रयुक्तकङ्कपत्रस्मरणेनैव सत्रस्ता यथागतेनैव पथा स्वदेशं परावर्तिताः। कामसहायके वसन्ततौ विक्रमाङ्कदेवस्तया सह लीलोपवनस्थलीषु प्रस्थितः। तत्र वसन्तवर्णनप्रसङ्गेन तामनुरञ्जयन् स लोलेक्षणां तां विलासदोलामारोपयामास। किञ्चित्कालं दोलासुखमनुभूयाऽवतीर्य च क्षणमात्रं प्रियाङ्कपाली विश्रम्य च गतश्रमा चन्द्रलेखा पुष्पावचयाय चचाल। सर्वाभिः कामिनीभिः सह कविर्वर्णितं पुष्पावचयवर्णनमतीवाल्हादकरम्। ततो लीलासरस्तीरं सर्वाः समागताः। ताभिः सह भूमिपालस्य विक्रमाङ्कदेवस्य जलक्रीडा सम्यगुपवर्णिता। तस्माद्विरम्य बहिरागतानां सर्वेषामसुकपरिवर्तनेन सम सर्गोऽस्य समाप्तिमेति।

## एकादशे सर्गे–

उत्प्रेक्षाकदम्बकैस्तत्र वर्णितः सूर्यास्तः। अन्धकारस्याऽपि कविकृतमनुरूपं वर्णनमप्रतिमम्। तत्र चाऽभिसारिका चातुर्यनिरूपणं शशाङ्कोदयोपवर्णनञ्चातीव सरसम्। उदितं चन्द्रमसं दृष्ट्वा वियोगिनीनां विविधा विलापकथाः कवेर्नैसर्गिककल्पनाशक्तिविलासं कलयन्ति। कृतभूषा हरिणाक्षी पानकेलिविषये नृपतिरादिशति। कविकृतं पानकेलिवर्णनं केषां न सहृदयानां चेतांसि चमत्करोति। तदनन्तरं विक्रमाङ्कदेवश्चन्दलदेव्या सह तल्पशयनं प्रविशति। तत्र कुसुमेषोरायुधे यद्भवति, येन यौवनतरुः फलदायी भवति, यच्च रागजलधेरमृतं तन्नृपतिराचरति स्म। कथमपि क्षणं निद्रितयोस्तयोर्मागधीभिः प्रत्यूषमङ्गलमगीयत। सूर्योदयमङ्गलं श्रुत्वा स राजा स्वभुजं चन्दलदेव्या उपधानपदाच्छनैरावकर्ष।

## द्वादशे सर्गे–

तत्र चन्द्रलेखया सह कतिचिद्दिनानि सुखेन व्यतीत्य स राजा विक्रमाङ्कदेवः कल्याणसमीपगोऽभूत्। तदागमनं श्रुत्वा पुराङ्गनानां तद्दर्शनार्थं समुत्सुकानां गवाक्षरन्ध्रेभ्यस्तमवलोक्य स्मरोपदिष्टानि विविधानि विचेष्टितानि कविवर्णितान्यनुपमान्येव। गजारूढस्य तस्य पार्श्वे स्थितायाश्चन्द्रलेखायाः सौभाग्यं सस्पर्धं सेर्ष्यञ्च ताभिरनुसूचितम्। नृपेन्दुना विक्रमाङ्कदेवेन तासां पुरसुन्दरीणां कामप्रचोदितानि वचांसि सानन्दं शुश्रुविरे। अनन्तरं स राजा हर्म्याङ्गणकेलिवापीहंसावतरां निजराजधानीं विवेश। समस्तानभ्यागतान् प्रसाददानेनाऽर्द्रया

दृशा च सन्तोषयति स्म। ततो कविकृत ग्रीष्मकालानुरूप राजवर्णन प्रचलति। धारागृहवर्णने, तत्र मध्यदिने मृगेक्षणाभि साकं निवास, लीलावनदीर्घिकासु कामिनीभि सह कृता जलक्रीडा ललितललितया कल्पनया च वर्णिता। जलक्रीडानन्तर स्वहस्तेन देव्या कपोले पत्रवल्लीरचन कचलीलाबन्धनादिक तत्रोप वर्णितम्। अत्रान्तरे ग्रीष्मर्तो प्रभाव क्रमशश्शैथिल्य प्राप्त।

## त्रयोदशे सर्गे–

अत्र ग्रीष्मर्तो क्रमश शैथिल्यवर्णने हिमाद्रिजावाना नदीनामन्यतरङ्गिणीभिस्तुलनात्मक वर्णन कृत्वा वर्षर्तुवर्णन प्रारभते। तत्रेन्द्रधनुषो, हताष्टभल्लप्रतिमल्लता गताना पयोमुचा, मयूराणा, मानसगामिना हसाना, नदीना, पर्वताना, पयोनिधे, सूर्यस्य, क्षणप्रभाया, प्रोषितभर्तृकाणाञ्च वर्षर्तूपयुक्त सरस वर्णन वर्तते। तत्र च सन्निमेघोपालम्भ मेघस्तुतिश्चात्तीव हृद्या। अन्ते च मीनकेतो शासन वर्धानेन विक्रमाङ्कदेवेन स्वकृतजलदसमयशोभावर्णनेन सर्गोऽय समाप्तिमेति।

– शुभम् –

गच्छत स्खलन क्वापि भवत्येव प्रमादत।
हसन्ति दुर्जनास्तत्र समादधति सज्जना॥

———

कल्याणीनामकराजधानीस्थापकविषयेऽपि अव्यणवशचरितकाव्यादत्र भेदोऽवलोक्यते । महाकविना विल्हणेन त्रैलोक्यमल्लापरनामधेयाऽऽहवमल्लदेवस्यापितेयमिति वर्णितम् । यथा—

चकार कल्याणमिति क्रमादसौ पुरं पराध्यं पृथिवीपुरन्दर ।
यदुच्चहर्म्यावलिदीपसंपदा विभाव्यते कज्जलसंनिभं नभः ॥
सर्ग २ श्लोक १

परन्तु अव्यणवशचरितकाव्ये लिखितमस्ति—

अस्थिरामाङ्कशकतो(९३७) बाणाब्ध्यङ्कान्त(९७५) मेव च ।
जिजीवाऽव्यणनामाऽय कांश्चिन्मासान् शशास वै ॥२०॥

मालकेडात्पञ्चदशक्रोशे यास्मीत् धताशिरौ ।
राजधानी पुरा सा तु कल्याण्या स समानयत् ॥२१॥
सर्ग ७

एतेनाऽव्यणराजसंस्थापितं कल्याणनगरमित्यनुमीयते । सम्भवत पूर्वत प्रचलितेय राजधानी त्रैलोक्यमल्लापरनामधेयेनाऽऽहवमल्लदेवेन नूतनाऽऽविष्कारैर्महती शोभा पराध्यंताञ्च नीता भवेत् । संस्थापकस्तु राजाऽव्यणोऽस्तु तत्र न काऽपि विप्रतिपत्ति । अधुनाऽपि कल्याणी तद्गतो महान् दुर्गश्च चालुक्यवनजामार्मधिकारे तिष्ठति ।

पुस्तकस्याऽस्य प्रकाशने श्री शेषराजशर्ममहोदयानां हिन्दूविश्वविद्यालयीयहिन्दूकालेजे नैपालीभाषाध्यापकानामस्मज्ज्येष्ठ भ्रातु स्वर्गीय श्री गङ्गाधरशास्त्रिभारद्वाजस्य प्रियच्छात्राणा, जैवातृकयो श्रीबटुकनाथशास्त्रिखिस्ते साहित्याचार्य एम्० ए०, श्रीबलरामशास्त्रिभारद्वाज साहित्याचार्य-सांख्ययोगेतिहासपुराणशास्त्राचार्य एम्० ए० महाभागयोरपि साहाय्य न विस्मर्तव्यम् । एतेषा योग्यपरामर्शेन यत्र तत्र टीकाया भूमिकायाञ्च शोभाधिक्य समुपस्थितम् । श्रीजगज्जननीसङ्कष्टहरणीपदाम्बुजयोस्तेषामभ्युदय काङ्क्षे । अन्ते श्री लक्ष्मीदास अग्रवाल महोदया हिन्दूविश्वविद्यालयीय-प्रकाशकयन्त्रव्यवस्थापका नितरा धन्यवादार्हा । यैर्न केवल हिन्दूविश्वविद्यालयीयमहत्कार्यव्याप्तेऽपि यन्त्रालये कार्यमेतद्विलम्बेनाऽपि भवतु नाम, पूर्णता नीतमपि तु पुस्तकपरिशोधितभागाना (प्रूफ) अस्मत्प्रेषिताना स्वय यन्त्रालये नयनानयनस्याऽपि महान् कष्ट सोढ इति निवेदयति ।

संवत् २०१९
चैत्र शुक्ल १ गुरौ

विदुषा वशंवदो
भारद्वाजो विश्वनाथशास्त्री

## अष्टमसर्गतस्त्रयोदशसर्गान्तः सर्गषट्कगतः कथासारः ।

### अष्टमसर्गे—

अथ वसन्तकाल एव विक्रमाङ्कदेवेन करहाटपते कन्यायाश्चन्द्रलेखाया अनुपमसौन्दर्ययुक्ताया विवाहार्थं स्वयंवरमहोत्सवोऽचिरादेव भवितेति श्रुतम् । तत्र कविकृत चन्द्रलेखाया नखशिखान्तवर्णनमतीव मनोहरम् । तद्वर्णनप्रसङ्गेनैव महाकविना तस्या वैदग्ध्यगर्वं वर्णयता तस्या वैशिष्ट्यं साधितम् । सर्वमेतत्सम्यक् ज्ञात्वैव विक्रमाङ्कदेवस्तद्विषयिकीमधिका वार्तां श्रोतुकाम कामशरेण ताडितस्तस्यामनुरक्तोऽभूत् ।

### नवमसर्गे—

महाकविश्रीविल्हणविरचितम्

# विक्रमाङ्कदेवचरितम्

---

## अष्टमः सर्गः

समये तत्र पुष्पास्त्रमित्रे विक्रमभूपतेः ।
उद्भूतनूतनाश्चर्या श्रोत्रमैत्रीमगात्कथा ॥१॥

### अन्वयः

तत्र पुष्पास्त्रमित्रे समये उद्भूतनूतनाश्चर्या कथा विक्रमभूपतेः श्रोत्रमैत्रीम् अगात् ।

### व्याख्या

तत्र तस्मिन् पूर्वसर्गवर्णिते पुष्पास्त्रमित्रे पुष्पमेवास्त्रं यस्य स पुष्पास्त्र कामस्तस्य मित्र सुहृत "अथ मित्र सखा सुहृत्" इत्यमर । तस्मि पुष्पास्त्रमित्रे वसन्ते समये काले उद्भूत प्रकटीभूत नूतन नवीनमाश्चर्यं विस्मयो "विस्मयोद्भुतमाश्चर्यं चित्रमपि" इत्यमर । यथा सा उद्भूतनूतनाश्चर्या कथाऽग्रे कथ्यमाना चन्द्रलेखा-कथा विक्रमभूपते विक्रमाङ्कदेवस्य राज्ञ श्रोत्रमैत्रीं श्रोत्रयो कर्णयोर्मैत्री विषयत्वमगात् प्राप । सर्गेऽस्मिन्ननुष्टुप्छन्द —श्लोके षष्ठ गुरु ज्ञेय सर्वत्र लघुपञ्चमम् । द्विचतु पादयोर्ह्रस्व सप्तम दीर्घमन्ययोरिति लक्षणात् ।

### भाषा

उस कामदेव के मित्र वसन्त ऋतु में एक नवीन आश्चर्य उत्पन्न करने वाली बात राजा विक्रमाङ्कदेव के कानों पड़ी ।

कथायाः स्वरूपमाह—

यथास्ति विजयस्तम्भ-प्रशस्तिरिव मान्मथी ।
करहाटपतेः पुत्री त्रिजगन्नेत्रकार्मणम् ॥२॥

अन्वयः

यथा करहाटपतेः पुत्री त्रिजगन्नेत्रकार्मणं मान्मथी विजयस्तम्भ-प्रशस्तिः इव अस्ति ।

व्याख्या

यथा-करहाटपतेः करहाटो[1] देशविशेषस्तस्य पतिस्स्वामी तस्य पुत्री कन्यका त्रिजगन्नेत्रकार्मणं त्रयाणां जगतां भुवनानां समाहारस्त्रिजगत् तस्य नेत्राणि चक्षूंषि तेषां कार्मणं मन्त्रादिना वशीकरणं 'वशक्रिया संवननं मूलकर्म तु कार्मणम्' इत्यमरः । मन्मथस्य कामस्येयमिति मान्मथी कामसम्बन्धिनी विजयस्तम्भ-प्रशस्तिः विजयस्य स्तम्भस्तस्य प्रशस्तिः प्रशंसा इवास्ति । उत्प्रेक्षालङ्कारः ।

भाषा

(उस राजा ने सुना) कि करहाट देश के राजा की कन्या (अपने सौन्दर्य से) तीनों लोकों के मनुष्यों के नेत्रों को वशीभूत करने वाली कामदेव के विजयस्तम्भ की प्रशस्ति के समान है ।

विद्याधरकुमारी सा गौरीदयितशासनात् ।
कृते कस्यापि कुरुते स्वयंवरमहोत्सवम् ॥३॥

अन्वयः

सा विद्याधरकुमारी गौरीदयितशासनात् कस्य अपि कृते स्वयंवर-महोत्सवं कुरुते ।

व्याख्या

सा प्रसिद्धा विद्याधरकुमारी [2]विद्याधरवंशीया कुमारी पुत्री, (चन्दलदेवी-

---

[1] करहाटदेशो दक्षिणभारते 'कह्राड' नाम्ना प्रसिद्धो वर्तते । तत्रस्था एव 'कह्राडे' सञ्ज्ञका दाक्षिणात्यब्राह्मणाः ।

[2] देवयोनिविशेष —विद्याधराप्सरोयक्षरक्षोगन्धर्वकिन्नराः । पिशाचो गुह्यकः सिद्धो भूतोऽमी देवयोनयः । इत्यमरः ।

दत्तजन्मा शिलाहारवंशो विद्याधरोत्पन्नो जात इतीतिहासः ।) गौरीदयितस्य शिवस्य शासनमाज्ञा तस्मात् गौरीदयितशासनात् शिवानुशासनात् कस्यापि उत्कृष्टभाग्यशालिनो युवराजस्य कृते स्वयम्वरमहोत्सवं स्वयंवररूपो महोत्सवस्तं कुरुते रचयति ।

### भाषा

यह विद्याधर से उत्पन्न वंश (चन्देल देवीदत्त से प्रचलित शिलाहार वंश) की कन्या शङ्कर भगवान् की आज्ञा से किसी भाग्यवान् युवराज की प्राप्ति के लिए स्वयंवर महोत्सव कर रही है ।

चन्द्रलेखेति नामास्याश्चन्द्रलेखासमत्विषः ।
मृत्युञ्जयमहामन्त्र-मैत्रीमेति मनोभुवः ॥४॥

### अन्वयः

चन्द्रलेखासमत्विषः अस्याः चन्द्रलेखा इति नाम मनोभुवः मृत्युञ्जय-महामन्त्रमैत्रीम् एति ।

### व्याख्या

चन्द्रलेखासमत्विषः चन्द्रस्य शशिनः लेखा कला तया समा समाना त्विट् कान्तिर्यस्यास्तस्याः तस्याः करहाटदेशनृपसुतायाश्चन्द्रलेखा इति नामाऽभिधानं मनोभुवः मनसो हृदयात् भवतीति मनोभूस्तस्य कामस्य मृत्युञ्जयमहामन्त्रमैत्रीं मृत्युं विनाशं जयतीति मृत्युञ्जयो नाम महामन्त्रः ("त्र्यम्बकं यजामहे" इत्यादि) तस्य मैत्रीं साम्यमेति प्राप्नोति । इयं चन्द्रलेखा अतिशयमनोहरेत्याशयः । यथा मृत्युञ्जयमन्त्रस्तज्जपकर्तुर्मृत्युहारकस्तथैवेयमपि मदनस्य मरणप्रतिबन्धिका अपि तस्य नितरां समुद्दीपनकर्त्रीत्यर्थः ।

### भाषा

चन्द्र की कला के समान विशुद्ध कान्ति वाली इस करहाट देश के राजा की कन्या चन्द्रलेखा का नाम कामदेव के लिए मृत्युञ्जय महामन्त्र के समान है । अर्थात् जैसे मृत्युञ्जय महामन्त्र, जपने वाले की मृत्यु को दूर कर देता है उसी प्रकार चन्द्रलेखा का नाम कामदेव की मृत्यु को दूर कर काम को जीवित अर्थात् समुद्दीपित करने वाला है ।

अन्तरङ्गमनङ्गस्य शृङ्गारकुलदैवतम् ।
अङ्गीकरोति तन्वङ्गी सा विलासमयं वयः ॥५॥

अन्वयः

तन्वङ्गी सा अनङ्गस्य अन्तरङ्गं शृंगारकुलदैवतं विलासमयं वयः अङ्गीकरोति ।

व्याख्या

तन्वङ्गी तनु कृशमङ्गमवयवः यस्यास्सा तन्वङ्गी कृशाङ्गी सा चन्द्रलेखाऽनङ्गस्य कामस्य "कन्दर्पो दर्पकोऽनङ्गः कामः पञ्चशरः स्मरः" इत्यमरः । अन्तरङ्गमात्मीयं शृङ्गारकुलदैवतं शृङ्गारस्य शृङ्गाराख्यरसस्य कुलदैवतं वंशपरम्परामान्येष्टदेवस्वरूपं विलासमयं वयस्तारुण्यमङ्गीकरोति स्वीकुरुते । सा तारुण्ये पदं चकारेत्यर्थः । अनुप्रासाऽलङ्कारः ।

भाषा

कृशाङ्गी वह चन्द्रलेखा कामदेव की आत्मीय और शृङ्गाररस की परम्परागत इष्ट देवता स्वरूपिणी, रसभरी युवावस्था को प्राप्त हुई है ।

अथ चन्द्रलेखायाश्चरणा[1]दिकेशान्तसौंदर्यवर्णनं प्रक्रमते कविः—

तस्याः पादनखश्रेणिः शोभते लटभभ्रुवः ।
रत्नावलीव लावण्य-रत्नाकरसमुद्गता ॥६॥

अन्वयः

लटभभ्रुवः तस्याः पादनखश्रेणिः लावण्यरत्नाकरसमुद्गता रत्नावली इव शोभते ।

व्याख्या

लटभे सुन्दर्यौ भ्रुवौ यस्याः सा लटभभ्रूस्तस्याः लटभभ्रुवस्सुन्दरभ्रुवस्तस्याश्चन्द्रलेखायाः पादनखानां चरणनखानां श्रेणिः पंक्तिः "वीथ्यालिरावलिः पंक्तिः श्रेणी लेखास्तु राजयः" इत्यमरः । पादनखश्रेणिः लावण्यस्य सौन्दर्यस्य रत्नाकरः समुद्रस्तस्मात्समुद्गता निर्गता लावण्यरत्नाकरसमुद्गता रत्नावली रत्नश्रेणिरिव शोभते विद्योतते ।

---

[1] 'मानवा मौलितो वर्ण्या देवाश्चरणतः पुनः' इति कविनियमादस्याश्च विद्याधरवंशसम्भूतत्वात्पादादिवर्णनमेव समुचितम् ।

### भाषा

सुन्दर भौंवो वाली उस चन्द्रलेखा के चरणों के नखों की कतार, सौंदर्यरूपी समुद्र से निकले रत्नों की कतार के समान शोभित होती थी। अर्थात उसके पादनख रत्नों की कान्ति के समान कान्तिवाले थे।

**स्तनभारोऽत्र वक्त्रेन्दु-चन्द्रिकावरणं मम ।**
**इति तत्पादयोर्लग्ना वेद्मि प्राङ्गणपद्मिनी ॥७॥**

### अन्वयः

प्राङ्गणपद्मिनी अत्र स्तनभारः मम वक्त्रेन्दुचन्द्रिकावरणम् इति (हेतोः) तत्पादयोः लग्ना (इत्यहं) वेद्मि ।

### व्याख्या

प्राङ्गणपद्मिनी प्राङ्गणस्याङ्गणभूमे "अङ्गणं चत्वराजिरे" इत्यमरः । पद्मिनी कमलिनी स्थलकमलिनी अत्र चरणयोः स्तनभारः कुचसम्भारः मम मत्कृते वक्त्रेन्दुचन्द्रिकावरणं वक्त्रं मुखमेवेन्दुश्चन्द्रस्तस्य चन्द्रिका ज्योत्स्ना "चन्द्रिका कौमुदी ज्योत्स्ना" इत्यमरः । तस्याः आवरणं निरोधकः, स्थूलोन्नतस्तनभारव्यवधानेन चन्द्रलेखामुखचन्द्रकौमुदी ममोपरि नाऽऽपततीति हेतोः स्वाभाविकशत्रोश्चन्द्रस्य निवारणं सञ्जातम् इति हर्षातिशयप्रकाशनाय कृतज्ञताप्रकटनाय च तत्पादयोश्चन्द्रलेखाचरणयोर्लग्ना संश्लिष्टेत्यहं वेद्मि मन्ये । अरुणत्वसाधर्म्यात्प्राङ्गणपद्मिन्यास्तत्पादयोरुत्प्रेक्षा हेतूत्प्रेक्षेति ।

### भाषा

स्थलकमलिनी यह सोचकर की चन्द्रलेखा के विशाल कुचों के कारण चन्द्रलेखा के मुखचन्द्र की चाँदनी मेरे ऊपर न पड़गी और मैं सदैव विकसित ही रहूँगी ( क्योंकि चाँदनी में कमलिनी नही खिलती ) इस कारण से मानो उसके चरणो में लीन थी ऐसा मैं समझता हूँ। अर्थात् उसके चरण लाल स्थलकमलिनी के समान थे।

**अमूल्यस्य मम स्वर्ण-तुलाकोटिद्वयं कियत् ।**
**इति कोपादिवाताम्रं पादयुग्मं मृगीदृशः ॥ ८ ॥**

अन्वयः

अमूल्यस्य मम स्वर्णतुलाकोटिद्वयं कियत् इति कोपात् इव मृगीदृशः पादयुग्मम् आताम्रम् ( इत्यहं मन्ये ) ।

व्याख्या

अमूल्यस्यानर्घस्य मम चरणद्वयस्य स्वर्णतुलाकोटिद्वयं स्वर्णस्य कनकस्य तुलाकोटी नूपुरो "पादाङ्गदं तुलाकोटिर्मञ्जीरो नूपुरोऽस्त्रियाम्" इत्यमरः । तयोर्द्वयं युग्मं यद्वा स्वर्णतुलायास्सुवर्णरूपस्य तुलामानस्य कोटियुग्मं कियत् किंप्रमाणमत्यल्पमान भवतीति मानसिकापमानजन्यकोपाविर्भावादिव मृगीदृशः हरिणीदृशस्तस्याः नायिकायाः पादयुग्ममाताम्रमारक्तमित्यहं मन्ये । श्लेषानुप्राणिता हेतूत्प्रेक्षालङ्कारः ।

भाषा

अनमोल हम दोनों चरणों की तुलना में ये दोनों सोने के पैंजेव या दो करोड तोले सोना क्या चीज है ऐसे मानसिक अपमानजनित क्रोध से मानो उस मृगनयनी के चरण युगल लाल हो गये थे ऐसा मैं समझता हूँ । अर्थात् उसके दोनों चरण रक्तवर्ण के थे ।

तत्पादनखरत्नानां यदलक्तकमार्जनम् ।
इदं श्रीखण्डलेपेन पाण्डुरीकरणं विधोः ॥ ९ ॥

अन्वयः

यत् तत्पादनखरत्नानाम् अलक्तकमार्जनम् इदं श्रीखण्डलेपेन विधोः पाण्डुरीकरणम् ।

व्याख्या

यत् तत्पादनखरत्नानां तस्याश्चन्द्रलेखायाः पादयोर्नखाः पुनर्भवा "पुनर्भवः करुहो नखोऽस्त्री नखरोऽस्त्रियाम्" इत्यमरः । एव रत्नानि तेषामलक्तकेन लाक्षया "राक्षा लाक्षा जतु क्लीबे यावो ऽलक्तो द्रुमामयाः' इत्यमर । मार्जनं लेपनमिदं श्रीखण्डस्य चन्दनस्य लेपस्तेन श्रीखण्डलेपेन चन्दनद्रवेण विधोश्चन्द्रस्य पाण्डुरीकरणं, प्रकृत्या शुक्लस्यापि पुनः शुक्लीकरणम् । वाक्यार्थरूपकाऽलङ्कारः ।

भाषा

उसके पाँव के नख रूपी रत्नों का जो अलता लगाकर लाल करना है वह श्वेत चन्दन के रस से चन्द्रमा का श्वेत करना मात्र है। अर्थात् स्वभावतः ही जो श्वेत है उसको चन्दन लगाकर श्वेत करना जैसा व्यर्थ है वैसे ही स्वभावतः रक्तवर्ण नखों को अलता लगाकर लाल बनाना भी व्यर्थ है।

जाग्रतः कमलाल्लक्ष्मीं यज्जग्राह तदद्भुतम्।
पादद्वन्द्वस्य मत्तेभ-गतिस्तेये तु का स्तुतिः ॥१०॥

अन्वय

जाग्रतः कमलात् लक्ष्मीं यत् जग्राह तत् अद्भुतम्। पादद्वन्द्वस्य मत्तेभगतिस्तेये तु का स्तुतिः।

व्याख्या

जाग्रतः निद्रारहितात्सावधानात् ( सन्यग्र प्रफुल्लात् ) कमलात् पद्मात् लक्ष्मीं शोभां यत् जग्राह गृहीतवत् तत् अद्भुतमत्याश्चर्यकरम्। पादद्वन्द्वस्य चरणयुग्मस्य, मत्तस्य मदान्धस्य प्रमत्तस्येभस्य गजस्य "मतङ्गजो गजो नागः कुञ्जरो वारणः करी। इभ स्तम्बेरम पद्मी" इत्यमरः। गतेर्गमनविलासस्य स्तेयेऽपहरणकर्मणि तु का स्तुतिः कियती प्रशंसा न काऽपीति। तच्चौर्यकला-कौशलम्। तस्याः पादद्वयं कमलमिव शतिगजस्येवेत्यर्थः। श्लेषानुप्राणि-तोऽर्थापत्तिरलङ्कारः।

भाषा

उस चन्द्रलेखा के चरणद्वन्द्व ने सावधान अर्थात् विकसित कमल से जो शोभा ले ली वह आश्चर्यकारक है किन्तु उन्होंने जो मत्त हाथी की चाल चुराली इसमें उनकी क्या प्रशंसा की जा सकती है। अर्थात् उसके चरण, कमल के ऐसे और चाल, हाथी के ऐसी थी।

अत्यपूर्वस्य रागस्य पूर्वपक्षाय पल्लवाः।
पद्मानि पादयुग्मस्य प्रत्युदाहरणानि च ॥११॥

अन्वयः

पल्लवाः अत्यपूर्वस्य रागस्य पूर्वपक्षाय पद्मानि पादयुग्मस्य प्रत्युदाहरणानि च ॥

व्याख्या

पल्लवाः किसलयानि "पल्लवोऽस्त्री किसलयं विस्तारो विटपोऽस्त्रियाम्" इत्यमरः। अस्याः पूर्वस्याऽद्वितीयस्य रागस्य चरणरक्तिम्नः पूर्वपक्षाय तिरस्काराय भवन्ति। पद्मानि कमलानि "वा पुंसि पद्मं नलिनमरविन्दं महोत्पलम्" इत्यमरः। पादयुग्मस्य चरणयुगलस्य प्रत्युदाहरणानि च खण्डनीयानि च। पादवैशिष्ट्यतुलनाया पल्लवाः पद्मानि च स्यातुं न शक्नुवन्तीत्यर्थः। अत्र प्रतीपमलङ्कारः।

भाषा

उसके अनुपम चरणो की लाली के सामने नूतन लाल २ पत्ते तिरस्करणीय हैं और उसके दोनो चरणो की तुलना मे कमलो की कोई गिनती नही है। अर्थात उसके चरणद्वन्द लाल पत्तों के लाल रंग से तथा कमलो की शोभा से बढकर है।

दृश्यन्ते मानसोत्तंसा राजहंसाः क्वचिद्यदि।
गतौ चरणयोस्तस्याः प्रेक्ष्यते यावदन्तरम् ॥१२॥

अन्वयः

यदि क्वचित् मानसोत्तंसाः राजहंसाः दृश्यन्ते ( तर्हि ) तस्याः चरणयोः गतौ यावत् अन्तरं प्रेक्ष्यते।

व्याख्या

यदि क्वचित्कुत्रचित् मानसोत्तंसा मानसस्य मानससरोवरस्य उत्तंसा विभूषणानि "पुंस्युत्तंसावतंसौ द्वौ कर्णपूरे च शेखरे" इत्यमरः। राजहंसाः राजमरालाः "राजहंसास्तु ते चञ्चुचरणैर्लोहितैस्सिताः" इत्यमरः। दृश्यन्तेऽवलोक्यन्ते तर्हि तस्याश्चन्द्रलेखायाश्चरणयोः पादयोः गतौ गमनविलासे यावत् सकलमन्तरं भेदः प्रेक्ष्यते-ज्ञायते। "यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे" इत्यमरः। अत्र सम्भावनानामालङ्कारः। काव्यप्रकाशमते त्वत्रातिशयोक्तिभेदः।

भाषा

यदि कदाचित् कहीं मानसरोवर के आभूषण रूप अर्थात् मानस सरोवर को सुशोभित करने वाले राजहंस दिखलाई पड़ें तो इसके चरणों की गति में

और उनकी गति में कितना अन्तर है, इसका पता चल सकता है। अर्थात् सम्भवतः उसकी चाल हंसो की गति से भी बढकर है।

नितम्बपीड्यमानेन पादयुग्मेन सुभ्रुवः।
कृता भ्रुकुटिभङ्गीव नीलनूपुरमालया ॥१३॥

अन्वयः

सुभ्रुवः नीलनूपुरमालया नितम्बपीड्यमानेन पादयुग्मेन भ्रुकुटिभङ्गी इव कृता।

व्याख्या

सुष्ठु भ्रुवौ यस्यास्सा तस्यास्सुभ्रुवः चन्द्रलेखायाः नीलनूपुरमालया नीलमणि-नूपुरमालाव्याजेन श्याममञ्जीरश्रेणिछद्मना नितम्बपीड्यमानेन नितम्बेन श्रोणिभारेण "पश्चान्नितम्बः स्त्रीकट्याः" इत्यमरः ॥ पीड्यमानं कदर्थ्यमानं पादयोर्युग्मं तेन पादयुग्मेन चरणयुगलेन भ्रुकुटिभङ्गी भ्रुकुटिरचना इव कृता निर्मिता। स्थूलनितम्बयोर्भारातिशयधारणे महत्प्रयासात्कदर्थ्यमानेन चरणयुगलेन कोपात् कृता भ्रुकुटिरचना इव, नीलनूपुरमालापादयुग्मे धारितेत्यर्थः। हेतूत्प्रेक्षालङ्कारः।

भाषा

सुन्दर भौंवो वाली चन्द्रलेखा के नीले रंग के (नीलमणि जड़े हुए) पैजेब के मिष से मानो उसके भारी नितम्ब (कटि भाग) के बोझ से पीडित उसके दोनो चरण क्रोध से भौंवें चढा रहे थे।

हेममञ्जीरमालाभ्यां भाति जङ्घालताद्वयम्।
कृतालवालं वाल्लभ्यात् कुङ्कुमेनेव सुभ्रुवः ॥१४॥

अन्वयः

सुभ्रुवः जङ्घालताद्वयं हेममञ्जीरमालाभ्यां कुङ्कुमेन वाल्लभ्यात् कृतालवालम् इव भाति।

व्याख्या

सुभ्रुवः चन्द्रलेखायाः जङ्घालताद्वयं जङ्घे एव लते सौकुमार्यातिशयात् श्लक्ष्णत्वाच्च तयोर्द्वयं युगलं हेममञ्जीरमालाभ्यां हेम्नःसुवर्णस्य मञ्जीराः

नूपुरास्तेषां माले ताभ्यां जङ्घयोर्धारिताभ्यां तद्व्याजेन कुङ्कुमेन केसरेण वाल्लभ्यात् वल्लभस्य भावस्तस्मादतिप्रेम्णा कृतमालवालं "स्यादालवालमावालमावाप." इत्यमरः। यस्य तत् कृतालवालमिव भाति। लतायास्संरक्षणार्थं पशूनां संचरणात् भक्षणाद्वा जलसेकद्वारा भरणार्थं वा यथा जनैः स्नेहात् आलवालं निर्मीयते तथैव कुङ्कुमेन जङ्घालताया अभितः आलवालं विहितम्। नैव काञ्चनी मञ्जीरमाला जङ्घयोरिति भावः।

भाषा

सुन्दर भौंवों वाली चन्द्रलेखा के ोने के पैंजेबों के मिष से मानो उसके दोनों जंघा रूपी लताओं का केसर से थाला बनाया गया हो ऐसा मालूम होता है। अर्थात् जैसे थाला बनाने से उसमें पानी ठहर कर लता को पुष्ट करता है और पशुओं से भी उसकी रक्षा होती है, वैसे ही उसकी जंघाओं को पुष्ट करने के लिये केसररूपी मिट्टी से थाला बनाया गया हो ऐसा मालुम होता है।

लम्भिताः कदलीस्तम्भास्तदूरुभ्यां पराभवम्।
अत्यन्तमृदुभिर्लब्धो जडैः क्व जयडिण्डिमः ॥१५॥

अन्वयः

कदलीस्तम्भाः तदूरुभ्यां पराभवं लम्भिताः। अत्यन्तमृदुभिः जडैः जयडिण्डिमः क्व लब्धः।

व्याख्या

कदलीनां स्तम्भाः कदलीस्तम्भास्तदूरुभ्या तस्या ऊरू तदूरू ताभ्यां पराभवं पराजयं लम्भिताः प्रापिताः। अत्यतमृदुभिरतिकोमलैः स्वभावतस्सरलैश्च जडैः शीतलैः "शीतं गुणे तद्वदर्थाः सुषीमः शिशिरो जडः" इत्यमरः। मन्दैः मुर्खैरित्यर्थः जयडिण्डिमो विजयदुन्दुभिघोषः क्व लब्धोऽर्जितः, न क्वापीत्यर्थः। अर्थापत्तिरलङ्कारः।

भाषा

इसके दोनों ऊरुओं से केले के खम्बे पराजित कर दिये गये थे। अत्यंत कोमल या सीधे साधे तथा ठण्डे या मुर्खों से विजयदुन्दुभी का घोष कहीं भी प्राप्त नहीं किया जा सकता। अर्थात् उसके ऊरु, केले के खम्भे से भी अधिक सुन्दर थे।

मन्ये तदूरू सम्भाव्य हस्तसर्वस्वहारिणौ ।
वहन्त्यस्पृश्यताहेतोर्मातङ्गत्वं मतङ्गजाः ॥१६॥

अन्वयः

मतङ्गजाः तदूरू हस्तसर्वस्वहारिणौ सम्भाव्य अस्पृश्यताहेतोः मातङ्गत्वं वहन्ति (इत्यहं) मन्ये ।

व्याख्या

मतङ्गजाः करिणः "मतङ्गजो गजो नागो द्विरदोऽनेकपो द्विपः" इत्यमरः । तस्या ऊरू तदूरू चन्द्रलेखाया ऊरू हस्तसर्वस्वहारिणौ हस्तानां कराणां करिशुण्डादण्डानां सर्वस्वं स्पर्शकरणक्षमत्वरूपगुणं स्थूलत्ववर्तुलत्वादिगुणञ्च हरतः इति हस्तसर्वस्वहारिणौ "सुप्यजातौ णिनिस्ताच्छील्ये" इति णिनिः । सम्भाव्य विचार्यास्पृश्यताहेतोः स्पर्शासहत्वकारणेन मातङ्गत्वं चाण्डालत्वं गजत्वं वा वहन्ति धारयन्ति । चाण्डालो यथा पापकार्यकरणादस्पृश्यस्तथैव गजोऽपि अस्पृश्यतया ( स्पर्शायोग्यतया ) मातङ्गत्वं (चाण्डालत्वं) भेजे । इत्येवमहं मन्ये तर्कयामि ।

भाषा

हस्ती, उसके दोनों ऊरुओं को अपनी सूंड के, स्पर्श करने की योग्यता के गुण तथा स्थूलता तथा सुडौल होने आदि के सभी गुणों को हरण करने वाले समझ कर गजता या चाण्डालता को धारण करते हैं। अर्थात् चाण्डाल जैसे पापादि करने से अस्पृश्य हो जाता है वैसे ही हाथी अपनी सूंड का सर्व सौन्दर्य तथा स्पर्श गुण उसके ऊरुओं से अपहरण किये जाने से मातङ्गत्व अर्थात् चण्डालत्व को प्राप्त हो गए ।

नितम्बबिम्बं बिम्बोष्ठी चन्द्रकान्तशिलाघनम् ।
धत्ते कन्दर्पदोःस्तम्भ-प्रशस्तिफलकोपमम् ॥१७॥

अन्वयः

बिम्बोष्ठी चन्द्रकान्तशिलाघनं कन्दर्पदोःस्तम्भप्रशस्तिफलकोपमं नितम्बबिम्बं धत्ते ।

व्याख्या

बिम्बवदोष्ठौ यस्यास्सा बिम्बौष्ठी रक्तोष्ठी चन्द्रलेखा चन्द्रकान्तशिलेव चन्द्रकान्तमणिनिर्मितशिलेव घन सान्द्र शैत्यात् श्लक्ष्णत्वाच्च, कन्दर्पस्य कामस्य दो स्तम्भयोर्भुजस्तम्भयो "भुजबाहू प्रवेष्टो दो स्यात्कफोणिस्तु कूर्पर" इत्यमर । प्रशस्ति प्रशसा तस्या (तल्लेखस्य) फलक काष्ठफलक तेनोपमा सादृश्य यस्य तत् कन्दर्पदो स्तम्भप्रशस्तिफलकोपम नितम्बबिम्ब श्रोणिमण्डल धत्ते धारयति । तस्या नितम्बबिम्ब विस्तृत घन शीत श्लक्ष्णञ्चेति भाव ।

भाषा

बिम्ब ( कुन्द्र ) के फल के समान लाल ओठ वाली चन्द्रलेखा, चन्द्रकान्त मणि के समान चिकनी चमकदार ठोस और कामदेव के भुजस्तम्भ की प्रशस्ति ( प्रशस्ति लेख ) के समान नितम्बबिम्ब से शोभित थी ।

विस्तारिणा मुहुस्तस्याः श्रोणिबिम्बेन पीडिता ।
त्रुटिता त्रुटितास्मीति फूत्करोतीति मेखला ॥ १८ ॥

अन्वयः

तस्याः विस्तारिणा श्रोणिबिम्बेन मुहुः पीडिता मेखला त्रुटिता त्रुटिता अस्मि इति फूत्करोति इति ।

व्याख्या

तस्याश्चन्द्रलेखाया विस्तारिणा परिणाहिना श्रोणिबिम्बेन कटिमण्डलेन "बिम्बोऽस्त्री मण्डल त्रिषु" इत्यमर । मुहुर्वारम्वार पीडिता बाधिता मेखला काञ्ची "स्त्रीकट्या मेखला काञ्ची सप्तकी रशना तथा" इत्यमर । त्रुटिता त्रुटिता छिन्ना अस्मीति हेतो फूत्करोति पीडया फूत्कार करोतीति । अन्योऽपि जनोऽतिपीडया फूत्कारशब्देन दुख प्रकाशयति । अत्रोत्प्रेक्षाऽलङ्कार ।

भाषा

उस चन्द्रलेखा के विस्तीर्ण नित्य बढने वाले कटिभाग से बार-बार पीडित करधनी, अरे मैं टूटी-टूटी ऐसा मानो पीडा से शब्द कर रही थी । अर्थात् उसकी करधनी नित्य कटिभाग के विस्तीर्ण होते रहने से कसी जाकर टूटन की आशंका से शब्दायमान थी ।

अपर्याप्तभुजायामः सखेदोऽस्याः सखीजनः ।
श्रोण्यां कथञ्चित्कुरुते रशनादामबन्धनम् ॥ १९ ॥

अन्वयः

अस्याः अपर्याप्तभुजायामः सखीजनः सखेदः (सन्) (अस्याः चन्द्रलेखायाः) श्रोण्यां रशनादामबन्धनं कथञ्चित् कुरुते ।

व्याख्या

अपर्याप्तभुजायामः अपर्याप्तः अपरिपूर्णः भुजयोर्बाह्वोरायामो दैर्घ्यं "दैर्घ्यमायाम आनाहः" इत्यमरः । यस्य सः सखीजनः खेदेन सहितः सखेदः सक्लतिकाठिन्येन, भुजयोरायामे परिपूर्णत्वाभावादित्यर्थः । श्रोण्यां कटिप्रदेशे रशनादाम काञ्चो तस्य बन्धनं कथञ्चित् कृच्छ्रात् कुरुते । असम्बन्धेऽतिशयोक्तिरलङ्कारः ।

भाषा

उसकी कटी में चारो ओर से पहुँचने में छोटी पड़ने वाली भुजाओं से युक्त सखियाँ, बड़ी मुश्किल से उस चन्द्रलेखा की कटी में किसी प्रकार करधनी बाँधने में समर्थ होती थीं ।

अनङ्गरङ्गपीठोऽस्याः शृङ्गारस्वर्णविष्टरः ।
लावण्यसारसंघातः सा घना जघनस्थली ॥ २० ॥

अन्वयः

अस्याः सा घना जघनस्थली अनङ्गरङ्गपीठः शृङ्गारस्वर्णविष्टरः लावण्यसारसंघातः (अस्ति) ।

व्याख्या

अस्याश्चन्द्रलेखायाः सा प्रसिद्धगुणयुक्ता घना निबिडा जघनस्थली नितम्बपुरोभागः "पश्चान्नितम्बः स्त्रीकट्याः क्लीबे तु जघनं पुरः" इत्यमरः । अनङ्गस्य कामस्य रङ्गपीठः रङ्गक्रीडाभूमिः, शृङ्गारस्य स्वर्णनिर्मितो विष्टर आसन "विष्टरो विटपी दर्भमुष्टिः पीठाद्यमासनम्" इत्यमरः । शृङ्गारस्य रसराजस्य कृते सौवर्णं सिंहासनं, लावण्यस्य सौन्दर्यस्यापूर्वस्य सारः श्रेष्ठो भागस्तस्य संघातः समूहः "स्तोमौघनिकरव्रातवारसंघातसञ्चयाः" इत्यमरः । मालारूपकालङ्कारः ।

भाषा

इस चन्द्रलेखा का, ठोस जघनस्थल कामदेव का रङ्गमञ्च, शृङ्गाररस का सोने का आसन और सुन्दरता के सारभाग का समूह है।

तन्नितम्बस्य निन्दन्ति वृद्धिं परिजनाङ्गनाः ।
काञ्चीनवनवग्रन्थि-ग्रथनेन कदर्थिताः ॥ २१ ॥

अन्वयः

काञ्चीनवनवग्रन्थिग्रथनेन कदर्थिताः परिजनाङ्गनाः तन्नितम्बस्य वृद्धिं निन्दन्ति ।

व्याख्या

काञ्चीनवनवग्रन्थिग्रथनेन काञ्च्या रशनाया नवा नवा ग्रन्थयो नवीना नवीना ग्रन्थय सन्धिगुम्फनानि तद्ग्रथनेन योजनेन कदर्थिता व्याकुला परिजनाङ्गना परिचारिकास्तस्याश्चन्द्रलेखाया नितम्बस्य श्रोण्या वृद्धिं स्थूलत्वस्याभिवर्धनं निन्दन्ति न सुखेन सहन्ते । नितम्बस्य स्थौल्यात्पूर्वपूर्वबद्धग्रन्थिभङ्गेनाभिनवाभिनवग्रथनं कुर्वन्तीति वृत्तान्तस्य पौनःपुन्येन जायमानत्वादतीवाऽऽयस्ता नितम्बस्यातिवृद्धिं निन्दया योजयन्तीत्यर्थः । अतिशयोक्तिरलङ्कारः ।

भाषा

उसकी करधनी में बार बार गाँठ बाँधने से थकी उसकी सखियाँ उसके नितम्ब के (अहर्निश) बढाव की निन्दा करती थी। अर्थात् रोज-रोज बढने वाले उसके नितम्ब के कारण उसकी करधनी टूट जाती थी। सखियाँ उसकी गाँठ बाँधते बाँधते थककर उसके नितम्ब के बढते जाने की निन्दा किया करती थी।

नितम्बगौरवेणासौ गौराङ्गी खिद्यते दृढम् ।
हारयत्यपरिस्पन्दा कन्दुकं क्रीडितेषु यत् ॥२२॥

अन्वयः

असौ गौराङ्गी नितम्बगौरवेण दृढं खिद्यते यत् क्रीडितेषु अपरिस्पन्दा कन्दुकं हारयति ।

व्याख्या

असौ गौराङ्गी धवलशरीरा चन्द्रलेखा नितम्बगौरवेण नितम्बस्य पश्चात्कटिभागस्य (निभृतं तम्यते कामुकैरिति नितम्बः) गौरवं गुरुत्वं स्थूलत्वातिशयस्तेन दृढमत्यन्त खिद्यत आयासं प्राप्नोति, गमनेऽतिमान्द्यमाश्रयति । यत् यतः (यस्मात्कारणात्) क्रीडितेषु क्रीडाविलासेष्वपरिस्पन्दा स्तम्भितगतिः कन्दुकं "गेन्दुकः कन्दुको" इत्यमरः । हारयति सखीजनैः स्वसान्निध्यं प्रापयति, स्वयमाहरणेऽसामर्थ्यादिति भावः । अत्रानुमानालङ्कारः ।

भाषा

यह गौर शरीर वाली चन्द्रलेखा नितम्ब के बोझे से बहुत दुःख का अनुभव करती है। क्योंकि गेंद खेलने में हिलडुल न सकने के कारण उसे सखियों से गेंद मंगवाना पड़ता है।

तदीयजघनाभोग-गरिमा विस्मयास्पदम् ।
दूरापाती पृषत्कोऽभूत् येनानङ्गस्य साङ्गना ॥२३॥

अन्वयः

तदीयजघनाभोगगरिमा विस्मयास्पदं येन सा अङ्गना अनङ्गस्य दूरापाती पृषत्कः अभूत् ।

व्याख्या

तदीयजघनाभोगगरिमा तस्या इदमिति तदीयं जघनं नितम्बपुरःप्रदेशः तस्याऽऽभोगो विस्तारः "आभोगः परिपूर्णता" इत्यमरः । तस्य गरिमा गौरव महत्व वा विस्मयास्पद विस्मयस्याश्चर्यस्यास्पदं स्थान "प्रतिष्ठाकृत्यमास्पदम्" इत्यमरः । अवश्यमेवास्ति । येन कारणेन साऽङ्गना चन्द्रलेखा अनङ्गस्य कामस्य दूरापाती दूरदेशपर्यन्तगमनशीलः पृषत्को बाण "पृषत्कबाणविशिखा अजिह्मगखगाशुगाः" इत्यमरः । अभूत् । अङ्गनायां बाणत्वारोपात् रूपकमलङ्कारः ।

भाषा

उसके जघन स्थल के विस्तार का महत्व आश्चर्य कारक है। जिस कारण से वह नारी चन्द्रलेखा कामदेव के दूर से मारे जाने वाले बाण का काम करती थी। अर्थात् दूर ही से उसके जघन स्थल का वर्णन सुनकर कामुक कामासक्त हो जाते थे।

नाभिरन्ध्रं प्रविष्टास्याः श्यामला रोमवल्लरी ।
त्रस्ता तिमिरलेखेव मेखलामणिकान्तितः ॥२४॥

अन्वयः

अस्याः नाभिरन्ध्रं प्रविष्टा श्यामला रोमवल्लरी मेखलामणिकान्तितः त्रस्ता तिमिरलेखा इव ( प्रतीयते )

व्याख्या

अस्याश्चन्द्रलेखाया नाभिरन्ध्रं नाभिरूपबिलं "अथ कुहरं सुषिरं विवरं बिलम् । छिद्रं निर्व्यथनं रोकं रन्ध्रं श्वभ्रं वपा सुषिः" इत्यमरः । प्रविष्टा प्रयाता रोमवल्लरी रोमलता मेखलामणिकान्तितः रशनासंनिविष्टमणिसम्बन्धि-द्युतेस्त्रस्ता भीता (पलायितासती) तिमिरलेखा तमसा रेखा "अन्धकारोऽस्त्रियां ध्वान्तं तमिस्रं तिमिरं तमः" इत्यमरः । पंक्तिरिव (प्रतीयते) उत्प्रेक्षालङ्कारः ।

भाषा

उस चन्द्रलेखा के नाभी के छिद्र तक फैली हुई रोएँ की कतार मानो करधनी में जड़े मणिओं की रोशनी से डर कर भागी हुई अन्धकार की रेखा ही नाभी रूपी बिल में छिपने के लिये गई हो ऐसी प्रतीत होती थी ।

भाति रोमावली तस्याः पयोधरभरोन्नतौ ।
जाता रत्नशलाकेव श्रोणिवैदूर्यभूमितः ॥२५॥

अन्वयः

तस्याः रोमावली पयोधरभरोन्नतौ श्रोणिवैदूर्यभूमितः जाता रत्नशलाका इव भाति ।

व्याख्या

तस्याश्चन्द्रलेखाया रोमावली रोमपंक्तिः पयोधरयोः स्तनयोः "पयोधरः कोषकारे नारिकेले स्तनेऽपि च" इति मेदिनी । भरस्य भारस्य उन्नतौ समुन्नतौ सत्यां पक्षे मेघपंक्तिसमुन्नतौ सत्यां श्रोणिः कटिप्रदेश एव वैदूर्यभूमिः मरकतभूमिस्तस्यास्सकाशात् जाता उत्पन्ना रत्नानां शलाका इव मरकतसदृशस्त्नाङ्कुरा इव भाति प्रतीयते । मेघशब्देन वैदूर्यभूमे रत्नशलाका समुत्पद्यते । यथा च कालिदासः—विदूरभूमिर्नवमेघशब्दादुद्भिन्नया रत्नशलाकयेव ।

भाषा

चन्द्रलेखा की रोमपक्ति उसके स्तनो की विशालता के बढते रहने से पद में मेघो के आधिक्य के उपस्थित होने से अर्थात् अधिक मेघ आने से कटि रूपी वैदूर्यभूमि से उत्पन्न रत्नाङ्कुरों के समान शोभित होती थी। मेघो के आने पर वैदूर्यभूमि से रत्नाङ्कुर निकल आते हैं ऐसी कवि प्रसिद्धि है।

नाभिसङ्गेन गौराङ्ग्याः शोभते रोममञ्जरी।
कन्दर्पहेमकटकाल्लाक्षाधारेव निर्गता ॥२६॥

अन्वयः

गौराङ्ग्याः रोममञ्जरी नाभिसङ्गेन कन्दर्पहेमकटकात् निर्गता लाक्षाधारा इव शोभते।

व्याख्या

गौराण्यङ्गानि यस्यास्सा गौराङ्गी तस्याः गौराङ्ग्याः शुभावयवायाः रोममञ्जरी रोमाण्येव मञ्जरी, नाभिसङ्गेन नाभेस्सङ्गस्सम्बन्धस्तेन कन्दर्पस्य कामस्य हेम्नस्सुवर्णस्य कटक वलय. "आवापक. पारिहार्यः कटको वलयोऽस्त्रियाम्" इत्यमरः। कङ्कणमिति यावत् तस्मात्, निर्गता स्रुता लाक्षाधारा जतुप्रवाहः "राक्षा लाक्षा जतु क्लीबे" इत्यमरः। इव शोभते विद्योतते। सुवर्णकङ्कणमध्ये लाक्षा प्रविष्टा भवतीति लोके दृश्यते। उत्प्रेक्षालङ्कारः।

भाषा

### व्याख्या

सुभ्रुवः सुन्दरभ्रूलतायाश्चन्द्रलेखाया नाभीवलयेन नाभीमण्डलेन सम्बद्धा संसक्ता रोमाली केशपंक्तिर्निगडेन लोहबन्धनेन "अथ शृङ्खला। अन्दुको निगडोऽस्त्री स्यात्" इत्यमरः। (बेड़ीति नाम लोके प्रसिद्धम्) सहिता युता स्मरदन्तिनः स्मरः काम एव दन्ती गजस्तस्य शृङ्खला बन्धनशृङ्खला "शृङ्खला पुंस्कटो काञ्च्यां लोहरज्जौ च बन्धने" इति हैमः। इव भाति। उपमालङ्कारः।

### भाषा

अच्छी भौंवों वाली चन्द्रलेखा के गोल नाभिमण्डल से सम्बन्धित उसकी रोमावली, मानो कामदेव रूपी हाथी के पाँव बाँधने की बेड़ी से युक्त लोहे की सिकड़ी हो ऐसी शोभित होती थी।

**रोमावली विलासिन्याः प्रविष्टा नाभिमण्डलम्।**
**कियद्गाम्भीर्यमत्रेति तात्पर्यमिव बिभ्रती ॥२८॥**

### अन्वयः

विलासिन्याः नाभिमण्डलं प्रविष्टा रोमावली अत्र कियत् गाम्भीर्यम् इति तात्पर्यं बिभ्रती इव (भाति)

### व्याख्या

विलासिन्याः विलासवत्याः नाभिमण्डलं नाभिकुहरं प्रविष्टा संलग्ना रोमावली केशपंक्तिरत्र नाभौ कियत्प्रमाणं गाम्भीर्यं गभीरत्वं निम्नत्वं वा "निम्नं गभीरं गम्भीरमुत्तानं तद्विपर्यये" इत्यमरः। इति तात्पर्यमभिलायं बिभ्रती धारयन्ती जिज्ञासमानेत्यर्थः। इव (भाति) अत्रोत्प्रेक्षालङ्कारः।

### भाषा

विलासिनी चन्द्रलेखा के नाभिमण्डल में घुसी हुई रोमावली, नाभी कितनी गहरी है इसका पता लगाने के लिए मानो उसमें प्रविष्ट हुई हो, ऐसी शोभित होती थी।

**स्तनौ तुङ्गौ समारूढे चापन्यस्तभरे स्मरे।**
**कोदण्डादनिमुद्रेव जाता नाभी नतभ्रुवः ॥२९॥**

### अन्वयः

नतभ्रुवः नाभी चापन्यस्तभरे स्मरे तुङ्गौ स्तनौ समारूढे (सति) जाता कोदण्डाटनिमुद्रा इव (प्रतीयते)

### व्याख्या

नतभ्रुवः नते सन्नते (अधोबहिश्च किंचिन्निर्गते) भ्रुवौ यस्यास्सा तस्याः नाभी चापे स्वधनुषि "धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम्" इत्यमरः। न्यस्तो धारितः भरः समस्तस्वशरीरभारो येन सः तस्मिन् चापन्यस्तभरे स्मरे कामे तुङ्गौ समुन्नतौ "उच्चप्रांशून्नतोदग्रोच्छ्रितास्तुङ्गे" इत्यमरः। स्तनौ कुचौ समारूढे सम्प्राप्ते सति जाता समुत्पन्ना कोदण्डाटनिमुद्रा कोदण्डस्य धनुषः "कोदण्डं कार्मुके देशभेदभ्रूलतयोरपि" इत्यमरः। अटनिः कोटिः "कोटिरस्याटनी गोधे तले ज्याघातवारणे" इत्यमरः। तन्मुद्रा विन्यासचिन्हगर्त इव (भाति)। लोके जन उच्चस्थानसमारोहणकाले क्वचिद्दण्डादिके स्वशरीरभारमारोप्यैव साफल्यं प्रयाति भूमौ च दण्डनिक्षेपचिन्हं पश्चाद्भवति तद्वदेव स्तनारोहणकाले कोदण्डकोटिचिन्हभूतेयं नाभिरिति भावः।

### भाषा

लटकी भौंवो वाली चन्द्रलेखा की नाभी, मानो अपने धनुष पर अपने शरीर का पूरा बोझा देकर, उसके दोनो ऊँचे ऊँचे कुचो पर धनुष को टेक कर चढे कामदेव के धनुष के कोटि का चिन्ह ही थी।

**मन्ये समाप्तलावण्य-सारे सर्गे मृगीदृशः।**
**अपूरयित्वेव गतो नाभिरन्ध्रं प्रजापतिः॥३०॥**

### अन्वयः

प्रजापतिः मृगीदृशः समाप्तलावण्यसारे सर्गे सति नाभिरन्ध्रम् अपूरयित्वा इव गतः (इति) मन्ये।

### व्याख्या

प्रजापतिर्ब्रह्मा मृग्या हरिण्या इव "मृगः पशौ कुरङ्गे च करिनक्षत्रभेदयो." । "अन्वेषणायां मार्गणायां मृगी तु वनितान्तरे" इति विश्वमेदिन्यौ। दृशौ लोचने यस्यास्सा तस्या मृगीनयनायाः समाप्तः समाप्ति प्राप्तो लावण्यस्य

सौन्दर्यस्य सारः सारभूतपदार्थो यस्मिंस्तस्मिन् सर्गे रचनायां "सर्गः स्वभावनिर्मोक्षनिश्चयाध्यायसृष्टिषु" इत्यमरः । सत्यां नाभिरन्ध्रं नाभिछिद्रं सौन्दर्यसारभूतपदार्थाभावादपूरयित्वैव पूरणमकृत्वैव गतः प्रचलित इत्यहं मन्ये । ब्रह्मा सामग्र्यभावात्तच्छिद्रस्य पूर्तिमकृत्वैव गत इति कल्पयामीति भावः ।

भाषा

ब्रह्मा जी हरिणी के समान नयन वाली चन्द्रलेखा की रचना में सम्पूर्ण सौन्दर्य के सारभूत पदार्थों के समाप्त हो जाने से नाभी-छिद्र को वैसे ही छोड़ कर चले गये ऐसा मैं समझता हूँ ।

लिखन्त्याः कामसाम्राज्य-शासनं यौवनश्रियः ।
गलितेव मषीधारा रोमाली नाभिगोलकात् ॥३१॥

अन्वयः

रोमाली कामसाम्राज्यशासनं लिखन्त्याः यौवनश्रियः नाभिगोलकात् गलिता मषीधारा इव ( भाति )

व्याख्या

रोमाली रोमपंक्तिः कामसाम्राज्यशासनं कामस्य मदनस्य साम्राज्यमाधिपत्यं तस्य शासनमाज्ञापत्रादि लिखन्त्या लिपिबद्धं कुर्वाणायाः यौवनश्रियो यौवनलक्ष्म्याः नाभिगोलकात् नाभिरेव गोलकं मषीपात्रं तस्मात् गलिताऽधश्च्युता कृष्णवर्णा मषीधारेव (भाति)

भाषा

चन्द्रलेखा की रोमावली कामदेव के एकछत्र साम्राज्य का शासन पत्र लिखने वाली, जवानी की शोभा के मानो नाभी रूपी दवात से गिरी हुई काली स्याही हो ऐसी शोभित होती थी ।

जाने रात्रिषु तन्मध्ये ददाति शनकैः पदम् ।
गम्भीरनाभिकुहर-प्रवेशाशङ्कया स्मरः ॥३२॥

अन्वयः

स्मरः रात्रिषु तन्मध्ये गम्भीरनाभिकुहरप्रवेशाशङ्कया शनकैः पदं ददाति (इत्यहं) जाने ।

### व्याख्या

स्मरः कामः रात्रिषु क्षपासु "निशा निशीथिनी रात्रिस्त्रियामा क्षणदा क्षपा" इत्यमरः । तन्मध्ये चन्द्रलेखा-नायिका-शरीरमध्ये । गम्भीरनाभिकुहरप्रवेशाशङ्कया निम्ननाभिगह्वरप्रवेशभयात् शनकैः मन्दं मन्दं पदं ददाति चरणन्यासं करोति (इत्यहं) जाने मन्ये । तस्याः शरीरे कामचिन्हानि क्रमश उदीयमानान्यासन्निति भावः ।

### भाषा

कामदेव रात्रियों में चन्द्रलेखा के शरीर पर उसके गहरे नाभी रूपी गर्त में गिर पड़ने की शङ्का से धीरे-धीरे पदविन्यास करता था । अर्थात् उसके शरीर पर काम के चिन्ह धीरे-धीरे उत्पन्न होते जाते थे ।

हारः कुरङ्गशावाक्ष्या राजति स्थूलमौक्तिकः ।
नाभिलावण्यपानीय—घटीयन्त्रगुणोपमः ॥३३॥

### अन्वयः

कुरङ्गशावाक्ष्याः स्थूलमौक्तिकः हारः नाभिलावण्यपानीयघटीयन्त्रगुणोपमः राजति ।

### व्याख्या

कुरङ्गशावाक्ष्याः कुरङ्गस्य मृगस्य "मृगे कुरङ्गवातायुहरिणाजिनयोनयः" इत्यमरः । शावो बालः "पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः" इत्यमरः । तस्याक्षिणीवाक्षिणी यस्यास्सा तस्या मृगशावकनेत्रायाः स्थूलमौक्तिकः स्थूलानि मौक्तिकानि यस्मिन् स हारः नाभिलावण्यपानीयघटीयन्त्रगुणोपमः नाभौ नाभिरूपकूपे लावण्यं सौन्दर्यमेव पानीयं जलं तस्य घटीयन्त्रमरघट्टघटी तस्य गुणो रज्जुरेवोपमा उपमानं यस्य स राजति शोभते । नाभिकूपे वर्तमानलावण्यजलस्य बहिर्निस्सारणाय घटीयन्त्ररज्जुसदृशो हार इत्यर्थः । घटीयन्त्रस्थपात्राणि मौक्तिकरूपाणीति भावः ।

### भाषा

हरिण के बच्चे के समान चञ्चल आँख वाली चन्द्रलेखा का बड़े-बड़े मोतियों का हार नाभी रूपी कूएँ से लावण्य रूपी जल निकालने के घटीयन्त्र (पानी निकालने की प्यालेवाली मशीन) के रस्से के समान था । अर्थात् घटीयन्त्र के

व्याख्या

विधिर्ब्रह्मा दरिद्रं कृशं निर्धनं वा "निःस्वस्तु दुर्विधो दीनो दरिद्रो दुर्गतोऽपि सः" इत्यमरः। उदरं कुक्षिं मध्यभागं वा दृष्ट्वा परिज्ञाय लावण्यपूर्णयोः सौन्दर्यसमृद्धयोः स्तनयोः पन्थानं, मार्गं त्रिवलीविषमं त्रिवल्या विषमं दुष्प्रापं चक्रे कृतवान्। यथा च लोके समृद्धस्य दरिद्रकर्तृकधनापहरणाद्रक्षार्थं दुर्गमो भागो विधीयते तथैवात्राऽपीति भावः। अत्र समासोक्तिरलङ्कारः।

भाषा

ब्रह्मा ने उसके पतले पेट को देख कर अर्थात् दरिद्र पेट-रूपी व्यक्ति को देखकर सौन्दर्य से परिपूर्ण अर्थात् सौन्दर्य रूपी धन से युक्त दोनों स्तनों के पास पहुँचने के मार्ग को त्रिवली रूपी आड से अगम्य बना दिया।

राजति त्रिवली तस्याः स्तनभारोन्नतिक्रमात्।
उपर्युपरि जातेव हारमुद्रा—परम्परा ॥३८॥

अन्वयः

तस्याः त्रिवली स्तनभारोन्नतिक्रमात् उपरि उपरि जाता हारमुद्रापरम्परा इव राजति।

व्याख्या

तस्याश्चन्द्रलेखायाः त्रिवली उदरस्थितरेखात्रयं स्तनभारस्य कुचभारस्योन्नतिक्रम ऊर्ध्ववृद्धिक्रमस्तस्मात् स्तनभारोन्नतिक्रमादुपर्युपरि ऊर्ध्वमूर्ध्वं जाता मुद्रिता विन्यस्ता वा हारमुद्राणा हारविन्यासचिन्हीभूतरेखाणां परम्परेव राजति शोभते। कुचवृद्धिक्रमाद्धारस्योपर्युपरि गमनात्तद्विन्यासरेखात्रयमिव वलित्रयं शोभत इति भावः।

भाषा

चन्द्रलेखा की त्रिवली अर्थात् पेट पर की तीन रेखाएँ, स्तन की विशालता तथा उच्चता के बढते रहने से गले में के मोती के हार के ऊँचे-ऊँचे होते जाने से मानो उसके पहिले चिन्हों की परम्परा बनी हो ऐसी शोभित होती थी।

युक्तं मध्ये कृशा तन्वी कार्मुकीकरणाय यत्।
अत्रैव कुसुमास्त्रेण पीड्यते श्लिष्टमुष्टिना ॥३९॥

अन्वयः

तन्वी मध्ये कृशा (इति) युक्तम् । यत् कार्मुकीकरणाय श्लिष्टमुष्टिना कुसुमास्त्रेण अत्रैव पीड्यते ।

व्याख्या

तन्वी चन्द्रलेखा मध्ये मध्यभागे कटिभागे कृशा सूक्ष्मेति युक्तमेव यद्यस्मात्कारणात् कार्मुकीकरणाय नामिकाया धनुर्निर्माणाय "धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम्" इत्यमरः । श्लिष्टमुष्टिना बद्धमुष्टिना कुसुमास्त्रेण कामेनाऽत्रैव मध्य एव पीड्यते दार्ढ्येन गृह्यते । धनुषो मध्यभाग मुष्टिना दृढ परिगृह्यैव बाणो मुच्यते । इय मुष्टिमेयमध्येति भाव । कार्येण कारणसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः ।

भाषा

दुबले शरीर वाली चन्द्रलेखा, कटिभाग में अत्यधिक दुबली है यह बात ठीक ही है । क्योंकि कामदेव उसका धनुष बनाने में उसके मध्यभाग को ही कडी मुट्ठी से पकडता है । अर्थात् वह पतली कमर वाली थी ।

स्तनौ भारार्पणव्यग्रौ काञ्ची कलकलोन्मुखी ।
कस्यां दिशि न मध्यस्य तस्याः कार्श्यं सहेतुकम् ॥४०॥

अन्वयः

स्तनौ भारार्पणव्यग्रौ (स्तः ।) काञ्ची कलकलोन्मुखी (वर्तते ।) तस्याः मध्यस्य कार्श्यं कस्यां दिशि सहेतुकं न ।

व्याख्या

तस्याश्चन्द्रलेखायाः स्तनौ कुचौ भरस्य भारस्यार्पणे कटेरुपरिस्थापने व्यग्रौ तत्परौ स्तः । काञ्ची मेखला काञ्चनमयी कलकलोन्मुखी कलकलशब्देन "कोलाहलः कलकलः" इत्यमरः । उन्मुखी सन्नद्धा जाता कलहप्रियेत्यर्थः । तस्या मध्यस्य कटेः कार्श्यं कृशत्वं कस्यां दिशि केन रूपेण सहेतुकं न सकारणं न, अपि तु सकारणमेव । एकत्र भारार्पणादन्यत्र कलहप्रियत्वान्मध्यप्रदेशस्य तन्मध्यगतत्वाच्चिन्तया क्लेशेन च कृशत्वं सहेतुकमिति भावः । अर्थापत्तिः समासोक्तिश्चालङ्कारः ।

### भाषा

।। 'चन्द्रलेखा के दोनों स्तन बोझा लादने में तत्पर हैं। उसकी करधनी शब्द करके सदैव विट् २ किया करती है। ऐसी परिस्थिति में उसके मध्यभाग का कृश हो जाना किस प्रकार सकारण नहीं है अर्थात् सर्वथा सकारण है। अर्थात् एक ओर बोझ दूसरी ओर कलह इनसे उसकी कमर का चिन्ता तथा क्लेश से दुबला हो जाना सकारण है।

**भाति निर्विवरे तस्याश्चित्रं कुचयुगान्तरे ।**
**क्रीडाकुण्डलितोच्चण्ड-कोदण्डः कुसुमायुधः ॥४१॥**

### अन्वयः

तस्याः निर्विवरे कुचयुगान्तरे क्रीडाकुण्डलितोच्चण्डकोदण्डः कुसुमायुधः भाति (इति) चित्रम्।

### व्याख्या

तस्याश्चन्द्रलेखायाः निर्विवरे निर्नास्ति विवरं छिद्रमवकाशो यस्मिंस्तस्मिन् निरवकाशे कुचयुगान्तरे कुचयोर्युगं युग्मं तस्यान्तरे मध्ये क्रीडया विलासेन कुण्डलितं कुण्डलीकृतं वर्तुलीकृतं उच्चण्डं प्रचण्डं विशालं कोदण्डं धनुर्येन सः क्रीडाकुण्डलितोच्चण्डकोदण्डः कुसुमायुधः कामः "शम्बरारिर्मनसिजः कुसुमेषुरनन्यजः । पुष्पधन्वा रतिपतिर्मकरध्वज आत्मभूः" । इत्यमरः । भाति पूर्णतया समागत्य सावकाशं विराजत इति चित्रं इत्याश्चर्यम् । अत्राऽऽधारापेक्षमाऽऽधेयस्याऽधिक्यवर्णनादधिकालङ्कारः ।

### भाषा

चन्द्रलेखा के दोनों कुचों के निरवकाश मध्यभाग में खेलवाड़ में प्रचण्ड धनुष को गोल कर बैठने वाला कामदेव शोभित होता है यह एक आश्चर्य की बात है। अर्थात् उसके बड़े बड़े कुचमण्डलों को देखकर लोग कामासक्त हो जाते हैं।

**कुचद्वये चकोराक्षी चिबुकप्रान्तचुम्बिनी ।**
**नर्मोक्तिषु न शक्नोति स्थातुं लज्जानतानना ॥४२॥**

### अन्वयः

चकोराक्षी कुचद्वये चिबुकप्रान्तचुम्बिनि (सति) नर्मोक्तिषु लज्जानतानना स्थातुं न शक्नोति।

### व्याख्या

चकोरस्याक्षिणीवाक्षिणी यस्यास्सा चकोराक्षी चकोरनयना "तित्तिरिः कुक्कुभो लावो जीवंजीवश्चकोरकः" इत्यमरः। चन्द्रलेखा कुचद्वये स्तनयुगले चिबुकप्रान्तचुम्बिनि चिबुकप्रान्तं मुखाग्रप्रदेशं "अधस्ताच्चिबुकं गण्डौ कपोलौ तत्परा हनुः" इत्यमरः। चुम्बतीति तस्मिन् सति नर्मोक्तिषु केलिसमयोक्तिषु लज्जानतानना नम्रावनम्रमुखी सखीसमक्षं स्थातुं न शक्नोति न समर्था भवति। अतिशयोक्तिरलङ्कारः।

### भाषा

चकोर के ऐसी आँख वाली चन्द्रलेखा, दोनों स्तनों के बढ़ कर उसके ठुड्डी तक पहुँच जाने से पतिविषयक केली की रसभरी बातों को (सखियों) से सुन लज्जित हो, मुख नीचा सिर करके उनके सम्मुख ठहरने में समर्थ नहीं हो सकती थी।

शङ्के तच्चित्तमक्लेश—साध्यं कुसुमधन्वनः।
काठिन्यं बहिरेवास्याः स्तनाभ्यां येन धारितम् ॥४३॥

### अन्वयः

तच्चित्तं कुसुमधन्वनः अक्लेशसाध्यम् (इत्यहं) शङ्के, येन अस्याः स्तनाभ्यां काठिन्यं बहिः एव धारितम्।

### व्याख्या

तच्चित्तं तस्याश्चन्द्रलेखायाश्चित्तं मनः "चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः" इत्यमरः। कुसुमधन्वनः कामस्याक्लेशेनानायासेनैव साध्यं वश्यमित्यक्लेशसाध्यम् (इत्यहं) शङ्के तर्कयामि। येन यस्मात्कारणादस्याश्चन्द्रलेखायाः स्तनाभ्यां कुचाभ्यां काठिन्यं सौकुमार्याभावः कार्कश्यं वा बहिरेव धारितं संगृहीतं न त्वन्तः प्रवेशे काठिन्यम्। अन्तःकरणस्य काठिन्याभावात् चंद्रलेखाया मनो हठित्येव कामाधीनं निश्चयते।

### भाषा

चन्द्रलेखा का मन अनायास से ही कामदेव के वश में हो सकता है ऐसी मैं कल्पना करता हूँ। क्योंकि उसके दोनों स्तनों ने कड़ापन तथा दृढ़ता को उसके हृदय से बाहर ही रख छोड़ा है।

सा स्तनाञ्जलिबन्धेन मन्मथं प्रथमागतम् ।
करोतीवोन्मुखं बाला बान्धवं यौवनश्रियः ॥४४॥

अन्वयः

सा बाला यौवनश्रियः बान्धवं प्रथमागतं मन्मथं स्तनाञ्जलिबन्धेन उन्मुखं करोति इव ।

व्याख्या

सा बाला मुग्धा चन्द्रलेखा यौवनश्रियो यौवनस्य तारुण्यस्य श्रीर्लक्ष्मीस्तस्या बान्धवं सहायकं सखायं प्रथममेवागतं प्रथमागतमभिनवप्राप्तं मन्मथं कामं स्तनौ कुचावेवाञ्जलिः करसम्पुटे "अञ्जलिस्तु पुमान् हस्तसम्पुटे कुडवेऽपि च" इति मेदिनी । तस्य बन्धेन विरचनेन स्तनाञ्जलिबन्धेनोन्मुखं स्नेहप्रवणं करोति विदधातीव । द्वाभ्यां कामयौवनलक्ष्मीभ्यां सहैव स्यातव्यमिति भावः । अत्रोत्प्रेक्षालङ्कारः स्तनयोरञ्जलित्वोत्प्रेक्षणात् ।

भाषा

वह मुग्धा कामिनी चन्द्रलेखा जवानी की शोभा के आत्मीय, पहिले पहिल आए हुए कामदेव को दोनों स्तनरूपी अञ्जुली से हाथ जोड़कर मानो अपना प्रेमी बना लेती है।

अस्त्यप्रतिसमाधेयं स्तनद्वन्द्वस्य दूषणम् ।
स्फुटतां कञ्चुकानां यन्नायात्यावरणीयताम् ॥४५॥

अन्वयः

स्तनद्वन्द्वस्य दूषणम् अप्रतिसमाधेयम् अस्ति यत् स्फुटतां कञ्चुकानाम् आवरणीयतां न आयाति ।

व्याख्या

स्तनद्वन्द्वस्य कुचयुगलस्य दूषणं दोषोऽपराधो वा अप्रतिसमाधेयं केनचित्प्रकारेणाप्यप्रतीकार्यमनपनेयं वाऽस्ति । यत् स्फुटतां विदीर्यमाणानां कञ्चुकानामावरणीयता "कञ्चुको वारबाणोऽस्त्री" इत्यमरः । आच्छाद्यतामदृश्यतां वा नाऽऽयाति न प्राप्नोति । यथोक्तं प्रथमसर्गे—"अत्युन्नतिस्फोटितकञ्चुकानि वन्द्यानि कान्ताकुचमण्डलानि" इति । अत्र निन्दाव्याजेन यौवनप्रशंसनात् व्याजस्तुतिरलङ्कारः ।

भाषा

चन्द्रलेखा के दोनो स्तनो का दोष किसी प्रकार भी छिपाया नही जा सकता। क्योकि दोनो स्तन फटी हुई चोली के भीतर नही छिपाये जा सकते। अर्थात् स्तन की वृद्धि और कडेपन से चोलिया फट जाया करती थी।

**कुम्भौ सदम्भौ करिणां कलशौ मन्दकौशलौ।**
**चक्रवाकौ वराकौ च तदीयकुचयोः पुरः ॥४६॥**

अन्वयः

तदीयकुचयोः पुरः करिणां कुम्भौ सदम्भौ कलशौ मन्दकौशलौ चक्रवाकौ च वराकौ।

व्याख्या

तस्या इमौ तदीयौ कुचौ स्तनौ तयोस्तदीयकुचयोः पुरः समक्षं करिणां गजानां कुम्भौ शिरःपिण्डौ "कुम्भौ तु पिण्डौ शिरसस्तयोर्मध्ये विदुः पुमान्" इत्यमरः। सदम्भौ दम्भेन कपटेन सहितौ "कपटोऽस्त्री व्याजदम्भोपधयश्छद्म-कैतवे" इत्यमरः। कलशौ घटौ मन्दकौशलौ मन्दं शिथिलतां गतं कौशलं ययोस्तौ चक्रवाकौ च कोकपक्षिणौ "कोकश्चक्रश्चक्रवाको, रथाङ्गाह्वयनामकः" इत्यमरः। च वराकौ दीनौ एतौ पूर्वोक्तौ सकलौ स्तनयोस्साम्यं कर्तुं नार्हतः पूर्णकान्त्यभावादित्यर्थः। अत्र प्रतीपालंकारः, अनुप्रासः शब्दालंकारश्च।

भाषा

चन्द्रलेखा के दोनो स्तनो के मुकाबले में हाथियो के दोनो गण्डस्थल ढोंगी, दोनो घडे कौशल या शोभा रहित और चकवा का जोड दीन मालुम पडते है।

**मुखेन्दुचन्द्रिकापूर—प्लाव्यमानौ पुनः पुनः।**
**शीतभीताविवान्योन्यं तस्याः पीडयतः स्तनौ ॥४७॥**

अन्वयः

मुखेन्दुचन्द्रिकापूरप्लाव्यमानौ तस्याः स्तनौ शीतभीतौ इव अन्योन्यं पुनः पुनः पीडयतः।

व्याख्या

मुखमेवेन्दुरिति मुखेन्दुर्वदनरूपेन्दुस्तस्य चन्द्रिका ज्योत्स्ना "चन्द्रिका कौमुदी ज्योत्स्ना प्रसादस्तु प्रसन्नता" इत्यमरः। तस्याः पूरः प्रवाहः "पूरो जलप्रवाहे

स्याद्व्रणसंशुद्धिखाद्ययोः" इति मेदिनी ॥ ' तस्मिन् प्लाव्यमानौ निमग्नौ मुखेन्दुचन्द्रिकापूरप्लाव्यमानौ तस्याश्चन्द्रलेखायास्तनौ कुचौ शीताज्जाड्याद् भीतौ शीतभीतौ इवान्योन्यं परस्परं मिथः पुनः पुनः भूयो भूयः पीडयतः सम्बाधां कुरुतः। अन्यावप्यनवरतजलप्रवाहमग्नौ शैत्यक्लेशनिवारणायान्योन्यं श्लिष्यतः। उत्प्रेक्षालङ्कारः।

### भाषा

चन्द्रलेखा के मुख रूपी चन्द्रमा की चादनी के प्रवाह में लगातार डूबे हुए उसके दोनो स्तन, जाडे के डर से मानो एक दूसरे से सटते जाते थे।

तत्कुचौ चरतः किञ्चिन्नूनं मनसिजव्रतम्।
नित्योन्मुखौ यदासाते मौलिरत्नस्य भास्वतः ॥४८॥

### अन्वयः

तत्कुचौ नूनं किञ्चित् मनसिजव्रतं चरतः। यत् भास्वतः मौलिरत्नस्य नित्योन्मुखौ आसाते॥

### व्याख्या

तस्याश्चन्द्रलेखाया कुचौ स्तनौ तत्कुचौ नूनं निश्चयेन किञ्चिदज्ञातं अनैः गुप्तं वा मनसिजव्रतं कामसम्बन्धि "शम्बरारिर्मनसिजः कुसुमेषुरनन्यजः" इत्यमरः। तपोऽनुष्ठानं, येन समस्तलोकोपरि वशीकरणरूपविजयः स्यात् चरतोऽनुतिष्ठतः। यद्यस्मात्कारणात् भास्वतो देदीप्यमानस्य सूर्यस्य वा मौलौ चन्द्रलेखायाः शिरसि धार्यमाणं यद्रत्नं मणिस्तस्य मौलिरत्नस्य सूर्यपक्षे मध्याह्नसमये सूर्यः शिरोमध्ये प्रकाशितो भवति। तस्य छायाऽपि प्रायः नैवावलोक्यते। मौलौ धार्यमाणरत्नसदृशस्येत्यर्थः। नित्यमुन्मुखौ नित्योन्मुखौ उद्गतचूचुकीकृतं मुखमग्रभागो याभ्यां तौ उन्मुखावासाते तिष्ठतः। स्तनयोरूर्ध्वमुखत्वं लावण्यप्रकर्षत्वेन सर्वजनमनोहारित्वं व्यज्यते। स्तनयोस्तपस्विव्यवहारसमारोपात्समासोक्तिरलङ्कारः। यत्र प्रस्तुतधर्मिको व्यवहारः साधारणविशेषणमात्रोपस्थापिताप्रस्तुतधर्मिकव्यवहाराभेदेन भासते सा समासोक्तिः।

### भाषा

उस चन्द्रलेखा के दोनो स्तन अवश्य ही कामदेव के किसी अनुष्ठान को करते थे। क्योंकि दोपहर में मस्तक पर आनेवाले सूर्य के अथवा चमकने वाले मस्तक पर के रत्न के वे सदैव उन्मुख रहते हैं।

सा धारयत्यधीराक्षी दुर्वहं स्तनमण्डलम् ।
गर्वपर्वतमारूढश्चित्रं कुसुमकार्मुकः ॥४६॥

अन्वयः

अधीराक्षी सा दुर्वहं स्तनमण्डलं धारयति । कुसुमकार्मुकः गर्वपर्वतम् आरूढः इति चित्रम् ।

व्याख्या

अधीरे चञ्चलेऽक्षिणी नयने यस्यास्साऽधीराक्षी सा चन्द्रलेखा दुःखेन वोढुं धारयितुं शक्यमिति दुर्वहमतिगुरुस्तनमण्डलं कुचमण्डलं धारयति वहति । कुसुमं पुष्पमेव कार्मुकं धनुर्यस्य सः कुसुमकार्मुकः कामः "धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम्" इत्यमरः । गर्वस्य प्रचण्डमदस्य पर्वतस्तं गर्वपर्वतमारूढोऽधिष्ठितः । इति चित्रमाश्चर्यकरम् । स्तनमण्डलस्य लोकातिशायिशोभाधारकत्वात्सहायभूतस्य कामास्त्रस्याऽप्रतिहतं युवजनमनोवेधसामर्थ्यमिति हेतोः कामदेवो महतीमहङ्कारपदवीं समारोपित इति भावः । अत्र दुर्वहवस्तुधारणमेकत्र, तज्जन्यो गर्वश्चाऽन्यत्रेति कार्यकारणयोर्भिन्नदेशगतत्वात् असङ्गतिनामाऽलङ्कारः ।

भाषा

यह चञ्चल आखो वाली चन्द्रलेखा कठिनता से ढोने योग्य कुचमण्डल को धारण करती है । परन्तु इस कारण से फूलों के बाण वाला कामदेव अभिमान के पर्वत पर चढ़ गया यह आश्चर्य है, अर्थात् अभिमान की पराकाष्ठा को प्राप्त हो गया ।

तस्यास्तुङ्गस्तनच्छाया चकास्ति त्रिवलीतटे ।
लीना तिमिरलेखेव वदनेन्दोरगोचरे ॥५०॥

अन्वयः

तस्याः त्रिवलीतटे तुङ्गस्तनच्छाया वदनेन्दोः अगोचरे लीना तिमिरलेखा इव चकास्ति ।

व्याख्या

तस्याश्चन्द्रलेखायाः त्रिवलीतटे उदरमध्यगतत्रिरेखाप्रान्ते तुङ्गा उन्नता "उच्चप्रांशून्नतोदग्रोच्छ्रितास्तुङ्गे" इत्यमरः । स्तनयोः कुचयोश्छायाऽनातपः

"छाया सूर्यप्रिया कान्ति प्रतिबिम्बमनातप." इत्यमर.। कुङ्कस्तनच्छाया वदनमेव मुखमेवेन्दुश्चन्द्रस्तस्यागोचरेऽविषये लीना गुप्तरूपेण स्थिता तिमिरलेखा तमसा पङ्क्तिरिव चकास्ति शोभते ।

भाषा

चन्द्रलेखा के पेट पर की त्रिवली पर ऊँचे २ स्तनों की छाया, उसके मुख रूपी चन्द्रमा से न देखे जा सकने वाले स्थान पर विद्यमान मानो अंधेरे की लकीर हैं। अर्थात् स्तनों की अत्यधिक ऊँचाई से मुखरूपी चन्द्रमा की चाँदनी वहाँ न पड़ने से और स्तनों की परछाहीं पड़ने से मानो अन्धकार वहाँ छिपकर बैठा है।

अयं त्रयाणां ग्रामाणां निधानं मधुरध्वनिः ।
रेखात्रयमितीवास्याः सूत्रितं कण्ठकन्दले ॥५१॥

अन्वयः

रेखात्रयं मधुरध्वनिः अयं (कण्ठः) त्रयाणां ग्रामाणां निधानम् इति अस्याः कण्ठकन्दले सूत्रितम् इव (विराजते)

व्याख्या

रेखात्रयं चन्द्रलेखाकण्ठगततिर्यग्रेखात्रय (कर्तृ) मधुरो ध्वनिर्यस्य स मधुरध्वनि मनोहरस्वरोऽयं कण्ठ त्रयाणां ग्रामाणां षड्जमध्यमपञ्चमस्वररूपग्रामाणां "ग्राम' स्वरे संवसथे वृन्दे शब्दादिपूर्वक" इति विश्व'। निधानमास्पदमिति समूचनायाऽस्याश्चन्द्रलेखाया कण्ठकन्दले कण्ठमूलप्रदेशे सूत्रित सूत्रेण विनिर्मित ग्रामत्रयसूचकचिह्नीभूतरेखात्रयमिव विद्योतते । हेतूत्प्रेक्षा ।

भाषा

चन्द्रलेखा के गले पर की तीन रेखाएँ मधुर स्वर वाला यह कण्ठ षड्ज, मध्यम और पञ्चम इन तीन ग्रामों का आकर है, यह सूचित करने के लिये मानो उसके कंठ पर बनी हैं।

असावुद्वेललावण्य-रत्नाकरसमुद्भवः ।
जगद्विजयमङ्गल्य-शङ्खः कुसुमधन्वनः ॥५२॥

### अन्वयः

असौ उद्वेललावण्यरत्नाकरसमुद्भवः कुसुमधन्वनः जगद्विजयमङ्गल्यशङ्खः अस्ति ।

### व्याख्या

असौ कण्ठः वेलां तटप्रदेशं सीमाप्रान्तं "अब्ध्यम्बु विकृतौ वेला कालमर्यादयोरपि" इत्यमरः । 'उत्क्रान्तोऽतिक्रान्त इत्युद्वेलः प्रवृद्धः लावण्यस्य सौन्दर्यस्य रत्नाकरस्समुद्रः "रत्नाकरो जलनिधिर्यादःपतिरपां पतिः" इत्यमरः । तस्मात्समुद्भव उत्पत्तिर्यस्य स उद्वेललावण्यरत्नाकरसमुद्भवः कुसुमधन्वनः कामस्य जगतां लोकानां विजयस्तस्य मङ्गल्यशङ्खः मङ्गलसूचककम्बुः "शङ्खः स्यात्कम्बुरस्त्रियौ" इत्यमरः । अस्ति । अत्र कण्ठे कामकर्तृकजगद्विजयशङ्खारोपाद्रूपकं नामालङ्कारः ।

### भाषा

चन्द्रलेखा का कण्ठ सीमा को उल्लंघन करने वाले सौंदर्यरूपी समुद्र से उत्पन्न जगत् का विजय सूचक कामदेव का माङ्गलिक शङ्ख है ।

**श्रोत्रपीयूषगण्डूषैः काकलीकलगीतिभिः ।**
**कण्ठः कुण्ठितचातुर्यो विपञ्चीपञ्चमध्वनेः ॥५३॥**

### अन्वयः

श्रोत्रपीयूषगण्डूषैः काकलीकलगीतिभिः विपञ्चीपञ्चमध्वनेः कुण्ठितचातुर्यः कण्ठः (सुशोभते) ।

### व्याख्या

श्रोत्रयोः कर्णयोः पीयूषस्यामृतस्य "पीयूषममृतं सुधा" इत्यमरः । गण्डूषाः "गण्डूषो मुखपूर्तौभपुष्करप्रसृताञ्जलिः" इत्यमरः । तैः श्रोत्रपीयूषगण्डूषैरति-मधुरैरित्यर्थः । काकलीनां मधुरसूक्ष्मध्वनीनां "काकली तु कले सूक्ष्मे ध्वनौ तु मधुरास्फुटे" इत्यमरः । कलगीतयः मधुरगानानि ताभिः काकलीकलगीतिभिः विपञ्ची वीणा तस्याः पञ्चमध्वनिः पञ्चमस्वरस्तस्य विपञ्चीपञ्चमध्वनेः कुण्ठितं न्यूनीकृतं चातुर्यं प्रागल्भ्यं येन सः कुण्ठितचातुर्यश्चन्द्रलेखायाः कण्ठः सुशोभते । अत्र काव्यलिङ्गालङ्कारः ।

### भाषा

कान के लिये अमृत का कुल्ला अर्थात् अमृत से सिञ्चन करने वाले काकली स्वर के सुन्दर गानो से वीन के पञ्चम स्वर की शोभा को नीचा दिखाने वाला यह चन्द्रलेखा का कण्ठ सुशोभित होता है।

कुसुमायुधकोदण्डे हस्तौ विस्तीर्णचक्षुषः ।
अशोकपल्लवास्त्राणां प्रतिहस्तत्वमागतौ ॥५४॥

### अन्वयः

कुसुमायुधकोदण्डे विस्तीर्णचक्षुषः हस्तौ अशोकपल्लवास्त्राणां प्रतिहस्तत्वम् आगतौ।

### व्याख्या

कुसुमायुधस्य कामस्य कोदण्डे धनुषि कुसुमायुधकोदण्डे विस्तीर्णे चक्षुषी यस्यास्सा तस्या विस्तीर्णचक्षुषः विशालनेत्रायाः हस्तौ करौ "बलिहस्तांशवः कराः" इत्यमरः। अशोकस्य पल्लवाः किसलयान्येव "पल्लवोऽस्त्री किसलयं" इत्यमरः। कामस्यास्त्राणि तेषामशोकपल्लवास्त्राणां प्रतिहस्तत्वं प्रतिनिधित्वमागतौ प्राप्तौ। अशोकपल्लवसमानसुकुमारौ मदनप्रभावकरौ तस्याः करावित्यर्थः।

### भाषा

कामदेव के धनुष पर, बड़ी २ आंखवाली चन्द्रलेखा के दोनों हाथ, अशोक के कोमल पत्तो वाले कामदेव के बाणो का प्रातिनिध्य करते हैं। अर्थात् उसके दोनों हाथ अशोक के पत्तो के ऐसे कोमल तथा कामोत्पादक थे।

नाहं धार्यमधीराक्षि मुखेन्दोः सम्मुखं त्वया ।
इतीव लीलापद्मेन करेऽस्याः कान्तिरर्पिता ॥५५॥

### अन्वयः

हे अधीराक्षि मुखेन्दोः सम्मुखं त्वया अहं न धार्यम् इति लीलापद्मेन अस्याः करे कान्तिः अर्पिता इव।

### व्याख्या

अधीरे चञ्चलेऽक्षिणी नेत्रे यस्यास्सा तत्सम्बोधने हे अधीराक्षि मुखमेवेन्दुश्चन्द्रस्तस्य मुखेन्दोस्सम्मुखं समक्षं त्वया भवत्याऽहं (लीलापद्मं) न धार्यं न

सवाह्यमिति हेतो लीलापद्मेन क्रीडाकमलेनास्याश्चन्द्रलेखाया करे हस्ते कान्ति-र्द्युति "शोभा कान्तिर्द्युतिश्छवि" इत्यमर । अर्पिता इव दत्ता इत्यह मन्ये। उत्प्रेक्षालङ्कार ।

### भाषा

हे चञ्चल नेत्र वाली चन्द्रलेखा ! तू मुझे अपने मुखरूपी चन्द्रमा के सामने मत धारण कर। (क्योंकि चन्द्रमा को देखने से कमल मुकुलित हो जाता है।) ऐसा कहकर शोभा के लिये गृहीत पद्म ने इसके हाथ को अपनी कान्ति दी अर्थात् सुशोभित किया।

आयूरेखां चकारास्याः करे द्राघीयसीं विधिः ।
शौण्डीर्यगर्वनिर्वाह—प्रत्याशां च मनोभुवः ॥५६॥

### अन्वयः

विधिः अस्याः करे आयूरेखां मनोभुवः शौण्डीर्यगर्वनिर्वाहप्रत्याशां च द्राघीयसीं चकार।

### व्याख्या

विधि ब्रह्माऽस्याश्चन्द्रलेखाया करे हस्ते आयुष जीवितकालस्य "आयु-र्जीवितकालो ना" इत्यमर । रेखा ता मनोभुव कामस्य शौण्डीर्यं पराक्रम-स्तस्य गर्वोऽहङ्कारस्तस्य निर्वाह प्रचलन तस्य प्रत्याशा मनोरथस्ता शौण्डीर्य-गर्वनिर्वाहप्रत्याशां च द्राघीयसीमतिशयेन दीर्घेति द्राघीयसी तां दीर्घतरा विशालतरा चकार निममे। अत्र कार्यकारणयो सहैवाऽभिधानादतिशयो-क्तिरलङ्कार ।

### भाषा

ब्रह्मा ने चन्द्रलेखा के हाथ में की आयुष्य रेखा को और कामदेव की पराक्रम के गर्व को चिरकाल तक निभाने की आशा को दीर्घतर बनाया। अर्थात् इसके चिरायु होने से कामदेव की अपने पराक्रम के गर्व को बनाए रखने की आशा भी चिरकाल के लिए स्थिर हो गई।

गौराङ्ग्या सुजलावण्य—मीलितं हेमकङ्कणम् ।
कण्ठाश्लेषे वयस्याभिः काठिन्यादन्वमीयत ॥५७॥

अन्वयः

वयस्याभिः गौराङ्ग्याः कण्ठाश्लेषे भुजलावण्यमीलितं हेमकङ्कणं काठिन्यात् अन्वमीयत ।

व्याख्या

वयस्याभिः सखीभिः "आलिः सखी वयस्या च" इत्यमरः। गौराङ्ग्याः स्वर्णसमानाङ्गवर्णायाश्चन्द्रलेखायाः कण्ठाश्लेषे सखीविषयके तदीयकण्ठालिङ्गने भुजयोर्लावण्येन सौन्दर्येण मीलितं स्वर्णवर्णभुजसौन्दर्येण स्थगितं हेमकङ्कणं सुवर्णकङ्कणम् "कङ्कणं करभूषणम्" इत्यमरः। काठिन्यात् कठिनस्पर्शात् हेतोरन्वमीयतानुमितम् । अत्र उन्मीलितालङ्कारः "भेदवैशिष्ट्ययोः स्फूर्तावुन्मीलितविशेषकौ" इति लक्षणात्—कुवलयानन्दे ।

भाषा

सखियों ने सुवर्णकान्तिवाली चन्द्रलेखा के आलिङ्गन में स्वर्णवर्णभुजाओं के सौन्दर्य से अर्थात् सुनहले रंग से छिपे हुए सोने के कड़े को उसकी कठोरता (कड़ेपन) से पहचाना ।

प्रकोष्ठबन्धे बिम्बोष्ठ्यास्तस्याः काञ्चनकङ्कणम् ।
नालं वलयितं हस्ते हेमाब्जस्येव राजते ॥५८॥

अन्वयः

तस्याः बिम्बोष्ठ्याः प्रकोष्ठबन्धे काञ्चनकङ्कणं हस्ते वलयितं हेमाब्जस्य नालम् इव राजते ।

व्याख्या

तस्याः बिम्बोष्ठ्याः बिम्बफलसमारुणोष्ठ्याः प्रकोष्ठबन्धे कूर्परमणिबन्धान्तराले काञ्चनकङ्कणं सुवर्णकरभूषणं हस्ते करे वलयितं मण्डलाकारेण धारितं "वेष्टितं स्याद्वलयितं संवीतं रुद्धमावृतम्" इत्यमरः। हेमाब्जस्य स्वर्णपद्मस्य नालं मृणालं "नालं काण्डे मृणाले च नाली शाककलम्बके" इति हेमः। इव राजते शोभते। उत्प्रेक्षालङ्कारः।

भाषा

बिम्ब के फल के समान लाल ओठोंवाली चन्द्रलेखा के कलाई पर का सोने का कंगन, मानो हाथ में गोल बाँधी हुई सोने के कमल की डण्ठी हो।

सौवर्णकङ्कणश्रेण्या भाति तद्बाहुकन्दली ।
तूणा चम्पकमौर्व्येव पुष्पचापेन वेष्टिता ॥५९॥

अन्वयः

सौवर्णकङ्कणश्रेण्या वेष्टिता तद्बाहुकन्दली पुष्पचापेन चम्पकमौर्व्या वेष्टिता तूणा इव भाति ।

व्याख्या

सुवर्णस्येदमित्यथवा सुवर्णस्य विकारस्सौवर्णं कङ्कणं तच्छ्रेण्या वेष्टिता मण्डलिता तस्या बाहुरूपा कन्दली तद्बाहुकन्दली तद्भुजलता पुष्पचापेन कुसुमबाणेन कामेन चम्पकपुष्परूपमौर्व्या "अथ चाम्पेयश्चम्पको हेमपुष्पकः" इत्यमरः । "मौर्वी ज्या शिञ्जिनी गुणः" इत्यमरः । वेष्टिता मण्डलिता तूणा इषुधिः "तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः" इत्यमरः । इव भाति शोभते । उत्प्रेक्षालङ्कारः ।

भाषा

सोने के अनेक कंगनों से घिरी हुई चन्द्रलेखा की भुजलता मानों कामदेव द्वारा चम्पे के फूलों की धनुष की डोरी से लपेटे हुए तरकस की शोभा दे रही थी ।

अङ्गुलीभिः कुरङ्गाक्ष्याः शोभते मुद्रिकावलिः ।
प्रोतेव बाणैः पञ्चेषोः सूक्ष्मलक्ष्यपरम्परा ॥६०॥

अन्वयः

कुरङ्गाक्ष्याः अङ्गुलीभिः मुद्रिकावलिः पञ्चेषोः बाणैः प्रोता सूक्ष्मलक्ष्यपरम्परा इव शोभते ।

व्याख्या

कुरङ्गस्य मृगस्याक्षिणीवाक्षिणी यस्यास्सा तस्याः कुरङ्गाक्ष्याः मृगाक्ष्याः अङ्गुलीभिः "अङ्गुल्यः करशाखाः स्युः" इत्यमरः । (धारितानां) मुद्रिकाणामङ्गुलीयकानामावलिः पङ्क्तिर्मुद्रिकावलिः पञ्चेषवः बाणा यस्य स तस्य पञ्चेषोः कामस्य बाणैः शरैः प्रोताऽनुस्यूता विद्धा वा सूक्ष्मलक्ष्याणां "लक्षं लक्ष्यं शरव्यं च" इत्यमरः । परम्परा सूक्ष्मलक्ष्यपरम्पराऽस्थूलशरव्यश्रेणिरिव शोभते । अत्राप्युत्प्रेक्षालङ्कारः ।

भाषा

मृगनयनी, चन्द्रलेखा की अंगुलियों से धारित उसमें की अगूठियाँ मानो कामदेव के बाणों से विद्ध सूक्ष्म निशानों की परम्परा ही शोभित होती थी।

सहेमकटकं धत्ते सा करं पद्मतस्करम्।
पद्मिनीवल्लभस्येव मूले वेष्टितमंशुना ॥६१॥

अन्वयः

सा सहेमकटकं पद्मतस्करं करं पद्मिनीवल्लभस्य अंशुना मूले वेष्टितं इव धत्ते।

व्याख्या

सा नायिका हेम्नः सुवर्णस्य कटकेन कङ्कणेन "आवापकः पारिहार्यः कटको वलयोऽस्त्रियाम्" इत्यमरः। सह वर्तत इति सहेमकटकं पद्मस्य कमलस्य तच्छोभाया वा तस्करं चौरं "चौरैकागारिकस्तेनदस्युतस्करमोषकाः" इत्यमरः। करं हस्तं पद्मिन्याः कमलिन्याः वल्लभः प्रियस्तस्य पद्मिनीवल्लभस्य सूर्यस्यांशुना किरणेन "किरणोस्रमयूखांशुगभस्तिघृणिघृष्णयः" इत्यमरः। मूले हस्तमूले वेष्टितमिव पद्मिनीभ्रातुः पद्मस्य समुद्धरणार्थं संलग्नमिव धत्ते धारयति। उत्प्रेक्षालङ्कारः।

भाषा

चन्द्रलेखा, सोने के कड़ो से युक्त पद्म (की शोभा) को अपहरण करने वाले हाथो को मानो मूल में पद्मिनी के पति सूर्य के किरण से घिरे हुए धारण करती थी। अर्थात् मानो पद्मिनी के पति सूर्य अपने साले पद्म की रक्षा के लिये वहाँ विद्यमान थे और सोने के कड़े ही सूर्य के किरण थे।

हस्ते चकास्ति बालायास्तस्याः कङ्कणमालिका।
मनःकुरङ्गबन्धाय पाशालीव मनोभुवः ॥६२॥

अन्वयः

बालायाः तस्याः हस्ते कङ्कणमालिका मनःकुरङ्गबन्धाय मनोभुवः पाशाली इव चकास्ति।

व्याख्या

बालायाः कौमार्याः तस्याश्चन्द्रलेखायाः हस्ते करे कङ्कणमालिका कङ्कणमाला मनश्चित्तमेव कुरङ्गो मृगस्तस्य बन्धाय प्रसभ ग्रहणाय मनोभुवः कामस्य पाशाना रज्जूनामाली श्रेणिरिव चकास्ति शोभते। उत्प्रेक्षालङ्कारः।

भाषा

मुग्धा चन्द्रलेखा के हाथ के कङ्कणसमूह मानों मनरूपी हिरण को फँसाने के लिये कामदेव के पाश ही हो ऐसे शोभित होते थे।

कृशाङ्ग्याः कुचभारेण दूरमुत्सारितौ भुजौ।
वहतः कलहायेव वाचालां वलयावलिम् ॥६३॥

अन्वयः

कृशाङ्ग्याः कुचभारेण दूरम् उत्सारितौ भुजौ कलहाय इव वाचालां वलयावलिं वहतः।

व्याख्या

कृशान्यङ्गानि यस्यास्सा कृशाङ्गी तस्याः कृशाङ्ग्यास्तन्वङ्ग्याः कुचभारेण स्तनभारेण दूरं विप्रकृष्टदेशं "नेदिष्ठमन्तिकतमं स्याद्दूरं विप्रकृष्टकम्" इत्यमरः। उत्सारितावपसारितौ भुजौ बाहू कलहायेव कुचभारेण साकं कलहं कर्तुं वैरनिस्सारणार्थं वाचालां "स्याज्जल्पकस्तु वाचालो वाचाटो बहुगर्ह्यवाक्" इत्यमरः। मुखरा वलयावलिं कङ्कणावलिं वहतः धारयतः। फलोत्प्रेक्षा चात्र।

भाषा

कृश शरीर वाली चन्द्रलेखा के कुचो के विस्तार से दूर २ कर दिए गए दोनों बाहू कुचभार से झगडा करने के लिये मानो शब्द करने वाले कङ्कणों को धारण करते हैं।

सरले एव दोर्लेखे यदि चञ्चलचक्षुषः।
अमुग्धाभ्यो मृणालीभ्यः कथमाजह्रतुः श्रियम् ॥६४॥

अन्वयः

यदि चञ्चलचक्षुषः दोर्लेखे सरले एव (तर्हि) अमुग्धाभ्यः मृणालीभ्यः श्रियं कथम् आजह्रतुः।

### व्याख्या

यदि चञ्चले चक्षुषी यस्यास्ता चञ्चलचक्षुस्तस्याः चञ्चलचक्षुषः दोर्लते भुजलते "भुजबाहू प्रवेष्टो दोः" इत्यमरः। सरले एवाऽवक्रे आर्जवयुक्ते ऋजुस्वरूपे एव (श्लेषात् सरलस्वभावे एव) तर्हि अमुग्धाभ्यः प्रौढाभ्यः मृणालीभ्यः बिसलताभ्यः श्रियं लक्ष्मीं कथं केन प्रकारेणाऽऽजह्रतुः बलादाचकर्षतुः।

### भाषा

यदि चञ्चल नेत्र वाली चन्द्रलेखा के बाहू स्वयं मुग्धा होने से मुग्ध अर्थात् सरल हैं तो प्रौढावस्था को प्राप्त कमल की डण्डियों से उन्होंने कैसे शोभा छीन ली। अर्थात् उसके बाहू मृणाल के ऐसे चिकने, सुन्दर और सरल थे।

**बाहू तस्याः कुचाभोग-निरुद्धान्योन्यदर्शनौ।**
**मन्त्रितं कथमेताभ्यां मृणाली कीर्तिलुण्ठनम् ॥६५॥**

### अन्वयः

(यदि) तस्याः कुचाभोगनिरुद्धान्योन्यदर्शनौ बाहू (तर्हि) एताभ्यां मृणालीकीर्तिलुण्ठनं कथं मन्त्रितम्।

### व्याख्या

यदि तस्याश्चन्द्रलेखायाः कुचयोराभोगेन विस्तारेण "आभोगः परिपूर्णता" इत्यमरः। निरुद्धं प्रतिबद्धमन्योन्यदर्शनं परस्परावलोकनं ययोस्तौ कुचाभोगनिरुद्धान्योन्यदर्शनौ बाहू भुजौ स्तः तर्हि एताभ्यां भुजाभ्यां मृणालीकीर्तेर्मृणालीसौष्ठवसम्बन्धि यशसो लुण्ठनं मर्दनमपहरणं कथं केन प्रकारेण मन्त्रितं मिथो गुप्तरूपेण विचारितम्।

### भाषा

चन्द्रलेखा के स्तनों के विस्तार से एक दूसरे का दर्शन भी परस्पर न कर सकने वाले उसके दोनों बाहुओं ने कमल के डण्डे के सौन्दर्य की कीर्ति को अपहरण करने का गुप्त विचार कैसे किया।

**मुखारविन्दवक्त्रश्रीः सुतनोररुणोऽधरः।**
**कुरुते हारमाणिक्य-प्रदीपान्पाण्डुरत्विषः ॥६६॥**

अन्वयः

सुतनोः मुखारविन्ददत्तश्रीः अरुणः अधरः हारमाणिक्यप्रदीपान् पाण्डुरत्विषः कुरुते ।

व्याख्या

सुतनोः सुन्दरशरीरायाः मुखमेवारविन्दं कमलमिति मुखारविन्दं "वा पुंसि पद्मं नलिनमरविन्दं महोत्पलम्" इत्यमरः । तस्मै दत्ता समर्पिता श्रीर्लक्ष्मीर्येन स मुखारविन्ददत्तश्रीः अरुणः रक्तवर्णः सूर्यश्च "अव्यक्तरागस्त्वरुणः" इत्यमरः । "विकर्तनार्कमार्तण्डमिहिरारुणपूषणः" इत्यत्रापि चामरः । हारमाणिक्यस्वरूपप्रदीपान् पाण्डुरत्विषः कान्तिविहीनान् कुरुते ।

भाषा

सुन्दर शरीर वाली चन्द्रलेखा के मुख रूपी कमल की शोभा बढ़ाने वाला लाल ओठ या सूर्य उसके गले के हार के रत्नरूपी दीपों को कान्ति विहीन करता है । (सूर्य कमल को विकसित कर उसकी शोभा बढ़ाता है और उसके तेज के सामने दीपक के तेज फीके पड़ जाते हैं ।)

सन्ततोदयसन्ध्येव वदनेन्दोरनिन्दिता ।
तदोष्ठमुद्रा लावण्य-समुद्रस्येव विद्रुमः ॥६७॥

अन्वयः

तदोष्ठमुद्रा वदनेन्दोः अनिन्दिता सन्ततोदयसन्ध्या इव लावण्यसमुद्रस्य विद्रुमः इव ।

व्याख्या

तस्या ओष्ठमुद्रा ओष्ठरचना वदनेन्दोः मुखचन्द्रस्यानिन्दिता प्रशस्ता सन्ततं निरन्तरमुदयकालिकसन्ध्या इव रक्तवर्णसमन्विता लावण्यसमुद्रस्य सौन्दर्यसमुद्रस्य विद्रुमः प्रवालः "अथ विद्रुमः पुंसि प्रवालं पुन्नपुंसकम्" इत्यमरः । इव । अत्रोत्प्रेक्षालङ्कारः ।

भाषा

चन्द्रलेखा के ओठों की रचना मानो मुखरूपी चन्द्रमा की निर्दोष सतत स्थिर रहने वाली चन्द्रोदय के समय की लालवर्ण की सन्ध्या तथा सौन्दर्यरूपी समुद्र का मूंगा हो ।

मुखं वहति बन्धूक-बन्धुरेणाधरेण सा ।
पूर्णेन्दुमिव सोदर्यादङ्कलालितकौस्तुभम् ॥६८॥

अन्वयः

सा बन्धूकबन्धुरेण अधरेण सोदर्यात् अङ्कलालितकौस्तुभं पूर्णेन्दुम् इव मुखं वहति ।

व्याख्या

सा चन्द्रलेखा बन्धूकपुष्पमिव "माध्यकुन्दं रक्तकस्तु बन्धूको बन्धुजीवकः" इत्यमरः । बन्धुर मनोज्ञ "बन्धूरबन्धुरौ रम्ये नम्रे हसे तु बन्धुरः" इति विश्वः । रक्तवर्णं तेन बन्धूकबन्धुरेणाधरेणाधरोष्ठेन हेतुना समानमुदर यस्य स सोदरस्तस्य भावस्सौदर्यं तस्मात् भ्रातृस्नेहेनाङ्के उत्सङ्गे "उत्सङ्गचिन्हयोरङ्कः" इत्यमरः । लालित. पालित कौस्तुभ एतन्नामा मणिर्येन स तमङ्कलालितकौस्तुभ पूर्णेन्दुमिव सम्पूर्णचन्द्रमिव मुखमाननं वहति बिभर्ति । उत्प्रेक्षालङ्कारः ।

भाषा

चन्द्रलेखा लालकुन्द के लाल पुष्प के समान सुन्दर ओठों के कारण मानो, भ्रातृस्नेह से लाल कौस्तुभ मणी को गोद में लिए हुए पूर्ण चन्द्रमा के समान मुख धारण करती है। कौस्तुभमणि भी समुद्र से निकले १४ रत्नों में होने से चन्द्रमा का सोदर्य है अर्थात् चन्द्रमा का भाई है ।

भाति दन्तच्छदेनास्याः स्वच्छा दशनमालिका ।
सरस्वत्यक्षमालेव पूजापद्मदलाञ्चिता ॥६९॥

अन्वयः

अस्याः स्वच्छा दशनमालिका दन्तच्छदेन पूजापद्मदलाञ्चिता सरस्वत्यक्षमाला, इव भाति ।

व्याख्या

अस्याश्चन्द्रलेखायाः स्वच्छा धवला दशनानां दन्तानां मालिका श्रेणिः दशनमालिका दशना· दन्ताश्छाद्यन्तेऽनेनेति दशनच्छदस्तेन दशनच्छदेनाधरेण पूजार्थं सञ्चितानि समर्पितानि पद्मदलानि रक्तकमलपत्राणि तैरञ्चिता भूषिता पूजापद्मदलाञ्चिता सरस्वत्या वाग्देव्या· अक्षस्फटिकानां माला इव भाति विद्योतते । अत्रोत्प्रेक्षालङ्कारः ।

भाषा

इस चन्द्रलेखा के श्वेत दांतों की कतार, लाल ओठों के कारण से मानो, पूजा में लाल कमल के पत्ते से शोभित सरस्वती की स्फटिक की माला ही हो ऐसी शोभित होती थी।

अधरोऽसौ कुरङ्गाक्ष्याः शोभते नासिकातले।
सुवर्णनलिकामध्यान्माणिक्यमिव विच्युतम् ॥७०॥

अन्वयः

कुरङ्गाक्ष्याः नासिकातले असौ अधरः सुवर्णनलिकामध्यात् विच्युतं माणिक्यम् इव शोभते।

व्याख्या

कुरङ्गस्य मृगस्याक्षिणीवाक्षिणी यस्यास्सा तस्याः कुरङ्गाक्ष्याः नासिकातले नासाधःस्थले "अधः स्वरूपयोरस्त्री तलम्" इत्यमरः। असावधरः सुवर्णनलिकामध्यात् काञ्चननलिकामध्यात् विच्युतं स्खलितं माणिक्यं पद्मरागमणिरिव शोभते। उत्प्रेक्षा।

भाषा

मृगनयनी के नाक के नीचे विद्यमान लाल ओठ मानो सोने की नली में से नीचे गिरा पद्मराग मणि ही ऐसा शोभित होता था।

पुराणबाणत्यागाय नूतनास्त्रकुतूहलात्।
तन्नासा भाति कामेन तूणेवाधोमुखीकृता ॥७१॥

अन्वयः

तन्नासा कामेन नूतनास्त्रकुतूहलात् पुराणबाणत्यागाय अधोमुखीकृता तूणा इव भाति।

व्याख्या

तस्याश्चन्द्रलेखायाः नासा नासिकेति तन्नासा "घोणा नासा च नासिका" इत्यमरः। कामेन मन्मथेन नूतनानां नवीनानामस्त्राणां शस्त्राणां कुतूहलात् संग्रहेच्छया पुराणाः प्राचीना ये बाणा शरास्तेषां त्यागाय परिजिहीर्षयाऽधोमुखीकृता निम्नमुखीकृता तूणा तूणीरमिव भाति सुशोभते। उत्प्रेक्षालङ्कारः।

भाषा

चन्द्रलेखा की नाक मानो कामदेव ने नये वाणों का संग्रह करने के हेतु से पुराने वाणों को निकाल फेंकने के लिये उलटाया हुआ उसका तरकस हो ऐसी शोभित होती थी।

अमुष्य मुषिता लक्ष्मीश्चक्षुषेति न नूतनम् ।
न वेद्मि कथयत्यस्याः कर्णे लग्नं किमुत्पलम् ॥७२॥

अन्वयः

चक्षुषा अमुष्य लक्ष्मीः मुषिता इति नूतनं न ( यतः ) अस्याः कर्णे लग्नम् उत्पलं किं कथयति ( इति ) न वेद्मि।

व्याख्या

चक्षुषा नायिकानेत्रेणामुष्य कमलस्य लक्ष्मीः शोभा मुषिताऽपहृता इति नूतनं न नवीनसमाचारो नास्ति किन्तु प्रतिदिनकृत्यं (यतः) अस्याश्चन्द्रलेखायाः कर्णे श्रोत्रे लग्नं समासक्तमवतंसरूपेणोत्पलं कमलं किं निन्दावाक्यं कथयति इति न वेद्मि न जाने।

भाषा

चन्द्रलेखा के नेत्रों ने इस कमल की शोभा को अपहरण कर लिया है—यह कोई नई बात नहीं है। लेकिन चन्द्रलेखा के कान पर का लीला कमल उसके कान में क्या शिकायत कर रहा है—यह समझ में नहीं आता है।

मृगीसम्बन्धिनी दृष्टिरसौ यदि न सुभ्रुवः ।
धावति श्रवणोत्तंस—लीला-दूर्वाङ्कुरे कुतः ॥७३॥

अन्वयः

यदि सुभ्रुवः दृष्टिः मृगीसम्बन्धिनी न ( तर्हि ) कुतः श्रवणोत्तंस-लीलादूर्वाङ्कुरे धावति।

व्याख्या

यदि सुष्ठु भ्रुवौ यस्यास्सा तस्या दृष्टिः नेत्रं मृगीसम्बन्धिनी हरिणी सम्बन्धिनी न (तर्हि) कुतः कस्माद्धेतोः श्रवणयोः कर्णयोरुत्तंसोऽवतंसः "पुंस्युत्तंसावतंसौ द्वौ कर्णपूरे च शेखरे" इत्यमरः। तस्मिन् दूर्वाङ्कुरे दूर्वाकोमलदले

धावति वेगात् परिपतति। मृगीणामेव स्नेहः कोमलदूर्वाङ्कुरभक्षणे न मानुषीणामिति भावः।

भाषा

अगर सुन्दर भौंवो वाली चन्द्रलेखा के नेत्र हरिणी के नेत्र नहीं हैं तो ये नेत्र उसके कान पर भूषण के रूप में रक्खे हुए कोमल दूब की ओर क्यों लपकते हैं। अर्थात् उसके बड़े २ नेत्र कान तक फैले हुए थे।

तस्याः श्रवणमार्गेण चलिते यदि लोचने।
कुतः प्रकामधवले धत्तः कृष्णानुरक्तताम् ॥७४॥

अन्वयः

यदि तस्याः प्रकामधवले लोचने श्रवणमार्गेण चलिते ( तर्हि ) कुतः कृष्णानुरक्तता धत्तः।

व्याख्या

यदि तस्याः नायिकायाः प्रकाममत्यन्तं धवले उज्ज्वले निर्मलहृदये वा लोचने नयने श्रवणमार्गेण चलिते कर्णान्तविश्रान्ते पक्षान्तरे उपदेशश्रवणपराङ्मुखे तर्हि कुतः कस्मात्कारणात् कृष्णञ्चानुरक्तञ्च कृष्णानुरक्ते तयोर्भावः कृष्णानुरक्तता तां श्यामत्व लौहित्यं च कृष्णे श्रीकृष्णभगवत्यनुरक्तता विशिष्टोऽनुरागस्तं धत्तः धारयतः। भगवच्चरित्रोपदेशप्रीतिरहितो जनो भगवदनुरागवञ्चितो भवति। अत्र त्वन्यथैव दृश्यते इति वैचित्र्यमिति शब्दश्लेषबलात् प्रतीतिः।

भाषा

यदि चन्द्रलेखा के अत्यन्त श्वेत या स्वच्छ हृदय वाले दोनों नेत्र, कान तक फैले हुए हैं या सदुपदेश सुनने से विमुख हैं तो कैसे श्यामता तथा रक्तता को या श्रीकृष्ण में अनुराग को धारण करते हैं।

श्रूयतां कौतुकं सोऽपि स्मरः शृङ्गारिणां गुरुः।
अमुष्याः शिष्यतामेति श्रवणोन्मुखयोर्दृशोः ॥७५॥

अन्वयः

कौतुकं श्रूयतां सः शृङ्गारिणां गुरुः स्मरः अपि अमुष्याः श्रवणोन्मुखयोः दृशोः शिष्यताम् एति।

व्याख्या

कौतुकं वैचित्र्यमाश्चर्यवार्ता वा श्रूयतामाकर्ण्यताम्। सः प्रसिद्धः शृङ्गारिण्यश्च कामिन्यश्च शृङ्गारिणश्च कामिनश्च शृङ्गारिणस्तेषां शृङ्गारिणां गुरुराचार्यः स्मरः कामोऽप्यमुष्याः नायिकायाः श्रवणोन्मुखयोः कर्णान्तविश्रान्तयोरुपदेशश्रवणनिरतयोर्वा दृशोः नेत्रयोः शिष्यतां नेत्रकर्तृकवशीकरणोपदेशपात्रत्वमेति प्राप्नोति। अहो! नेत्रयोर्युवजनवशीकरणसामर्थ्यं कामादप्यधिकमिति भावः।

भाषा

एक आश्चर्य की बात सुनिए। जो कामदेव कामी तथा कामिनिओं का गुरु है वह भी इस चन्द्रलेखा के कान तक फैले हुए या सदुपदेश सुनने में लगे हुए नेत्रों की शिष्यता प्राप्त करता है। अर्थात् कामियों को कामदेव से भी अधिक वश में करने वाले इसके नेत्र हैं।

सौन्दर्यपात्रे वक्त्रेन्दौ कुरङ्गासङ्गभीतया।
सूत्रितौ श्रोत्रपाशाभ्यां पाशाविव मृगीदृशा ॥७६॥

अन्वयः

सौन्दर्यपात्रे वक्त्रेन्दौ कुरङ्गासङ्गभीतया मृगीदृशा श्रोत्रपाशाभ्यां सूत्रितौ पाशौ इव।

व्याख्या

सौन्दर्यस्य रामणीयकस्य पात्रं भाजनं तस्मिन् सौन्दर्यपात्रे वक्त्रं मुखमेवेन्दुस्तस्मिन् वक्त्रेन्दौ मुखचन्द्रे कुरङ्गस्य लाञ्छनमृगस्याऽऽसङ्गस्सम्बन्धस्तस्मात् भीता तया कुरङ्गासङ्गभीतया मृगीदृशा नायिकया श्रोत्रपाशाभ्यां कर्णाभ्यां श्लेषबलात् कर्णरूपरज्जुभ्यां सूत्रितौ संयमितौ सुरचितौ पाशौ जाले इव कर्णौ (प्रतीयेते) स्वमुखे लाञ्छनमृगस्यागमनेनानिर्वचनीयसौन्दर्यं प्रतिहतं चन्द्रसाम्यं च भवेदधुना तु निष्कलङ्कत्वाच्चन्द्रादप्यधिकं सौन्दर्यं प्रतिभासत इति भावः।

भाषा

सौन्दर्य के स्थान अपने मुख रूपी चन्द्र में कहीं चन्द्रमा का कलङ्करूप मृग न आ जाय इस भय से मानों मृगनयनी द्वारा अपने कान रूपी डोरों से बनाए हुए दो पाशों के ऐसे उसके दोनों कान शोभित होते थे।

किञ्चित्सविभ्रमोदञ्चि—भ्रूलता भाति भामिनी ।
बालक्रीडाप्रतिद्वन्द्वि तर्जयन्तीव यौवनम् ॥७७॥

अन्वयः

किञ्चित्सविभ्रमोदञ्चिभ्रूलता भामिनी बालक्रीडाप्रतिद्वन्द्वि यौवनं तर्जयन्ती इव भाति ।

व्याख्या

किञ्चिन्मनाक् विभ्रमेण विलासेन सहिता सविभ्रमा उदञ्चिन्यूर्ध्वप्रसारिणी कोपोत्कलिका भ्रूलता यस्यास्सा किञ्चित्सविभ्रमोदञ्चिभ्रूलता भामिनी नायिका बालक्रीडायाः प्रतिद्वन्द्वि प्रतिरोधक बालक्रीडाप्रतिद्वन्द्वि यौवन तारुण्यं तर्जयन्ती भर्त्सयन्तीव भाति सुशोभते ।

भाषा

विलास के साथ कुछ सिकोड़ी हुई अतएव कुछ ऊपर उठी हुई अतएव क्रोध प्रकट करने वाली भौंवो वाली चन्द्रलेखा, बाल्यावस्था के लज्जा रहित खेल-कूद की विरोधिनी जवानी को मानो डराती हो ऐसी शोभित होती थी ।

भास्वत्कुण्डलमाणिक्य—प्रभाप्रतिहतेरिव ।
नताङ्ग्याः श्रवणोत्सङ्गमारूढा नयनद्वयी ॥७८॥

अन्वयः

नताङ्ग्याः नयनद्वयी भास्वत्कुण्डलमाणिक्यप्रभाप्रतिहतेः श्रवणोत्सङ्गम् आरूढा इव ।

व्याख्या

नतान्यङ्गानि यस्यास्सा नताङ्गी तस्याः नताङ्ग्याः अवनतशरीरावयवायाः नयनद्वयी नेत्रयुगल भास्वद्दीप्यमान कुण्डलस्य माणिक्य पद्मरागमणिस्तस्य प्रभा कान्तिस्तस्याः प्रतिहते भग्निनेजस्सोढुमसमर्थत्वादिव श्रवणयो कर्णयोरुत्सङ्ग-मङ्कमारूढेव भाति । कर्णान्तप्रसारिनयनयुगलमिति भाव. ।

भाषा

उस नम्रशरीरवाली चन्द्रलेखा के दोनो नत्र उसके कुण्डल के चमकने वाले माणिक्य की कान्ति से अपनी कान्ति को प्रतिबन्धित समझ मानो कानो पर सवार हो गये हो । अर्थात् उसकी आखें कानो तक विस्तीर्ण थी ।

भ्रूलेखायुगलं भाति तस्याश्चटुलचक्षुषः ।
पत्रद्वयीव हरिता नासावंशस्य निर्गता ॥७९॥

अन्वयः

चटुलचक्षुषः तस्याः भ्रूलेखायुगलं नासावंशस्य निर्गता हरिता पत्रद्वयी इव भाति ।

व्याख्या

चटुलचक्षुषः चञ्चलनयनायाः तस्याः नायिकायाः भ्रूलेखायुगलं भ्रूयुगं नासावंशस्य नासिकारूपवंशवृक्षस्य "घोणा नासा च नासिका" इत्यमरः । निर्गता समुद्भूता हरितवर्णा कृष्णवर्णा पत्रयोर्द्वयी पत्रद्वयी पत्रयुगलमिव भाति । उत्प्रेक्षालङ्कारः ।

भाषा

चञ्चल नेत्रवाली चन्द्रलेखा की दोनों भौंवें मानो नाक रूपी बास के वृक्ष से निकली हुई काले रंग की दो पत्तियाँ थी ।

नासावंशविनिर्मुक्त—मुक्ताफलसनाभिना ।
भाति भालतलस्थेन बाला चन्दनबिन्दुना ॥८०॥

अन्वयः

बाला भालतलस्थेन नासावंशविनिर्मुक्तमुक्ताफलसनाभिना चन्दनबिन्दुना भाति ।

व्याख्या

बाला मुग्धा चन्द्रलेखा नायिका भालतले ललाटतले तिष्ठतीति भालतलस्थस्तेन भालतलस्थेन नासावंशान्नासिकारूपवंशवृक्षाद्विनिर्मुक्तं निर्गतं प्रकटीभूतं यन्मुक्ताफलं तस्य सनाभिस्सदृशस्तेन धवलतया चन्दनबिन्दुना उज्वलचन्दनतिलकेन भाति सुशोभते । उपमालङ्कारः ।

भाषा

मुग्धा चन्द्रलेखा नाक रूपी बास के वृक्ष से उत्पन्न मोती के समान ललाटतल में विद्यमान सफेद चन्दन के बिन्दु से शोभित होती थी ।

तस्याः कचभरव्याजात् तनयस्नेहलालितः ।
आरूढः पार्वतीबुद्ध्या गुहबर्हीव मूर्धनि ॥८१॥

अन्वयः

तस्याः कचभरव्याजात् तनयस्नेहलालितः गुहबर्ही पार्वतीबुद्ध्या मूर्धनि आरूढः इव ।

व्याख्या

तस्याश्चन्द्रलेखायाः कचभरव्याजात् केशसमूहच्छलेन तनयस्य स्कन्दस्य स्नेहेन प्रेम्णा लालितः पालितः गुहबर्ही कार्तिकेयमयूरः 'मयूरो बर्हिणो बर्ही नीलकण्ठो भुजङ्गभुक्" इत्यमरः । पार्वतीबुद्ध्याऽलौकिकसौन्दर्यप्रतिभानेन स्कन्दमाता पार्वत्येवेयमिति ज्ञानात्तस्या मूर्धनि प्रेमातिशयवशात् शिरस्यारूढ इव सन्निविष्ट इव । उत्प्रेक्षालङ्कारः ।

भाषा

चन्द्रलेखा के केशजाल के मिष से मानो अपने पुत्र स्कन्द के समान प्रेम से पाला हुआ कार्तिकेय का मयूर इसको पार्वती समझ उसके सिर पर बैठ गया हो ।

गण्डे मण्डनमात्मनैव कुरुते वैदग्ध्यगर्वादसौ
त्यक्त्वा हेमविभूषणानि तनुते ताडीदलेष्वाग्रहम् ॥
मन्दा कन्दुकखेलनाय भजते सारीषु शिक्षारसं
तन्व्या चित्रमकाण्ड एव लटभाभावे निबद्धो भरः ॥८२॥

अन्वयः

असौ वैदग्ध्यगर्वात् आत्मना एव गण्डे मण्डनं कुरुते । हेमविभूषणानि त्यक्त्वा ताडीदलेषु आग्रहं तनुते । कन्दुकखेलनाय मन्दा सारीषु शिक्षारसं भजते । तन्व्या अकाण्डे एव लटभाभावे भरः निबद्धः (इति) चित्रम् ॥

व्याख्या

असौ चन्द्रलेखा वैदग्ध्यस्य चातुर्यस्य गर्वाद्दर्पादात्मना एव स्वयमेव गण्डे कपोले "अधस्ताच्चिबुकं गण्डौ कपोलौ" इत्यमरः । मण्डनमलङ्कारं कुरुते रचयति पत्राविलेखनम् । हेम्नस्सुवर्णस्य विभूषणान्यलङ्कारान् त्यक्त्वा विहाय

ताडीदलेषु तालपत्रेषु "पत्रं पलाशं छदनं दलं पर्णं छदः-पुमान्" इत्यमरः। आग्रहं विशिष्टस्नेहं तनुते विस्तारयति। कन्दुकखेलनाय क्रीडनाय मन्दा निरुद्यमा सारीष्वक्षेषु क्रीडाविशेषेषु शिक्षारसमभ्यासं भजते करोति। तन्व्या सूक्ष्माङ्ग्या अकाण्ड एव सहसैव लटभाभावे सौन्दर्ये रमणीयत्वविषये भरः आग्रहः निबद्धः धारितः (इति) चित्रमाश्चर्यम्। शार्दूलविक्रीडितं छन्दः। सूर्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितमिति लक्षणात्।

### भाषा

यह चन्द्रलेखा अपनी चतुराई के अभिमान से अपने हाथ से ही अपने गालों पर चित्रकारी करती है। सोने के बने आभूषणों को छोड़कर ताल के पत्तों को आभूषण के रूप में धारण करने में आग्रह करती है। स्तन, नितम्ब आदि के बोझे से गेंद खेलने में असमर्थ होकर शनज चौपड़ आदि बैठ कर खेले जाने वाले खेलों को सीखने की अभिरुचि दिखाती है। अस्थूल शरीर वाली चन्द्रलेखा ने अचानक ही सुन्दरी स्त्री के कर्तव्यों में जिद् पकड़ ली, यह आश्चर्य है। अर्थात् सुन्दरी स्त्रियां जैसा अपना शृङ्गार आदि करती हैं वैसा ही वह भी करने लगी।

भृङ्गालीमुदरे क्षिपन्ति शतशः पद्मानि शल्यीमिव
　प्रत्यागच्छति लङ्घनार्थमसकृद्व्योमाङ्गणं चन्द्रमाः॥
वक्त्रेणापहृते कुरङ्गकदृशस्त्रैलोक्यरूपोच्चये
　प्रत्यावर्तनवाञ्छयेव कति न क्लेशं समातन्वते॥८३॥

### अन्वयः

कुरङ्गकदृशः वक्त्रेण त्रैलोक्यरूपोच्चये अपहृते (सति) कति प्रत्यावर्तनवाञ्छया इव क्लेशं न समातन्वते। (तथाहि) पद्मानि उदरे शल्यीम् इव भृङ्गालीं शतशः क्षिपन्ति। चन्द्रमाः लङ्घनार्थं व्योमाङ्गणम् असकृत् प्रत्यागच्छति।

### व्याख्या

कुरङ्गकदृशः मृगनयनायाः वक्त्रेण मुखेन त्रैलोक्यस्य त्रिभुवनस्य रूपोच्चये सौन्दर्यसारेऽपहृते बलाद्गृहीते सति कति कियन्तश्चन्द्रपद्मादयः प्रत्यावर्तनस्य पुनर्ग्रहणस्य वाञ्छया इच्छाभिलाषेणेव क्लेशं कष्टं न समातन्वते न कुर्वन्ति। अपि तु सर्वे सौन्दर्यस्य पुनर्ग्रहणे महाप्रयासं वितन्वन्त्येव। यथा-पद्मानि

कमलान्युदरे मध्ये शस्त्रीं छुरिकां (करौलीति हिन्दी भाषायाम्) इव भृङ्गालीं भ्रमरावलीं शतशः शतवारं क्षिपन्ति नियोजयन्ति। चन्द्रमाः (ब्राह्मणवत्) लङ्घनार्थमाक्रमणार्थं भोजनपरित्यागाय वा व्योमाङ्गणमाकाशमसकृत् वारम्वारं प्रत्यागच्छति व्यावृत्य चरति। अत्रापि शार्दूलविक्रीडितम्छन्दः।

### भाषा

मृगनयनी चन्द्रलेखा के मुख के द्वारा तीनों लोकों के सौन्दर्यसार का अपहरण कर लिए जाने पर कितने ही मानो फिर से वह सौन्दर्यसार प्राप्त करने की इच्छा से प्रयास रूपी कष्ट नहीं भोगते हैं अर्थात् भोगते ही हैं। (देखो) कमल छूरी के समान काली भ्रमरपंक्ति को सैकड़ों बार उसके पेट में भोंकने के लिये प्रयोग करता है और चन्द्रमा उसको लांघ जाने के लिये या कुछ न खा कर उपवास करने के निमित्त बार-बार आकाशरूपी आंगन में फेरी लगाता है।

दायादत्वं मनसिजधनुर्भ्रूविलासस्य धत्ते
योगक्षेमौ वहति नयनद्वन्द्वमिन्दीवराणाम् ॥
तद्गात्राणां पुनरिह जगज्जैत्रलावण्यभाजा-
माभात्यग्रे मलवदखिलं मूलवर्णं सुवर्णम् ॥८४॥

### अन्वयः

मनसिजधनुः भ्रूविलासस्य दायादत्वं धत्ते। नयनद्वन्द्वम् इन्दीवराणां योगक्षेमौ वहति। इह पुनः जगज्जैत्रलावण्यभाजां तद्गात्राणाम् अग्रे अखिलं मूलवर्णं सुवर्णं मलवत् आभाति।

### व्याख्या

मनसिजस्य कामस्य "शम्बरारिर्मनसिजः कुसुमेषुरनन्यजः" इत्यमरः। धनुःकोदण्डं मनसिजधनुः भ्रूविलासस्य नायिकाभ्रूविलासस्य दायादत्वं बान्धवत्वं "दायादौ सुतबान्धवौ" इत्यमरः। धत्ते धारयति। भ्रूविलासस्य सेवायामात्मानं बहुमन्यत इत्यर्थः, भ्रूविलासस्याग्रे कामधनुषो माहात्म्यं नास्तीति न तादृशं वशीकरणसामर्थ्यमतस्तस्य वैयर्थ्यमेव। नयनद्वन्द्वं नेत्रयुग्ममिन्दीवराणां नीलकमलानां योगक्षेमौ अलब्धलाभं लब्धरक्षणञ्च पालनपोषणादि भारं वहति धारयति, नयनद्वन्द्वस्य समक्षमिन्दीवराणां रमणीयत्वाभावादैन्यमेव। इह जगति

पुनः जगतो जैत्रं जयनशीलं लावण्यं भजन्तीति तेषां जगज्जैत्रलावण्यभाजां तस्यास्सुन्दर्या गात्राणामङ्गानामग्रेऽखिलं सम्पूर्णं मूलवर्णं शुद्धवर्णं सुवर्णं काञ्चनं मलवदसुन्दरं मालिन्यमयमित्यर्थः। मन्दाक्रान्ताच्छन्दः। "मन्दाक्रान्ताम्बुधिरसनगैर्मो भनौ तौ गयुग्ममिति" लक्षणम्।

## भाषा

कामदेव का धनुष चन्द्रलेखा के भौंवों की शोभा का बान्धव है अर्थात् भौंवों की शोभा रखने वाला है। इसके दोनो नेत्र नीले कमलों का पालन पोषण करने वाले हैं अर्थात् इसके नेत्र की शोभा से वे शोभित होते हैं और इस संसार में जगत् को जीतने वाले सौन्दर्य से युक्त इसके शरीर के अवयवों के मुकाबले में समग्र शुद्ध सोना मलिन दीख पड़ता है।

**दृशोः सीमावादः श्रवणयुगलेन प्रतिकलं**
**स्तनाभ्यां संरुद्धे हृदि मनसिजस्तिष्ठति बलात् ॥**
**नितम्बः साक्रन्दं क्षिपति रशनादाम परतः**
**प्रवेशस्तन्वङ्ग्या वपुषि तरुणिम्नो विजयते ॥८५॥**

## अन्वयः

दृशोः श्रवणयुगलेन प्रतिकलं सीमावादः, मनसिजः स्तनाभ्यां संरुद्धे हृदि बलात् तिष्ठति। नितम्बः साक्रन्दं रशनादाम परतः क्षिपति। तन्वङ्ग्याः वपुषि तरुणिम्नः प्रवेशः विजयते।

## व्याख्या

दृशोः नेत्रयोः श्रवणयुगलेन कर्णयुग्मेन साकं प्रतिकलं प्रतिक्षणं सीमावादः सीमासम्बन्धे कलहो भवति। मनसिजः कामः स्तनाभ्यां कुचाभ्यां संरुद्धे संच्छादिते हृदि वक्षसि बलात् हठात् तिष्ठति, तत्र स्थानाभावात् क्लेशेन हठात् निवसति जन्मभूमिप्रीत्या। नितम्बः श्रोणिराक्रन्देन नादेन सहितं साक्रन्दं रशनादाम काञ्चीदाम स्वस्थूलत्वोदयात् रशनायाः स्थानाभावेनोच्चैः क्रन्दमानामपि तां परतः दूरतः क्षिपति निरस्यति। तन्वङ्ग्याः वपुषि शरीरे तरुणिम्नो यौवनस्य प्रवेशः आक्रमणं विजयते सर्वोत्कर्षेण वर्तते। विजयकर्ता सीमार्थं सर्वत्र कलहं करोति। कश्चिदपि स्वनिर्जितेषु प्रान्तेषु स्थानं दातुं नेच्छति स्वयुद्धया परान् बलतो नाशमुपगतानुपेक्षते। तथैव तन्वङ्ग्यास्तारुण्येन स्वविजयेन

तत्तत्स्थानेषु कलहादिकं कृतमिति भावः। सा च कर्णान्तनेत्रा हृद्गतकामा विशालनितम्बिनी जातेत्यर्थः। शिखरिणीछन्दः।

### भाषा

दोनो आँखो का दोनो कानो से सीमा के सम्बन्ध में क्षण-क्षण में कलह होने लगा। कामदेव इसके दोनो स्तनो से सरुद्ध हृदय में किसी प्रकार हठ से रहने लगा। उसके नितम्ब रोती हुई अर्थात शब्द के साथ टूटने वाली करधनी को दूर फक देने लगा। उस इकहरे शरीर वाली चन्द्रलेखा के शरीर में जवानी के प्रवेश की बलिहारी है।

सीमा के सम्बन्ध में कलह अपने जीते हुए स्थानो में दूसरे का प्रवेश न न होन देना और अपनी वृद्धि से दूसरो के रोते हुए क्षतिग्रस्त होन की उपेक्षा करना विजयी लोगो के लिए स्वाभाविक है। भावार्थ यह है कि जवानी का शरीर में प्रवेश होते ही आँखें कर्णान्त तक फैल गई। स्तन अधिक विशाल हो गए। हृदय में कामवासना होन लगी और नितम्बो के बड हो जाने से करधनी टूटकर गिरन लगी।

दोलायां जघनस्थलेन चलता लोलेक्षणा लज्जते
धत्ते दिक्षु निरीक्षणं स्मितमुखी पारावतानां रुतैः ॥
स्पर्शः कण्टककोटिभिः कुटिलया लीलावने नेष्यते
सज्जं मौग्ध्यविसर्जनाय सुतनोः शृङ्गारमित्रं वयः ॥८६॥

### अन्वय.

लोलेक्षणा दोलायां चलता जघनस्थलेन लज्जते। स्मितमुखी पारावतानां रुतैः दिक्षु निरीक्षणं कुरुते। कुटिलया कण्टककोटिभिः स्पर्शः लीलावने न इष्यते। शृङ्गारमित्रं वयः सुतनोः मौग्ध्यविसर्जनाय सज्जम्।

### व्याख्या

लोले चञ्चले ईक्षणे नेत्रे यस्यास्सा लोलेक्षणा दोलायां प्रेङ्खायां "शिबिका याप्ययानं स्याद्दोला प्रेङ्खादिका स्त्रियाम्" इत्यमरः। चलता दोलायमानेन जघनस्थलेन नितम्बपुरोभागेन लज्जते, सुरतसमयेऽपि दोलायमानस्य जघनभागस्य स्मरणाल्लज्जामाप्नोति। स्मितमुखी ईषद्धास्ययुक्तानना पारावतानां कपोतानां "पारावतः कलरवः कपोतः" इत्यमरः। रुतं शब्दं "तिरश्चां वाशितं रुतम्"

इत्यमरः । दिक्षु सर्वतो निरीक्षणं कुरुते (कपोतरुतेन सुरतसमये लिङ्गयोनिघर्षणरुतस्मरणेनोत्कण्ठया इतस्ततः निरीक्षते कुतोऽयं विचित्रशब्दस्समायाति) कपोताः खलु स्वभावत एव बहुविषयलम्पटा भवन्ति । तेषां शब्देन तेषां कामक्रीडा द्रष्टुमितस्ततोऽवलोकयतीति भावः । कुटिलयाऽमुग्धया कण्टककोटिभिः द्रुमकण्टकाग्रैः स्पर्शः सम्बन्धो लीलावने विलासोद्याने नेष्यते नाभिलष्यते । किं पुनरन्यजननखकोटिकर्तृकस्पर्शः । शृङ्गाररसस्य मित्रं सहायकं वयस्तारुण्यं सुतनोर्नायिकायाः मौग्ध्यविसर्जनाय प्रौढत्वस्य स्वागतार्थं मुग्धताया विसर्जनार्थमार्जवत्यागाय सज्ज दत्तचित्तं कटिबद्धं बद्धपरिकरं वा जातमित्यर्थः । शार्दूलविक्रीडितञ्छन्दः ।

## भाषा

चञ्चल नेत्रवाली चन्द्रलेखा झूले पर, झूले के वेग से हिलने वाले अपने जघनस्थल का अनुभव कर लज्जित होती है । कबूतरों का गुटकना सुन कर, वह हंसमुखी, चारो ओर देखने लगती है । मुग्धावस्था से थोडी आगे बढी हुई चन्द्रलेखा मार्गो में पेडो के कांटो के स्पर्श भी नही चाहती है । शृङ्गार रस की मित्र युवावस्था, सुन्दर शरीर वाली चन्द्रलेखा को मुग्धावस्था से दूर कर प्रौढावस्था को प्राप्त कराने के लिए कटिबद्ध है । अर्थात् झूला झूलने में जघनस्थल के हिलने से रतिविषयक स्मरण होकर लज्जा होने लगी । कबूतरो का गुटकना सुनकर उनकी कामक्रीडा देखने की इच्छा होने लगी और नखक्षत से कांटो के अग्रभाग के ऐसी पीड़ा होती है ऐसा विचार कर उससे बचने की इच्छा होने लगी । इससे सिद्ध होता है कि वह अब प्रौढावस्था में पदार्पण कर रही है ।

लास्याभ्यासमिषेण चित्रमनया गात्रार्पणं शिक्षितं
लीलापञ्चमदोलनेन दलिता कण्ठस्य कुण्ठा गतिः ॥
किं वा वर्णनया समस्तलटभालङ्कारतामेष्यति
स्वल्पेनैव परिश्रमेण रमणी देवस्य रामागुरोः ॥८७॥

### अन्वयः

अनया लास्याभ्यासमिषेण गात्रार्पणं शिक्षितम् (इति) चित्रम् । लीलापञ्चमदोलनेन कण्ठस्य कुण्ठा गतिः दलिता । वर्णनया किं वा, रमणी रामागुरोः देवस्य स्वल्पेन परिश्रमेण एव समस्तलटभालङ्कारताम् एष्यति ।

व्याख्या

अनया चन्द्रलेखया लास्यस्य नृत्यस्य "ताण्डवं नटनं नाट्यं लास्यं नृत्यं च नर्तने" इत्यमरः। अभ्यासस्तस्य मिषेण व्याजेन नृत्यशिक्षाभ्यासव्याजेनेत्यर्थः। गात्रस्य स्वशरीरस्यार्पणं परस्मै प्रीतिपूर्वकं दानं शिक्षितं विदितमिति चित्रमाश्चर्यं लीलापञ्चमस्य विलासयुक्तपञ्चमस्वरस्य दोलनेन गानाभ्यासेन कण्ठस्य कुण्ठा विषमार्गप्रथा गतिः दलिता दूरीकृताऽपसारिता वा। किं वाधिकवर्णनया रमणीयं नायिका रामाणामङ्कनाना गुरोराचार्यस्य देवस्य कामदेवस्य स्वल्पेन परिश्रमेणैव समस्तलब्धभावानां सकलसुन्दरीणामलङ्कारतां चूडामणित्वमेष्यति यास्यति। शार्दूलविक्रीडितं छन्दः।

भाषा

इस चन्द्रलेखा ने नाचने के अभ्यास के मिष से अपना शरीर दूसरों के सुखानुभूति के लिए समर्पण करना सीख लिया यह एक आश्चर्य है। गायन-कला सीखने में मधुर पञ्चम स्वर का प्रयोग करने से इसने अपने गले की रुकावट को दूर कर दिया है। अधिक वर्णन करने से क्या! यह सुन्दरी स्त्रियों के आचार्य कामदेव के थोड़े ही परिश्रम से समस्त सुन्दरियों में श्रेष्ठता को प्राप्त करेगी।

वक्त्रं निर्मलमुन्नता कुचतटी मध्यप्रदेशः कृशः
श्रोणीमण्डलमङ्गनाकुलगुरोर्देवस्य सिंहासनम् ॥
कृत्वा चारुदृशश्चतुष्टयमिदं तुष्टाव मन्ये विधि-
र्हर्षोद्गद्गदगद्यपद्यरचनागर्भैश्चतुर्भिर्मुखैः ॥८८॥

अन्वयः

विधिः चारुदृशः निर्मलं वक्त्रम् उन्नता कुचतटी कृशः मध्यप्रदेशः अङ्गनाकुलगुरोः देवस्य सिंहासनं श्रोणीमण्डलम् इदं चतुष्टयं कृत्वा हर्षात् गद्गदगद्यपद्यरचनागर्भैः चतुर्भिः मुखैः तुष्टाव (इत्यहं) मन्ये।

व्याख्या

विधिर्ब्रह्मा चारुदृशस्सुन्दरनयनायाः निर्मलं विशुद्धं वक्त्रं मुखमुन्नता तुङ्गा कुचतटी स्तनतटी कृशः तनुः मध्यप्रदेशः कटिप्रदेशः अङ्गनाकुलगुरोः नारीवर्गस्य गुरोर्मदनस्य देवस्य सिंहासनस्वरूपं श्रोणीमण्डलं नितम्बबिम्बमिदं चतुष्टयं कृत्वा

निर्माय हर्षादानन्दातिरेकात् गद्गदस्वरेण गद्यानां पद्यानां च रचनाया निर्माणं गर्भेऽभ्यन्तरे येषान्तैः तैः चतुर्भिर्मुखैराननैः तुष्टाव नायिकायास्स्तुतिं चक्रे इत्यहं मन्ये उत्प्रेक्षे। अत्रोत्प्रेक्षालङ्कारः। ब्रह्मणा रचितमेतच्चतुष्टयमनुपमसौन्दर्य-युक्तमिति भावः। शार्दूलविक्रीडितं चच्छन्दः।

### भाषा

ब्रह्मा जी ने सुन्दर नेत्रवाली चन्द्रलेखा के स्वच्छ मुख, उन्नत कुचस्थल, कृष कटि प्रदेश और स्त्रियों के आचार्य कामदेव के सिंहासन स्वरूप नितम्ब (चूतड) इन चारों की रचना कर हर्ष से गद्गद होकर गद्यात्मक और पद्यात्मक इसकी प्रशंसात्मक रचनाओं से युक्त अपने चारों मुखों से इसकी प्रशंसा की ऐसा मैं समझता हूँ।

इत्थं कर्णरसायनं श्रुतवतः कर्णाटपृथ्वीपते—
राकृष्टस्य कुतूहलेन पुनरप्याकांक्षतस्तत्कथाम्।
प्राप्तः पार्श्वममुष्य पल्लवयितुं तामेव वार्तां पुनः
सिञ्जाचालनचञ्चलश्रुतिगलत्ताडङ्कपत्रः स्मरः ॥८६॥

### अन्वयः

इत्थं कर्णरसायनं श्रुतवतः कुतूहलेन आकृष्टस्य पुनः अपि तत्कथाम् आकांक्षतः अमुष्य कर्णाटपृथ्वीपतेः पार्श्वं ताम् एव वार्तां पुनः पल्लवयितुं सिञ्जाचालनचञ्चलश्रुतिगलत्ताडङ्कपत्रः स्मरः प्राप्तः।

### व्याख्या

इत्थं पूर्वोक्तप्रकारेण कर्णरसायनं कर्णामृतं श्रुतवतः कुतूहलेनोत्कण्ठयाऽऽकृष्टस्य समाकृष्टमनसः पुनरपि भूयोऽपि तस्याः कथां वार्तां "वार्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यादपाह्वयः" इत्यमरः। आकाङ्क्षतोऽभिलषतोऽमुष्यास्य कर्णाटपृथ्वीपतेः कुन्तल-देशेश्वरस्य विक्रमादित्यस्य राज्ञः पार्श्वं समीपे तामेव वार्तां कथां पुनः पल्लवयितुं विस्तारयितुं सिञ्जाया मौर्व्याः चालनेन चञ्चले चपले श्रुती कर्णौ ताभ्यां गलत् पतत् ताडङ्कपत्रं कर्णावतंसो यस्य स एवंभूतः स्मरः कामः प्राप्तः। चन्द्रलेखा सौन्दर्यसम्बन्धिनीं वार्तां निशम्य विक्रमादित्यः कामविह्वलो जात इति भावः। शार्दूलविक्रीडितञ्छन्दः।

**भाषा**

इस प्रकार कान के लिये अमृत रूप अर्थात् कान को अच्छी लगने वाली बात को सुनने वाले, कौतुक से आकम्पित भए हुए और फिर से उस कथा को सुनने की आकांक्षा रखने वाले उस कर्णाटदेश के राजा विक्रमाङ्कदेव के पास में उसी बात को अधिक बढ़ाकर कहने के लिये मौर्वी के चढ़ाने से चञ्चल कानों से गिरे हुए कर्णों के आभूषण वाला कामदेव आ धमका। अर्थात् चन्द्रलेखा की कथा को सुनकर विक्रमाङ्कदेव कामासक्त हो गया।

इति श्री त्रिभुवनमल्लदेव—विद्यापति—काश्मीरकभट्ट श्री बिल्हणविरचिते विक्रमाङ्कदेवचरिते महाकाव्य अष्टम सर्ग ।

नेत्राब्जाभ्रयुगाङ्कविक्रमशरत्काले्ऽत्र दामोदरात्
भारद्वाज-बुधोत्तमात्समुदितः श्री विश्वनाथः सुधीः ॥
चक्रे रामकुबेरपण्डितवरात्सम्प्राप्तसाहाय्यक-
टीका—युग्ममिदं रमाकरुणया सर्गेऽष्टमे शोभने ॥

ॐ शान्ति शान्ति शान्ति ।

---

॥ श्रीः ॥

महाकविश्रीविल्हणविरचितं

# विक्रमाङ्कदेवचरितम्

## नवमः सर्गः

विजृम्भमाणेष्वथ पञ्चबाण-कोदण्डसिञ्जाघनगर्जितेषु ।
विलासिनी मानसमाविवेश सा राजहंसीव नरेश्वरस्य ॥१॥

**अन्वयः**

अथ पञ्चबाणकोदण्डसिञ्जाघनगर्जितेषु विजृम्भमाणेषु सा विलासिनी राजहंसी इव नरेश्वरस्य मानसम् आविवेश।

**व्याख्या**

अथाऽष्टमसर्गवर्णितचन्दलदेवीसौन्दर्यकथाश्रवणानन्तरं पञ्चबाणस्य कामस्य कोदण्डो धनुः "धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम्" इत्यमरः । तस्य सिञ्जा मौर्वी "मौर्वी ज्या शिञ्जिनी गुणः" इत्यमरः । तस्या घनगर्जितानि तेषु अथवा सिञ्जा एव घना मेघास्तेषां गर्जितेषु विजृम्भमाणेषु प्रसरत्सु सर्वोत्कर्षेण वर्तमानेषु सा विलासिनी चन्दलदेवी राजहंसी इव मानसं मनः मानसं सरो वा आविवेश प्रविष्टा । वर्षाकाले घनगर्जितं श्रुत्वा हंसा मानसं यान्तीति कविप्रसिद्धिः । उपमालङ्कारः । अस्मिन्श्लोके 'उपेन्द्रवज्रा' छन्दः । अन्यत्र सर्गेऽस्मिन् "इन्द्रवज्रा" छन्दः । तल्लक्षण 'स्यादिन्द्रवज्रा यदि तौ जगौगः' । "उपेन्द्रवज्रा प्रथमे लघौ सा" ।

**भाषा**

इस प्रकार अष्टम सर्ग में वर्णित चन्दल देवी के सौन्दर्य का श्रवण करने के अनन्तर, कामदेव के धनुष की मौर्वी रूपी मेघ की गर्जना चारो ओर गूँजती रहने पर वह विलासभरी चन्दलदेवी विक्रमाङ्कदेव के मन रूपी मानसरोवर में

राजहंसी के समान प्रविष्ट हुई। वर्षा ऋतु के आने पर मेघों की गर्जना सुनकर सकुटुम्ब राजहंस मानसरोवर पर चले जाते हैं ऐसी कविप्रसिद्धि है।

क्षिप्ते पदे चारुदृशा विशन्त्या बालप्रवालप्रतिमल्लभासि।
चेतः क्षितीन्दोः स्फटिकावदातमुपाधियोगादिव रक्तमासीत् ॥२॥

अन्वयः

विशन्त्या चारुदृशा बालप्रवालप्रतिमल्लभासि पदे क्षिप्ते (सति) क्षितीन्दोः स्फटिकावदातं चेतः उपाधियोगात् इव रक्तम् आसीत्।

व्याख्या

विशन्त्या विक्रमाङ्कदेवस्य मनसि प्रवेशं लभमानया चारुदृशा सुन्दरनेत्रया चन्द्रलेख्या बालस्सुकुमारः प्रवालः किसलयं "प्रवालोऽस्त्री किसलये वीणादण्डे च विद्रुमे" इति मेदिनी। तस्य प्रतिमल्ला सदृशी भाः यस्य तत् तस्मिन् बालप्रवालप्रतिमल्लभासि पदे चरणे क्षिप्ते न्यस्ते सति क्षितीन्दोः पृथ्वीपतेः विक्रमादित्यस्य स्फटिकावदातं स्फटिकवदवदातं शुभ्रं "अवदातः सितो गौरो वलक्षो धवलोऽर्जुनः" इत्यमरः॥ चेतो मनः "चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः" इत्यमरः॥ उपाधियोगादिव उपाधिरक्तणश्चरणस्तस्य योगात्सम्बन्धादिव रक्तमरुणवर्णमासीत्। अनुरक्तमासीदित्यर्थः। संसर्गजा दोषगुणा भवन्ति इति न्यायात्॥ अत्र तद्गुणालङ्कारः इन्द्रवज्राच्छन्दश्च। स्यादिन्द्रवज्रा यदि तौ जगौ गः" इति लक्षणात्।

भाषा

राजा विक्रमाङ्कदेव के मन में प्रवेश करने वाली सुनयनी चन्द्रलेखा द्वारा अपने नूतन (लाल) पत्ते के समान लाल चरण के रखने से विक्रमाङ्कदेव का स्फटिक के समान शुभ्र चित्त मानो रक्त चरण रूपी उपाधि के संयोग से लाल हो गया अर्थात् अनुरागयुक्त हो गया।

वित्रासितश्चैत्रसमीरणेन मयूखदण्डैः स्खलितः सुधांशोः।
नासौ बभूव स्मरपार्थिवस्य कस्याः पदं रोषविभीषिकायाः ॥३॥

अन्वयः

असौ चैत्रसमीरणेन वित्रासितः (सन्) सुधांशोः मयूखदण्डैः स्खलितः (सन्) स्मरपार्थिवस्य कस्याः रोषविभीषिकायाः पदम् न बभूव।

### व्याख्या

असौ विक्रमाङ्कदेवश्चैत्रमासस्य मधुमासस्य "स्याच्चैत्रे चैत्रिको मधुः" इत्यमरः। समीरणेन वायुना वित्रासितः भयं प्रापितः सन् सुधांशोश्चन्द्रस्य मयूखदण्डैः किरणदण्डैः "किरणोस्रमयूखांशुगभस्तिघृणिरश्मयः" इत्यमरः। स्खलितः भुवि पतितस्सन् स्मरः काम एव पार्थिवो नृपस्तस्य स्मरपार्थिवस्य कस्याः रोषविभीषिकायाः रोषस्य कोधस्य विभीषिका भयप्रापणं तस्याः पदं स्थानं न बभूव। अर्थात् सर्वतो भावेन कामपरवशोऽभूदिति भावः। अत्र रूपकालङ्कारः। उपेन्द्रवज्रा छन्दः।

### भाषा

यह विक्रमाङ्कदेव राजा, चैत्र में बहने वाले दक्षिणानिल से पीड़ित होकर और चन्द्रमा के किरण रूपी दण्डों की मार से नीचे गिरकर काम राजा के किस क्रोध भरी धमकी का पात्र न हुआ। अर्थात् पूर्णतया भय से काम राजा के वशीभूत हो गया।

**गृह्णन्गुणानह्नि विभावरीणां दिनप्रशंसां विदधन्निशासु।**
**क्रमादसौ तां क्षितिमाचकाङ्क्ष यत्र द्वयं नास्ति दिनं निशा च ॥४॥**

### अन्वयः

असौ अह्नि विभावरीणां गुणान् गृह्णन् निशासु दिनप्रशंसां विदधत् क्रमात् तां क्षितिम् आचकाङ्क्ष यत्र दिनं निशा च द्वयं न अस्ति।

### व्याख्या

असौ विक्रमाङ्कदेव अह्नि दिवसे विभावरीणां रात्रीणां "रात्रिस्त्रियामा क्षणदा क्षपा। विभावरीतमस्विन्यौ" इत्यमरः। गुणान् सुखरगुणान् गृह्णन् परिगणयन् निशासु रात्रिषु दिनस्य प्रशंसा सुष्ठुतरत्वं विदधन् कुर्वाणो, दिनसमये दिनसम्बन्धि-विरहोद्दीपकस्य वस्तुनो दर्शनेन मनस्सन्तापाधिक्याद्रात्रिमेव श्रेयस्करीं मनुते। रात्रौ च चन्द्रादिसुन्दरवस्तुजातस्य विरहोद्दीपकस्य दर्शनेन सन्तापकारित्वाद्दिनमेव कल्याणकारि सम्यगिति जानातीति भावः। क्रमात् कालक्रमेण तां क्षितिं पृथ्वीभागम् आचकाङ्क्ष इयेष यत्र दिनं निशा च द्वयमुभयं नाऽस्ति न विद्यते। पूर्वं कदाचिद्दिने रात्रौ वा शान्तिं प्राप परन्तु कामोद्रेकस्यातीव वर्धमानत्वाद्दिने रात्रौ च शान्ति न लब्धवानितिभावः।

भाषा

(कामोद्दीपक वस्तुओं को देख) (कामाभिभूत) विक्रमाङ्कदेव दिन में रात्रियों को अच्छा समझता हुआ और रात्रियों में (चन्द्रादि कामोद्दीपक चीजों को देख) दिन की प्रशंसा करता हुआ धीरे-धीरे ऐसे स्थान की कामना करने लगा जहाँ रात-दिन दोनों न हों। अर्थात् अत्यधिक कामोद्रेक से २४ घंटे अभिभूत हो गया।

त्रैलोक्यसंमोहनविद्ययेव तया जयास्थां महतीं दधानः।
तं धन्विनां धुर्यमपि प्रहर्तुं विलासधन्वा धनुराचकर्ष ॥५॥

अन्वयः

त्रैलोक्यसंमोहनविद्यया इव तया महतीं जयास्थां दधानः विलासधन्वा धन्विनां धुर्यम् अपि तं प्रहर्तुं धनुः आचकर्ष।

व्याख्या

त्रैलोक्यस्य त्रिभुवनस्थितजनसमूहस्य संमोहनविद्या वशीकरणमन्त्रस्तया त्रैलोक्य संमोहनविद्यया इव तया चन्द्रलेखया महतीं विशालां जयास्थां जयस्य विजयस्याऽऽस्थां दृढसम्भावनां दधानो धारयन् विलासधन्वा विलासः कामिनीनां विभ्रम एव धनुर्यस्य सः कामः धन्विनां धनुर्धारिणां धुर्यं धुरन्धरमपि "धुर्वहे धुर्यधौरेयधुरीणाः सधुरन्धराः" इत्यमरः। तं विक्रमाङ्कदेवं प्रहर्तुं विद्धुं धनुः कोदण्डम् आचकर्ष मौर्व्या सम्यक् संयोज्य सुसज्जितं चकार।

भाषा

तीनों लोकों के मनुष्यों को वशीकरण करनेवाली विद्या के समान उस चन्द्रलेखा से, विजय की बड़ी सम्भावना रखने वाले विलास रूपी धनुष को धारण करने वाले काम ने धनुर्धारियों में अग्रगण्य विक्रमाङ्कदेव पर भी प्रहार करने के लिए अपने धनुष को ताना।

निजप्रभानिह्नुतचन्द्रभासा प्रभातलक्ष्म्येव परिस्फुरन्त्या।
तया समानीयत पाण्डिमानं चालुक्यभूपालकुलप्रदीपः ॥६॥

अन्वयः

चालुक्यभूपालकुलप्रदीपः निजप्रभानिह्नुतचन्द्रभासा परिस्फुरन्त्या प्रभातलक्ष्म्या इव तया पाण्डिमानं समानीयत।

व्याख्या

चालुक्यभूपालकुलप्रदीपः चालुक्यभूपालानां मध्ये कुलप्रदीपो वंशप्रकाशकदीपः विक्रमाङ्कदेवो निजप्रभया स्वकान्त्या निह्नुता तिरस्कृता निष्प्रभतां नीता चन्द्रस्येन्दोः भाः कान्तिर्यया सा तया निजप्रभानिह्नुतचन्द्रभासा परिस्फुरन्त्या देदीप्यमानया प्रभातलक्ष्म्या इव प्रातः कालशोभया इव तया चन्द्रलेखया पाण्डिमानं पाण्डुत्वं समानीयत प्रापितः। प्रभाते दीपाना निस्तेजस्त्वमिव चन्द्रलेखासम्बन्धिकामेन विक्रमाङ्कदेवस्य कान्तिहीनत्वोदयात्पाण्डुत्वं समागतमिति भावः। अत्रोत्प्रेक्षा—रूपकालङ्कारौ।

भाषा

अपनी प्रशस्त कान्ति से चन्द्रमा की कान्ति को दबा देने वाली, प्रसरणशील प्रातःकालीन कान्ति के समान उस चन्द्रलेखा से चालुक्यवंशीय राजाओं का कुल दीपक विक्रमाङ्कदेव पाण्डुता को प्राप्त कराया गया। अर्थात् सूर्योदय की चमक से जैसे चन्द्रकान्ति निस्तेज हो जाती है वैसे ही चन्द्रलेखा के काम से विक्रमाङ्कदेव पीले पड़ गये।

शृङ्गाररत्नाकरवेलयेव तया प्रवेशे विहिते तरुण्या।
नवानुरागेण मनस्तदीयं रत्नोत्करेणेव सनाथमासीत् ॥७॥

अन्वयः

शृङ्गाररत्नाकरवेलया इव तया तरुण्या प्रवेशे विहिते (सति) तदीयं मनः रत्नोत्करेण इव नवानुरागेण सनाथम् आसीत् ॥

व्याख्या

शृङ्गारस्य शृङ्गाररसस्य रत्नाकरस्समुद्रस्तस्य वेला तटं तया इव तरुण्या नवयौवनारूढया चन्द्रलेखया विक्रमाङ्कदेवस्य हृदये प्रवेशे विहिते कृते सति तदीयं मनो विक्रमाङ्कदेवहृदयं रत्नानामुत्करेण समूहेन "पुञ्जराशी तूत्करः कूटमस्त्रियाम्" इत्यमरः। इव नवानुरागेण नवीनप्रेम्णा सनाथं युक्तमासीत् ॥

भाषा

शृङ्गाररस रूपी समुद्र के तट के समान उस युवती चन्द्रलेखा के विक्रमाङ्कदेव के मन में प्रवेश कर लेने पर उस राजा का मन रत्नों के समूह के समान

असौ भवित्री सुभगा नतभ्रूः करिष्यते पञ्चशरः प्रसादम् ।
आन्दोलितोऽभूदिति चिन्तयासौ त्रैलोक्यचिन्ताहरणक्षमोऽपि ॥८॥

अन्वयः

त्रैलोक्यचिन्ताहरणक्षमः अपि असौ, असौ नतभ्रूः सुभगा भवित्री पञ्चशरः प्रसादं करिष्यते इति चिन्तया आन्दोलितः अभूत् ।

व्याख्या

त्रैलोक्यस्य त्रिभुवनस्य त्रिभुवनगतजनस्येत्यर्थः । चिन्ता दुःखजनितचिन्ता तस्या हरणे समूलविनाशने क्षमः समर्थोऽपि असौ विक्रमाङ्कदेवः असावियं नतेऽधोगते भ्रुवौ यस्यास्सा नतभ्रूः सुभगा सुन्दरी अनुकूला च भवित्री भविष्यति (न वा) पञ्चशरः कामः प्रसादं अनुग्रहं "प्रसादोऽनुग्रहे काव्यप्राणस्वास्थ्यप्रसत्तिषु" इति मेदिनी । करिष्यते (न वा) इति चिन्तया विचारपरम्परया आन्दोलितः प्रकम्पितः अभूत् । त्रैलोक्यचिन्तापहरणसमर्थोऽपि चन्द्रलेखा प्राप्तिचिन्तयाऽधीरोऽभूदिति भावः । अत्र विशेषोक्तिरलङ्कारः ।

भाषा

तीनों लोकों के मनुष्यों की चिन्ता को दूर कर देने में समर्थ होने पर भी वह विक्रमाङ्कदेव, यह नीची भौंवो वाली सुन्दरी चन्द्रलेखा अनुकूल होगी या नहीं, और कामदेव प्रसन्न होकर यह कार्य सिद्ध कर देंगे या नहीं, इस चिन्ता से अधीर हो उठा ।

यथा यथा निःश्वसिति स्म राजा निरङ्कुशं कार्श्यमदर्शयच्च ।
तथा तथा जागरयन्धनुर्ज्यां भेजे जयास्थां भगवाननङ्गः ॥९॥

अन्वयः

राजा यथा यथा निश्वसिति स्म निरङ्कुशं कार्श्यम् अदर्शयत् च तथा तथा भगवान् अनङ्गः धनुर्ज्यां जागरयन् जयास्थां भेजे ।

व्याख्या

राजाविक्रमाङ्कदेवो यथा यथा निःश्वसिति स्म निश्वासं चकार । निरङ्कुशं निरर्गलं कार्श्यं कृशताम् अदर्शयत् अप्रकटयत् च तथा तथा भगवान् अनङ्गः कामः धनुषो ज्यां मौर्वीं "मौर्वी ज्या शिञ्जिनी गुणः" इत्यमरः । जागरयन् प्रबोधयन् सुसज्जयन् जयास्थां विजयधारणां भेजे कृतवान् ।

भाषा

ज्यों-ज्यों राजा विक्रमाङ्कदेव उच्छ्वास छोड़ता था और ज्यों-ज्यों वह वेग से बढ़ने वाली शारीरिक कृशता को प्रकट करता था त्यों-त्यों भगवान् कामदेव अपने धनुष की ज्या को तयार करता हुआ विजय की धारणा रखने लगा।

जाते धरित्रीतिलके चिरेण प्रकोपपात्रे मकरध्वजस्य।
प्रकाशयन्तीव पतिव्रतात्वं पराङ्मुखी तत्र रतिर्बभूव ॥१०॥

अन्वयः

धरित्रीतिलके चिरेण मकरध्वजस्य प्रकोपपात्रे जाते (सति) रतिः पतिव्रतात्वं प्रकाशयन्ती इव तत्र पराङ्मुखी बभूव ॥

व्याख्या

धरित्र्याः पृथिव्याः "धरा धरित्री धरणी क्षोणी ज्या काश्यपी क्षितिः" इत्यमरः। तिलके भूषणरूपे विक्रमाङ्कदेवे चिरेण चिरकालानन्तरं मकरध्वजस्य कामस्य प्रकोपपात्रे क्रोधभाजने "सर्वमावपनं भाण्डं पात्रामत्रं च भाजनम्" इत्यमरः ॥ जाते सति रतिः कामपत्नी सुखं च पतिव्रतात्वं पत्युराचरणानुकूलाचरणरूपधर्मं प्रकाशयन्ती प्रकटयन्ती इव तत्र नृपे पराङ्मुखी विमुखी बभूव। विरहातिशयसन्तापात्सुखं न प्रापेति भावः।

भाषा

पृथ्वी के आभूषण रूप विक्रमाङ्कदेव के चिरकाल के अनन्तर कामदेव के कोप का स्थान बनने पर कामदेव की स्त्री रति या सुख मानो पातिव्रत्य धर्म को प्रकट करती हुई उस राजा से विमुख हो गई। अर्थात् विरह सन्ताप से राजा का सुख दूर हो गया।

उर्वीपतेः पार्वणचन्द्रवक्त्रा समुद्वहन्ती हृदये निवासम्।
विकासदीक्षामपराङ्गनानां सरोजिनीनामिव संजहार ॥११॥

अन्वयः

उर्वीपतेः हृदये निवासं समुद्वहन्ती पार्वणचन्द्रवक्त्रा सरोजिनीनाम् इव अपराङ्गनानां विकासदीक्षां संजहार।

व्याख्या

उर्व्याः वसुन्धरायाः "वसुधोर्वी वसुन्धरा" इत्यमरः। पत्युः स्वामिन उर्वीपतेः भूपतेः हृदये मनसि निवासं स्थितिं समुद्वहन्ती कुर्वाणा पार्वणचन्द्रः पूर्णिमाचन्द्रस्तद्वद्वक्त्रमाननं यस्यास्सा पार्वणचन्द्रवक्त्रा नायिका चन्द्रलेखा सरोजिनीनां कमलिनीनाम् इव अपराङ्गनानामन्यस्त्रीणां विकासदोक्षा समुल्लास-मभिलाषञ्च संजहार हृतवती।

भाषा

राजा विक्रमाङ्कदेव के हृदय में बसने वाली पूर्णिमा के चन्द्र के समान मुखवाली चन्द्रलेखा ने कमलिनियों के समान अन्य सुन्दरियों के प्रति उल्लास और अभिलाषा को नष्ट कर दिया। अर्थात् जिस प्रकार पूर्ण चन्द्र के उदित होने से कमलिनियों का विकास नष्ट हो जाता है उसी प्रकार इसके हृदय में रहने से अन्य स्त्रियों के प्रति राजा की अभिलाषा नष्ट हो गई।

नितम्बबिम्बस्य नितम्बवत्याः प्रकामविस्तारवशादिवास्य ।
पृथ्वीपतेरुत्तमनायिकापि न कापि लेभे हृदयेऽवकाशम् ॥१२॥

अन्वयः

नितम्बवत्याः नितम्बबिम्बस्य प्रकामविस्तारवशात् इव अस्य पृथ्वीपतेः हृदये का अपि उत्तमनायिका अपि अवकाशं न लेभे।

व्याख्या

प्रशस्तः नितम्बः श्रोणिरस्त्यस्याः 'पश्चान्नितम्बः स्त्रीकट्याः' इत्यमरः। इति नितम्बवती तस्याः चन्द्रलेखाया नितम्बबिम्बस्य श्रोणिबिम्बस्य प्रकाम-विस्तारवशात् अत्यन्तविशालत्ववशात् इव अस्य पृथ्वीपतेर्भूपतेर्विक्रमाङ्कदेवस्य हृदये मनसि कापि अन्या कापि उत्तमनायिकाऽपि अवकाशं स्थानं न लेभे। चन्द्र-लेखा नितम्बस्य परिणाहवशात्सकलहृदयावकाशः चन्द्रलेखया एव आच्छादितोऽ-तोऽन्या श्रेष्ठा अपि नायिका तस्य मनसि स्थानं न प्राप। अन्यनायिकायां न तादृश उत्कर्षो यादृशश्चन्द्रलेखायामिति भावः॥ अत्र हेतूत्प्रेक्षालङ्कारः।

भाषा

सुन्दर नितम्ब वाली चन्द्रलेखा के नितम्बों के मानो अत्यधिक विस्तार से इस राजा विक्रमाङ्कदेव के हृदय में, (नितम्बों के विस्तार से सब स्थान भर

जाने से) अन्य कोई उत्तम सुन्दरी भी स्थान न प्राप्त कर सकी। अर्थात् अन्य सुन्दरियों का सौन्दर्य राजा की दृष्टि में उसके मुकाबले में फीका था।

नितान्तमेकान्तनिषेवणेन द्वेषेण चान्तःपुरसुन्दरीषु ।
प्रच्छादनार्थं विहितक्षणोऽपि क्षोणीपतिस्ताडितडिण्डिमोऽभूत् ॥१३॥

अन्वयः

नितान्तम् एकान्तनिषेवणेन अन्तःपुरसुन्दरीषु द्वेषेण च प्रच्छादनार्थं विहितक्षणः अपि क्षोणीपतिः ताडितडिण्डिमः अभूत् ॥

व्याख्या

नितान्तम् अत्यन्तम् एकान्तस्थानस्य निषेवणेनाऽऽश्रयणेन अन्तःपुरस्य सुन्दरीषु द्वेषेण रागराहित्येन प्रच्छादनार्थं विरहतापाप्रकाशनार्थं कामावस्था गोपनार्थं च विहितक्षणोऽपि कृतप्रयासोऽपि "निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः" इत्यमरः। अत्र क्षणो निर्व्यापारस्थितिर्बोध्या। क्षोणीपतिर्नृपतिः ताडितडिण्डिमः ताडितो विज्ञापितः डिण्डिमः वाद्यविशेषवादनद्वारा "वाद्यप्रभेदा डमरुमड्डुडिण्डिमझर्झराः" इत्यमरः। सकलस्थितिर्यस्य स अभूत्।

भाषा

सदैव अकेले रहने से और अन्तःपुर की सुन्दरियों से सप्रेम सम्भाषणादि न करने से अपनी कामातुरता को छिपाने का प्रयत्न करते रहने पर भी राजा की कामातुरता डुगडुगी पीटकर प्रकट कर दी गई।

ताडीदले कर्णपरिच्युतेऽपि कन्दर्पलेखभ्रममाससाद ।
उत्तंसमागच्छति षट्पदेऽपि प्रत्याशया कर्णमदत्त देवः ॥१४॥

अन्वयः

देवः ताडीदले कर्णपरिच्युते अपि कन्दर्पलेखभ्रमम् आससाद, षट्पदे उत्तंसम् आगच्छति अपि प्रत्याशया कर्णम् अदत्त।

व्याख्या

देवो विक्रमाङ्कदेवनृपः ताडीदले तालपत्रे कर्णाभ्यां श्रोत्राभ्यां परिच्युते परिभ्रष्टे अपि कन्दर्पस्य कामस्य लेखभ्रमम् लिखितपत्रभ्रान्तिम् आससाद प्राप। कामपत्रं लिखित्वा प्रियया प्रेषितं किमिति भ्रान्तिः। षट्पदे भ्रमरे "द्विरेफपुष्पलिड्भृङ्गषट्पदभ्रमरालयः" इत्यमरः॥ उत्तंसं कर्णभूषणपुष्पसमूहम् 'पुंस्युत्तंसावतंसौ

द्वौ कर्णपूरे च शेखरे" इत्यमरः। आगच्छति समापतति सति अपि प्रत्याशया किं कथयति प्रियसन्देशमिति श्रोतुमिच्छया कर्णम् अदत्त श्रोत्रं सावधानमकरोत्। अत्र भ्रान्तिमानलङ्कारः।

### भाषा

राजा, कान पर का (शोभा के लिए रक्खा हुआ) ताड़ का पत्ता कान पर से नीचे गिर पड़ने पर कहीं प्रिया का प्रेम पत्र तो नहीं आया—ऐसे भ्रम का पात्र हो गया। (कान पर रक्खे हुए) आभूषण रूप फूल पर (शब्द करते हुए) भौंरे के आने पर, कहीं प्रिया का सन्देश तो नहीं कहता है—ऐसे विचार से उसके शब्द को ध्यान पूर्वक सुनता था।

आकाशगर्भां गिरमाचकाङ्क्ष विलोकयामास विलासभित्तीः।
तदीयवार्ताश्रवणाभिलाषात् कुत्रार्थितां प्राप न पार्थिवेन्द्रः ॥१५॥

### अन्वयः

पार्थिवेन्द्रः आकाशगर्भां गिरम् आचकाङ्क्ष विलासभित्तीः विलोकयामास तदीयवार्ताश्रवणाभिलाषात् कुत्र अर्थितां न प्राप।

### व्याख्या

पार्थिवेन्द्रः नृपेन्द्रः आकाशगर्भां गिरम् आकाशवाणीम् आचकाङ्क्ष इयेष। तत्सम्बन्धिनी काऽपि वार्ताऽऽकाशवाण्या श्रुता भवेदितीच्छति स्मेति भावः। विलासभित्तीः चित्रभित्तीः विलोकयामास दृष्टवान्। महत्कुतूहलेन चित्रभित्ति-स्थितचित्रमुखादपि किमपि ज्ञातं भवेदिति धिया चित्राण्यपश्यदितिभावः। तदीया चन्द्रलेखासम्बन्धिनी वार्त्ता वृत्तान्तः "वार्ता प्रवृत्तिर्वृत्तान्त उदन्तस्यादथाह्वयः" इत्यमरः। तस्याः श्रवणाभिलाषात् आकर्णनेच्छया कुत्र कस्मिन्स्थाने अर्थितां याचकत्वं "वनीपको याचनको मार्गणो याचकार्थिनौ" इत्यमरः। न प्राप। सर्वत्रैव दीनो बभूवेत्यर्थः।

### भाषा

श्रेष्ठ राजा विक्रमाङ्कदेव आकाशवाणी से ही उसकी बातें सुनने को मिलें, ऐसी इच्छा करने लगा। चित्रभित्ति पर चित्र ही कुछ कहें ऐसी भावना से उनको देखने लगा। चन्द्रलेखा सम्बन्धि बातों को सुनने के लिए कहाँ पर उसने अपना दैन्य प्रकट नहीं किया अर्थात् सर्वत्र किया।

**सा कीदृशीति क्षितिवल्लभस्य कुतूहलेनोत्तरलीकृतस्य ।**
**आलिख्य चेतःफलके मनोभूरदर्शयत्सायकतूलिकाभिः ॥१६॥**

अन्वयः

मनोभूः सा कीदृशी इति कुतूहलेन उत्तरलीकृतस्य क्षितिवल्लभस्य चेतःफलके सायकतूलिकाभिः आलिख्य अदर्शयत् ।

व्याख्या

मनोभूः कामः सा चन्द्रलेखा नायिका कीदृशी किंस्वरूपा इति कुतूहलेनोत्कण्ठया उत्तरलीकृतस्यातिचञ्चलीकृतस्य क्षितिवल्लभस्य नृपस्य चेतः नृपचित्तमेव फलकं तस्मिन् चेतःफलके सायका बाणाः "शरे खड्गे च सायकः" इत्यमरः । एव तूलिका कूर्चिकास्ताभिस्सायकतूलिकाभिः "कूर्चिका सूचिकायां च तूलिकायां च कुड्मले" इति मेदिनी । आलिख्य चन्द्रलेखास्वरूपं निर्माय अदर्शयत् नृपमिति शेषः ।

भाषा

कामदेव, वह कैसी होगी इस कुतूहल से चञ्चल भय हुए उस विक्रमाङ्कदेव के हृदय रूपी तख्त (कागज) पर अपने बाण रूपी कूँची से चन्द्रलेखा की तस्वीर खाँच कर उसको दिखाया ।

**प्रारम्भि रम्भाललितोरुकान्तेरुपायनीकृत्य मुखं प्रियायाः ।**
**सेवा सहेवाकविलोचनस्य पृथ्वीभुजङ्गस्य दिगङ्गनाभिः ॥१७॥**

अन्वयः

दिगङ्गनाभिः रम्भाललितोरुकान्तेः प्रियायाः मुखम् उपायनीकृत्य सहेवाकविलोचनस्य पृथ्वीभुजङ्गस्य सेवा प्रारम्भि ।

व्याख्या

दिश एवाशा एवाङ्गना कान्तास्ताभिः दिगङ्गनाभिः रम्भा अप्सरसः कदली वा 'रम्भा कदल्यप्सरसोर्ना वेणौ वारणान्तरे' । इति मेदिनी । तद्वल्ललिता रम्या ऊरुकान्तिः ऊरुप्रदेशस्य शोभा श्लेषात् प्रचुरशोभा वा यस्यास्सा तस्याः रम्भाललितोरुकान्तेः प्रियायाः चन्द्रलदेव्याः मुखमाननम् उपायनीकृत्योपहारीकृत्य "उपायनमुपग्राह्यमुपहारस्तथोपदा" इत्यमरः । सहेवाकविलोचनस्य सविलासविलोचनस्य पृथ्वीपतेर्विक्रमाङ्कदेवस्य सेवा परिचर्या प्रारम्भि प्रारब्धा ।

### भाषा

दिशा रूपी अङ्गनाओं ने अप्सरा रम्भा के या केले के खम्भे के समान सुन्दर ऊरुप्रदेश की शोभा वाली या अत्यधिक शोभा वाली चन्दलदेवी के मुख को (बतौर नजर के) उपायन के रूप में देकर विलास भरे नेत्र वाले विक्रमाङ्कदेव की सेवा प्रारम्भ की। अर्थात् उसकी दृढ भावना से इसका काल्पनिक मुख उसको दृष्टिगोचर हुआ।

**मौनग्रहे तस्य परिग्रहेण चित्रार्पितेनेव भियावतस्थे।**
**लीलाशुकानामपि शङ्कितानां न निर्ययुः कण्ठतटाद्वचांसि ॥१८॥**

### अन्वयः

तस्य मौनग्रहे भिया चित्रार्पितेन इव परिग्रहेण अवतस्थे। शङ्कितानां लीलाशुकानाम् अपि कण्ठतटात् वचांसि न निर्ययुः।

### व्याख्या

तस्य विक्रमाङ्कदेवस्य मौनग्रहे मौनस्य वाचंयमत्वस्य ग्रहे स्वीकारे भिया भयेन चित्रेषु अर्पितेन रचितेन इव परिग्रहेण सेवकगणेन "पत्नीपरिजनादानमूलशापाः परिग्रहाः" इत्यमरः। अवतस्थे स्थितिः कृता। शङ्कितानां नृपस्य क्रोधशङ्कया भीतानां लीलाशुकानामपि क्रीडाशुकानामपि कण्ठतटात् गलप्रदेशात् "कण्ठो गलोऽथ ग्रीवायां शिरोधिः कन्धरेत्यपि" इत्यमरः। वचांसि वचनानि न बहिर्निर्ययुः निर्गतानि। नृपस्यमौनपरिग्रहे सर्वेषां क्रोधभ्रान्तिर्जाता न तु नृपस्य वास्तविकः क्रोध इति भावः।

### भाषा

उस राजा के मौन धारण करने पर उसके परिचारकगण भी चित्र लिखे के समान चुपचाप खड़े रहे। अगर हम शब्द करेंगे तो राजा कहीं क्रुद्ध न हो जायँ, इस शङ्का से पालतू सुग्गों के गले में से भी कोई शब्द नहीं निकलता था। अर्थात् राजा के मौन होने से सब को राजा के क्रुद्ध होने की भ्रान्ति हुई।

**निरीक्षमाणः सरसोक्तिदक्षां दूतीमसौ वारपुरन्ध्रिमध्ये।**
**मौखर्यचर्यामपि मेखलासु महान्तमुद्भावयति स्म दोषम् ॥१९॥**

अन्वयः

असौ वारपुरन्ध्रिमध्ये सरसोक्तिदक्षां दूतीं निरीक्षमाणः मेखलासु मौखर्यचर्याम् अपि महान्तं दोषम् उद्भावयति स्म ।

व्याख्या

असौ नृपः वारपुरन्ध्रयो वेश्यास्तासां मध्ये वारपुरन्ध्रिमध्ये सरसासु रसभिश्रितासु उक्तिषु दक्षा चतुरा "दक्षे तु चतुरपेशलपटवः सूत्थान उष्णश्च" इत्यमरः । तां सरसोक्तिदक्षां दूतीं निरीक्षमाणोऽवलोकयन्, दूतीसरसवाणीराकर्णयन् मेखलासु रशनासु "स्त्रीकट्यां मेखला काञ्ची सप्तकी रशना तथा" इत्यमरः । मौखर्यचर्यां मुखरस्य भावः मौखर्यं तस्य चर्या आचरणं तामपि शब्दायमानत्वमित्यर्थः । महान्तं विशालं दोषं दुर्गुणम् उद्भावयति स्म अमन्यत ।

भाषा

राजा विक्रमाङ्कदेव वेश्याओं के मध्य में स्थित रसभरी बातें (चुटकले) बोलने में दक्ष दूती को देखता हुआ अर्थात् उसके चुटकले सुनता हुआ करधनिओं के (घुंघरू के) शब्दों को भी दोष की दृष्टि से देखता था । अर्थात् घुंघरू के शब्द भी उसे प्रिय नहीं मालूम होते थे ।

अचिन्तनीयं तुहिनद्रवाणां श्रीखण्डवापीपयसामसाध्यम् ।
असूत्रयत्पत्रिषु पारसीक-तैलाग्निमेतस्य कृते मनोभूः ॥२०॥

अन्वयः

मनोभूः एतस्य कृते पत्रिषु तुहिनद्रवाणाम् अचिन्तनीयं श्रीखण्डवापीपयसाम् असाध्यं पारसीकतैलाग्निम् असूत्रयत् ॥

व्याख्या

मनसि भवतीति मनोभूः कामः एतस्य विक्रमाङ्कदेवस्य कृते पत्रिषु बाणेषु "पत्रिणो शरपक्षिणो" इत्यमरः । तुहिनद्रवाणां हिमजलानाम् "तुषारस्तुहिनं हिमम्" इत्यमरः । अचिन्तनीयम् अप्रतीकार्यम् श्रीखण्डवापीपयसाम् चन्दनपङ्कवापीजलानाम् असाध्यं निर्वातुमशक्यं पारसीकतैलस्य (मिट्टी के तेल की) अग्निम् असूत्रयत् अरचयत् । मदनानलोऽतीव सन्तापकारकोऽभूदिति भावः ।

भाषा

कामदेव ने अपने बाणो म, बरफ के पानी मे भी दूर न हो सकने वाले, चन्दन से भरे तालाब के जल से भी शान्त न होने वाले मिट्टी के तेल की आग का प्रयोग इसके लिए किया अर्थात कामदेव के बाणा से मिट्टी के तेल की अग्नि के समान कामाग्नि भभक उठी।

श्रान्ते च निद्रालसलोचने च शून्ये च पञ्चेषुरिषून्विमुञ्चन्।
न तत्र चित्रं गणयाम्बभूव क्षत्रव्रतस्य क्षतिमेकवीरः ॥२१॥

अन्वयः

एकवीरः पञ्चेषुः श्रान्ते च शून्ये च निद्रालसलोचने च तत्र इषून् विमुञ्चन् क्षत्रव्रतस्य क्षतिं न गणयाम्बभूव चित्रम्।

व्याख्या

एकवीरः प्रधानवीरः पञ्चेषुः कामदेवः श्रान्ते श्रमेण म्लानिं गते च शून्ये विचाररहिते च निद्रया स्वापेन "स्यान्निद्रा शयनं स्वापः स्वप्नः संवेश इत्यपि" इत्यमरः। अलसे आलस्ययुक्ते लोचने नेत्रे यस्य स तस्मिन् च तत्र राज्ञि इषून् बाणान् 'पृषत्कबाणविशिखा अजिह्मगखगाशुगा। कलम्बमार्गणशरा पत्री रोप इषुर्द्वयो" इत्यमरः। विमुञ्चन् परिक्षिपन् क्षतात् प्रहारात् त्रायते इति क्षत्र तस्य व्रतं (क्षते अतएव श्रान्ते मूर्छिते निद्रिते वा वीरा प्रहारं न कुर्वन्ति किन्तु रक्षन्त्येव इति क्षत्रियाणां व्रतम्।) तस्य क्षतिं विनाशं न गणयाम्बभूव न असम्यत इति चित्रम् इत्याश्चर्यम्।

भाषा

वीरो में श्रेष्ठ होने पर भी कामदेव ने थके हुए, अथमूर्छित तथा निद्रा से आलस्ययुक्त नेत्र वाले उस विक्रमाङ्कदेव पर बाणा का प्रहार करते हुए, क्षत्रियोचित धर्मों का उल्लङ्घन हो रहा है, इसका कोई विचार नहीं किया—यह एक आश्चर्य की बात है। वीर लोग थके मूर्छित और सोए हुए विपक्षी वीर पर वार नही करते। परन्तु कामदेव ऐसे महावीर ने इसका विचार नहीं किया—यह आश्चर्य है।

सैका पताका सुभगासु लेभे यया हृतः कुन्तलकामदेवः।
आसीत्परं पञ्चशरः प्रतापी तस्यापि यस्तापयिता बभूव ॥२२॥

अन्वयः

यया कुन्तलकामदेवो हृतः सा एका सुभगासु पताका लेभे। पञ्चशरः परं प्रतापी आसीत् यः तस्य अपि तापयिता बभूव।

व्याख्या

यया चन्दलदेव्या कुन्तलदेशस्य कामदेव कामसदृशसुन्दररूपो राजा विक्रमाङ्कदेवो हृत आकृष्ट सा एका चन्दलदेवी सुभगासु सुन्दरीषु पताका विजय प्रशस्ति लेभे प्राप। पञ्चशर पञ्चबाण काम "कन्दर्पो दर्पकोऽनङ्ग काम पञ्चशर स्मर" इत्यमर। परम् अत्यन्त प्रतापी प्रभावशाली आसीत् य पञ्चबाण तस्यापि कुन्तलकामदेवस्यापि विक्रमाङ्कदेवस्यापि तापयिता सतापकरो बभूव। बहूना कामिनीना सन्तापकर कुन्तलकामदेवो विक्रमाङ्कदेव। परन्तु कामस्तस्यापि सन्तापकारकोऽभूदिति भाव।

भाषा

जिस चन्दलदेवी न कुन्तल देश के कामदेव विक्रमाङ्कदेव के मन को आकृष्ट कर लिया वह तो सब कामिनियो में विजयी हो गई। परन्तु (अनेक कामिनियो को सन्तप्त करने वाले) उस कुन्तल कामदेव विक्रमाङ्कदेव को भी कामदेव न सतप्त कर दिया इससे वह अधिक प्रतापी हुआ।

लग्नामिवाङ्गे लिखितामिवाग्रे चक्रभ्रमेणेव परिभ्रमन्तीम्।
क्षपासु लब्धक्षणमात्रनिद्रस्तामेव राजीवमुखीं ददर्श॥२३॥

अन्वय

क्षपासु लब्धक्षणमात्रनिद्रः ताम् एव राजीवमुखीम् अङ्गे लग्नाम् इव अग्रे लिखिताम् इव चक्रभ्रमेण परिभ्रमन्तीम् इव ददर्श॥

व्याख्या

क्षपासु रात्रिषु लब्धा प्राप्ता क्षणमात्रमेव निद्रा शयन येन स लब्धक्षणमात्रनिद्र ताम् एव चन्दलदेवीमेव राजीवमुखीं कमलमुखीम् "विसप्रसूनराजीवपुष्कराम्भोरुहाणि च" इत्यमर। अङ्गे शरीरावयवे लग्नां सश्लिष्टामिव अग्रे नेत्रयोरग्रे लिखितामिव चक्रभ्रमेण चक्राकारभ्रान्त्या परिभ्रमन्तीं चलन्तीम् इव ददर्श दृष्टवान्। अत्रोत्प्रेक्षालङ्कार।

### भाषा

रात्रियो में कुछ क्षण ही निद्रा प्राप्त करने वाले विक्रमाङ्कदेव ने उस *कमलमुखी चन्द्रलेखा को ही मानो अपने शरीर से चिपटी हुई, आंखो के आगे लिखी हुई और चारो तरफ चक्कर काटती हुई देखा।*

**चन्द्रातपाच्चन्दनपङ्कवापीं ततस्तमस्मादपि तां जगाम ।**
**तस्येति बह्वयः स्मरतापितस्य गतागतैरेव गतास्त्रियामाः ॥२४॥**

### अन्वयः

(सः) चन्द्रातपात् चन्दनपङ्कवापीं ततः तम् अस्माद् अपि तां जगाम इति स्मरतापितस्य तस्य गतागतैः एव बह्वयः त्रियामाः गताः ॥

### व्याख्या

स विक्रमाङ्कदेवः चन्द्रस्येन्दोरातप प्रभा प्रकाशो वा "प्रकाशो द्योत आतप." इत्यमरः। तस्मात् चन्द्रातपात् चन्द्रिकायाः चन्दनपङ्कवापीं चन्दनपङ्कस्य श्रीखण्डकर्दमस्य "पङ्कोऽस्त्री शादकर्दमो" इत्यमरः। वापी एकत्रीभवनस्थान ता ततश्चन्दनपङ्कवापीत. त चन्द्रातपम् अस्मात् चन्द्रातपात् अपि ता चन्दनपङ्कमयीं वापीं जगाम विरहजन्यसन्तापशान्त्यर्थं गतवान्। यदा स्थाने चैकस्मिन् शान्तीं न लेभे ततोऽन्यत्र गतवान् तत्रापि शान्तिमप्राप्तस्सन् पुन. पूर्वस्मिन्नेव स्थाने सन्तापनिवारणाय ययाज। इति रीत्या स्मरतापितस्य कामसतप्तस्य तस्य विक्रमाङ्कदेवस्य गतागतैर्गमनागमनै. एव बह्वयोऽनेका स्त्रियामा राज्यो "निशा निशीथिनी रात्रिस्त्रियामा क्षणदा क्षपा" इत्यमरः। गता व्यतीता.। स रात्रीषु कामाग्निसतप्त. शैत्यकामनया चन्द्रिकातश्चन्दनवापीं चन्दनवापीतश्चन्द्रिकामागमत्। परन्तु कुत्रापि शान्तीं न प्राप्य निद्रारहिता रात्री व्यतीयायेति भावः। पर्यायालङ्कार।

### भाषा

राजा विक्रमाङ्कदेव चाँदनी से, चन्दन से भरी बावली को अधिक ठडक देनेवाली समझ चाँदनी में से बावली में जाता था किन्तु फिर चन्दन की बावली से चाँदनी को अधिक ठडा समझ चन्दन की बावली में से चाँदनी में आता था। इस प्रकार आने जाने में ही उसकी अनेक रात्रियाँ बीत गईं। अर्थात् अनेक रात्रियाँ उसने कामाग्नि से सतप्त होकर जागते ही बिता दीं।

**श्रोत्रामृतस्य स्फटिकप्रणालीं दिव्याम्बुधारां स्मरचातकस्य।**
**वार्तां गृहीत्वा हरिणेक्षणायाश्चरः क्षमाभर्तुरथाजगाम ॥२५॥**

अन्वयः

अथ क्षमाभर्तुः चरः श्रोत्रामृतस्य स्फटिकप्रणालीं स्मरचातकस्य दिव्याम्बुधारां हरिणेक्षणायाः वार्तां गृहीत्वा आजगाम।

व्याख्या

अथ कामजविरहसन्तापानन्तरं क्षमाया भूमेः भर्तुस्स्वामिनो विक्रमाङ्कदेवस्य चरो दूतः श्रोत्रामृतस्य कर्णामृतस्य स्फटिकप्रणालीं स्फटिकमणिनिर्मितजलनिर्गमनमार्गम् "द्वयोः प्रणाली पयसः पदव्या त्रिषु तूत्तरौ" इत्यमरः। स्मर एव चातकपक्षी तस्य स्मरचातकस्य दिव्याम्बुधारां गगनागतजलधारां हरिणेक्षणायाः नायिकायाः वार्तां वृत्तान्तं "वार्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यादथाह्वयः" इत्यमरः। गृहीत्वा ज्ञात्वा आजगाम। चातकस्य कृते मेघाम्बुधारा यथा प्रिया कर्णयोरमृतागमनप्रणाली यथानन्ददायिनी तथा नृपस्य कृते चन्दलदेवीवार्ता प्रियाऽसीदिति भावः। अत्र परम्परितरूपकालङ्कारः।

भाषा

इस प्रकार चन्देलदेवी के विरह सन्ताप से बहुत पीड़ित होने पर राजा विक्रमाङ्कदेव का दूत, कर्ण को सुख देनेवाले अमृत के बहने के लिए स्फटिक की बनी नाली के रूप तथा कामरूपी चातक के लिए स्वर्गीय जल धारा के स्वरूप, उस मृगनयनी चन्दलदेवी की खबर लेकर आ गया।

**कथारसस्येव मुखस्थितस्य धाराः किरन्दन्तमयूखभङ्गया।**
**प्रहर्षविस्फाटितवक्त्रकान्तिः स कुन्तलक्ष्मातिलकं बभाषे ॥२६॥**

अन्वयः

दन्तमयूखभङ्गया मुखस्थितस्य कथारसस्य धाराः किरन् इव प्रहर्षविस्फारितदन्तकान्तिः सः कुन्तलक्ष्मातिलकं बभाषे॥

व्याख्या

दन्तमयूखभङ्गया दूतस्य दशनपंक्तिकिरणजालव्याजेन "किरणोऽस्रमयूखांशुगभस्तिघृणिरश्मय." इत्यमरः। "व्याजच्छद्मनिभे भङ्गिर्वैदर्भीतनमीलिका"

इति रभस । मुखे दूतानने स्थितस्य वर्तमानस्य कथारसस्य चन्दलदेवीवृत्तान्ता-मृतरसस्य धारा प्रवाहान् किरन् विक्षिपन् इव प्रहर्षेण नृपदर्शनप्रमोदातिशयेन सद्वार्तानयनजन्यहर्षेण वा विस्फारिता प्रवृद्धा दन्तकान्तिर्यस्य स कुन्तलक्ष्मापा कुन्तलदेशस्य तिलकोऽलङ्कारभूतो विक्रमाङ्कदेवस्त बभाषे उवाच । अत्र सापन्हवोत्प्रेक्षालङ्कार ।

### भाषा

अपन दातो के किरणा के मिष से मुख में विद्यमान चन्देलदेवी की कथा के रस को मानो बहाता हुआ, राजा के दर्शन से या चन्देल देवी की सफल कथा सुनाने के अवसर से हर्ष से बढी हुई दन्तकान्ति वाला अर्थात् मुस्कुराते हुए उस दूत से कुन्तलदेश के अलङ्कार स्वरूप विक्रमाङ्कदेव स कहा ।

अचन्द्रजा नेत्रचकोरवृत्तिरपुष्पनिर्माणमनङ्गशस्त्रम् ।
रागस्य लोकत्रयरञ्जनाय विद्येव विद्याधरराजकन्या ॥२७॥
अकृत्रिमाद्वा गुणपक्षपाताद् विधेः समायोगकुतूहलाद्वा ।
देव त्वदाकर्णनमात्रकेण सा त्वन्मयं पश्यति जीवलोकम् ॥२८॥

### अन्वयः

हे देव अचन्द्रजा नेत्रचकोरवृत्तिः अपुष्पनिर्माणम् अनङ्गशस्त्रं लोकत्रयरञ्जनाय रागस्य विद्या इव सा विद्याधरराजकन्या अकृत्रिमात् गुणपक्षपातात् वा विधेः समायोगकुतूहलात् वा त्वदाकर्णनमात्रेण त्वन्मयं जीवलोकं पश्यति ।

### व्याख्या

हे देव राजन्, चन्द्रेजाता चन्द्रजा न चन्द्रजा अचन्द्रजाऽचन्द्रविषयक नेत्र-चकोरवृत्ति नयनरूपचकोराणा व्यवहारो दर्शनरूप पुष्पैर्निर्माण यस्य तत् पुष्पनिर्माण तन्नभवतीत्यपुष्पनिर्माण अनङ्गस्य कामस्य शस्त्रमायुधम् "आयुध तु प्रहरण शस्त्रमस्त्रमथास्त्रियौ' इत्यमर । लोकत्रयस्य त्रिभुवनस्य रञ्जना-याऽऽनन्दसम्पणाय रागस्य प्रेम्ण विद्या इव सा विद्याधरराजकन्या चन्देलदेवी अकृत्रिमात् स्वाभाविकात् गुणपक्षपाताद् गुणस्नेहात् वा विधेर्ब्रह्मण समायोगस्य नायिकानायकसयोगकरणस्य कुतूहलात् कौतुकाद् वा त्वदाकर्णनमात्रेण भवन्नाम-श्रवणमात्रेणवाऽऽनुष्ट्यदया सती त्व मय भवन्मयं जीवलोक सकलससार पश्यति

अवलोकयति । अनुपमस्वरूपवती सा चन्द्रलदेवी त्वन्नामाकर्णनमात्रेणैव त्वयि मुग्धा जातेति भाव । अत्राऽधिकारूढवैशिष्ट्य रूपकं, उत्प्रेक्षा चाऽलङ्कारः ।

**भाषा**

बिना चन्द्र के ही नयनरूपी चकोरों का जीवनोपाय, बिना फूल के बना कामदेव का बाण, नीना रागों को प्रसन्न करने के लिये प्रेम की विद्या के समान यह विद्याधर की राजकन्या चन्द्रलदेवी गुणों के प्रति स्वाभाविक झुकाव से, या ब्रह्मा के आप दोनों का संयोग करने के कौतुक से, आपका नाम सुनते ही इस जीवलोक को आपमय देखती है अर्थात् सर्वत्र उसको आप ही दिखाई पड़ते हैं ।

**अपारमापूरयता पृषत्कैस्तनिम्नि मग्नं वपुरुत्पलाक्ष्याः ।**
**लक्ष्येषु लब्धः कुसुमायुधेन वालाग्रसूक्ष्मेषु परः प्रकर्षः ॥२९॥**

**अन्वयः**

तनिम्नि मग्नम् उत्पलाक्ष्याः वपुः पृषत्कैः अपारम् आपूरयता कुसुमायुधेन वालाग्रसूक्ष्मेषु लक्ष्येषु परः प्रकर्षः लब्धः ।

**व्याख्या**

तनिम्नि कृशतायां मग्नं निपतितमुत्पलाक्ष्याः कमलाक्ष्याः चन्द्रलदेव्या वपुः शरीरं पृषत्कैर्बाणैः "पृषत्कबाणविशिखा अजिह्मगखगाशुगाः" इत्यमरः । अपारं नास्ति पारमन्तो यस्मिन्कर्मणि तत् अपारं पूर्णं यथा स्यात्तथाऽऽपूरयता व्याप्नुवता कुसुमायुधेन कामेन वालानां केशानामग्राणि "चिकुरः कुन्तलो बालः कचः केशः शिरोरुहः" इत्यमरः । पुरोभागास्तद्वत्सूक्ष्माणि तेषु वालाग्रसूक्ष्मेषु लक्ष्येषु शरव्येषु "लक्षं लक्ष्यं शरव्यं च" इत्यमरः । परः श्रेष्ठः प्रकर्षः औन्नत्यं चमत्कारः प्रावीण्यं वा लब्धः प्राप्तः । तस्याश्चन्द्रलदेव्याः प्रतिरोमं कामबाणा व्याप्ता-स्तेश्चाऽसौ विपीडितेति भावः । अत्र काव्यलिङ्गालङ्कारः ।

**भाषा**

चन्द्रलदेवी के दुबले भए हुए शरीर को बाणों से पूर्णतया भर देने वाले कामदेव ने केश के अग्र भाग के समान सूक्ष्म लक्ष्यों पर (निशाना मारने में) अधिक प्रावीण्य प्राप्त किया ।

**तथा गता चम्पकदामगौरी शरीरयष्टिः कृशतां कृशाङ्ग्याः ।**
**यथा गलच्चापमनोरथोऽस्यां मौर्वीलतास्थां मदनः करोति ॥३०॥**

### अन्वयः

चम्पकदामगौरी कृशाङ्ग्याः शरीरयष्टिः तथा कृशतां गता, यथा गलच्चापमनोरथः मदनः अस्यां मौर्वीलतास्थां करोति ॥

### व्याख्या

चम्पकानां दाम चम्पकपुष्पमाला तद्वत् गौरी पीतवर्णा "माला ॥ पंक्तौ पुष्पादिदाम्नि" इति हेम । कृशाङ्ग्यास्तन्वङ्ग्याः शरीरयष्टिस्तनुयष्टिः, कृशत्वातिशयात्तनौ यष्टित्वारोपः । तथा तेन प्रकारेण कृशतां तनुतां गता प्राप्ता, यथा येन प्रकारेण गलत् च्युतः परिभ्रष्टो वा चापस्य धनुर्निर्माणस्य मनोरथो वाञ्छा यस्य स गलच्चापमनोरथो मदनः कामोऽस्यां नायिकायां मौर्वी-लतायां ज्यालतानिर्माणोपयोगितायां "मौर्वीज्या शिञ्जिनी गुणः" इत्यमरः ॥ आस्थां विश्वासं करोति । सम्प्रति नायिकायास्तनुशरीरत्वात्कामो ज्यालतारच-नायामुपयोगं करोति न तु धनुर्निर्माणे । कामिन्यः खलु कामस्य धनुः । किन्तु तस्याः अतीव कृशत्वाद्धनुर्निर्माणायोग्यतया तन्मौर्वीनिर्माणे मनोरथमकरोदिति भावः ।

### भाषा

चम्पे के फूल की माला के समान पीली पड़ गई हुई उस दुबले शरीर वाली चन्द्रलेखा की शरीर रूपी छड़ी ऐसी दुबली-पतली हो गई थी कि उससे धनुष बनाने के मनोरथ को छोड़कर कामदेव ने उससे मौर्वी बनाने की आस्था की। अर्थात यथार्थ में सुन्दरियाँ ही कामदेव का धनुष हैं। परन्तु यह चन्द्रलेखा अत्यधिक दुबली हो गई थी इसलिए इससे धनुष बनना कठिन होने से मौर्वी बनाने की ही कामदेव ने धारणा की।

**नूनं स्मरः सौगतदर्शनोत्थं रहस्यमस्याः कथयाम्बभूव ।**
**त्वया विना व्यर्थमनोरथा यदात्मन्यवज्ञां प्रकटीकरोति ॥३१॥**

### अन्वयः

स्मरः सौगतदर्शनोत्थ रहस्यम् अस्याः नूनं कथयाम्बभूव । यत् त्वया विना व्यर्थमनोरथा ( इयम् ) आत्मनि अवज्ञा प्रकटीकरोति ॥

### व्याख्या

स्मरः कामः सौगतस्य बुद्धसम्बद्धस्य "सर्वज्ञः सुगतो बुद्धो धर्मराजस्तथागतः" इत्यमरः । दर्शनस्यानुशीलनेनोत्थम् सञ्जातं रहस्य अनात्मत्वादिज्ञानम् अस्या

चन्दलदेव्या नूनम् निश्चयेन क्षयमान्यभूव सजगाद। यत् यत यस्मात्कारणात् त्वया विना विक्रमाङ्कदेवमन्तरेण व्यर्थमनोरया निष्फलकामा चन्दलदेवी आत्मनि स्वविषये अवज्ञाम् अवहेलनाम् "रीढावमाननावज्ञावहेलनमसूर्क्षणम्" इत्यमरः। तुच्छबुद्धि प्रकटीकरोति प्रकाशयति मनुते। बौद्धदर्शने ससारानित्यत्वप्रकाशन-पूर्वकमात्मन्यनास्थैव स्थाप्यते।

### भाषा

कामदेव ने निश्चयपूर्वक चन्दलदेवी को बौद्ध दर्शन के रहस्य का अर्थात् ससारादि सब अनित्य तथा आत्मा नहीं है, ऐसा उपदेश दिया होगा। क्योंकि तुम्हारे न मिलने से भग्न अभिलाषावाली वह चन्दल देवी अपनी आत्मा की अवहेलना करती है। बौद्ध दर्शन में आत्मा को कोई महत्व नहीं दिया गया है।

**दूरं गता कार्मुककर्मवार्ता तस्यास्तनुं तन्तुकृशां वहन्त्याः ।**
**नितान्तमप्राणतया मृगाक्षी शिञ्जापि जाता न मनोभवस्य ॥३२॥**

अन्वयः

तन्तुकृशां तनु वहन्त्याः तस्याः कार्मुककर्मवार्ता दूरं गता मृगाक्षी नितान्तम् अप्राणतया मनोभवस्य शिञ्जा अपि न जाता।

व्याख्या

तन्तुवत्कृशाम् सूक्ष्मा तन्तुकृशाम् तनु शरीर वहन्त्या धारयन्त्या तस्याश्च-न्दलेखाया कार्मुकस्य धनुष "धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम्" इत्यमरः। निर्माणकर्मणो वार्ता वृत्तान्त कार्मुककर्मवार्ता दूर गता देवीसूक्ष्मशरीरेण कामधनुष-रचनात्यन्तमसभूता किन्तु मृगाक्षी मृगनयना नितान्तमत्यन्तमप्राणतयाऽल्प-प्राणतया सत्वहीनतया वा अत्यन्तकार्श्येन मनोभवस्य कामस्य शिञ्जा मौर्वी "मौर्वी ज्या शिञ्जिनी गुण" इत्यमरः। अपि न जाता। नायिकाशरीरेण सूक्ष्मत्वातिशयात् काममौर्वी अपि न निर्मातु शक्या किं पुनः ज्यापेक्षया बृहत्कायस्य धनुषो निर्माणमिति भाव।

### भाषा

डोरे के ऐसे दुबले-पतले शरीर को धारण करने वाली उस चन्दलदेवी से धनुष बनाने की बात तो दूर रही। उस मृगनयनी के अल्पप्राण अर्थात् अत्यधिक दुर्बल होने से वह कामदेव की मौर्वी भी न बन सकी।

प्राप्ता तथा तानवमङ्गयष्टिस्त्वद्विप्रयोगेण कुरङ्गदृष्टेः ।
धत्ते गृहस्तम्भनिवर्तितेन कम्पं यथा श्वाससमीरणेन ॥३३॥

अन्वयः

कुरङ्गदृष्टेः अङ्गयष्टिः त्वद्विप्रयोगेण तथा तानवं प्राप्ता यथा गृहस्तम्भनिवर्तितेन श्वाससमीरणेन कम्पं धत्ते।

व्याख्या

कुरङ्गदृष्टे मृगनयनाया "मृगे कुरङ्गवातायुहरिणाजिनयोनय" इत्यमर । अङ्गयष्टि शरीरयष्टि त्वद्विप्रयोगेण तव विरहेण "विप्रलम्भो विप्रयोग" इत्यमर । तथा तादृशं तानवं तनोर्भाव तानव तत् कृशता प्राप्ता यथा गृहस्तम्भनिवर्तनेन गृहस्तम्भ यावद् गत्वा परावर्तितेनाऽपि श्वाससमीरणेन निजश्वासवायुना "समीरमारुतमरुज्जगत्प्राणसमीरणा" इत्यमर । कम्प धत्ते धारयति। महद्दौर्बल्य विरहजन्यमिति भाव ।

भाषा

उस मृगनयनी की शरीरयष्टी तुम्हारे बिरह से इतनी कृश हो गई है कि घर के खम्भे तक जाकर लौटने से ही सास फूल जान से उसे कप कपी छूट जाती है।

शीतांशुबिम्बप्रतिबिम्बभङ्ग्या कुरङ्गदृष्टेः कुचकुम्भपीठे ।
स्मरानलद्रावितहारदाम-मुक्ताफलानामिव पिण्डमासीत् ॥३४॥

अन्वयः

कुरङ्गदृष्टेः कुचकुम्भपीठे शीतांशुबिम्बप्रतिबिम्बभङ्ग्या स्मरानलद्रावितहारदाममुक्ताफलानां पिण्डम् इव आसीत्।

व्याख्या

कुरङ्गदृष्टे मृगाक्ष्या कुच स्तन एव कुम्भपीठ कुम्भो घटस्तस्य पीठ तस्मिन् कुचकुम्भपीठे शीतांशोश्चन्द्रस्य बिम्ब मण्डल 'बिम्बोऽस्त्री मण्डल त्रिषु" इत्यमर । तस्य प्रतिबिम्ब छाया तस्य भङ्ग्या व्याजेन शीतांशुबिम्बप्रतिबिम्बभङ्ग्या स्मरानलेन कामाग्निना द्रावितानि रसरूपता प्रापितानि हारदाम्नो मुक्तामालाया मुक्ताफलानि तेषा स्मरानलद्रावितहारदाममुक्ताफलाना पिण्डमिव प्रतीयमानमासीत्। अत्र सापह्नवोत्प्रेक्षालङ्कार ।

भाषा

मृगनयनी के स्तनघट के ऊपर चन्द्रमण्डल की छाया पड़ने के मिष से मानो वहाँ वामाग्नि से गलाए मोती की माला के मोतियों का गोला ही था।

वातायनाद्गच्छति चित्रवेश्म तस्माद्वनान्तं वलभीं ततोऽपि।
एकत्र न क्वापि पदं करोति सा मन्मथास्कन्दविशङ्कितेव ॥३५॥

अन्वयः

सा वातायनात् चित्रवेश्म गच्छति तस्मात् वनान्तं गच्छति ततः अपि वलभीं गच्छति। सा मन्मथास्कन्दविशङ्किता इव एकत्र क्व अपि पदं न करोति।

व्याख्या

सा चन्दलदेवी वातायनात् गवाक्षात् "वातायन गवाक्षोऽथ" इत्यमर'। चित्रवेश्म चित्रमन्दिर विरहविनोदनार्थं गच्छति प्रयाति। तस्मात् चित्रागारात् वनान्त वनप्रदेश गच्छति ततोऽपि उद्यानप्रदेशादपि वलभीं चन्द्रशालाम् "शुद्धान्ते वलभीचन्द्रशाले सौधोर्ध्ववेश्मनि" इति रभस.। शिरोगृहम् गच्छति इत्येव रीत्या सा मन्मथस्य कामस्यास्कन्देन प्रहरणबाधया विशङ्किता भीता इव एकत्रैकस्मिन्क्वचिदपि स्थाने पदमवस्थान चरणौ वा "पदङ्घ्रिश्चरणोऽस्त्रियाम्" इत्यमर। न करोति न विदधाति।। क्वापि विरहसन्तापशान्तिर्न भवतीति भाव। एकत्राऽनवस्थानलक्षणा विरहावस्था जातेति भाव।

भाषा

वह चन्दलदेवी झरोखे म से हटकर मन बहलाव के लिए चित्रमन्दिर म जाती थी। वहाँ से बाग में जाती और वहाँ भी मन बहलाव न होने से सबसे ऊपर के कमरे में चली जाती थी। कामदेव के आक्रमण के भय से शङ्कित वह चन्दलदेवी कहीं भी एक ठिकाने नहीं ठहर सकती है।

आज्ञापितः स्वप्नविधौ हरेण स्वयंवरोऽस्याः क्रियतां त्वयेति।
तस्याः पिता कस्यचिदर्थिभावं न भूमिभर्तुः सफलं विधत्ते ॥३६॥

अन्वयः

हरेण स्वप्नविधौ "त्वया अस्याः स्वयम्वरः क्रियताम्" इति आज्ञापितः तस्याः पिता कस्यचित् भूमिभर्तुः अर्थिभावं सफलं न विधत्ते।

### व्याख्या

हरेण शिवेन स्वप्नविधौ स्वापसमये "स्यान्निद्रा शयनं स्वापः स्वप्नः संवेश इत्यपि" इत्यमरः। "त्वया चन्द्रलदेवीपित्रा अस्याश्चन्द्रलेखायाः स्वयम्वरः क्रियताम्" इत्याज्ञापित आदिष्टस्सन् तस्या नायिकायाः पिता कस्यचित् भूमिभर्तुर्नृपस्य अर्थिभावं याचकत्वं "वनीयको याचनको मार्गणो याचकार्थिनौ" इत्यमरः। सफलम् इष्टप्राप्तिसहितं न विधत्ते न करोति।

### भाषा

चन्द्रलेखा का पिता, भगवान् शंकर से स्वप्न में 'तुम ( कन्या के लिये ) स्वयम्वर की योजना करो' ऐसी आज्ञा प्राप्त कर किसी राजा की याचना को सफल नहीं करता है। अर्थात् शंकर की आज्ञा के विरुद्ध बहुत से राजाओं के मांगने पर भी वह अपनी कन्या उनको नहीं देता है।

**पिता तदीयस्त्वयि सान्द्ररागः किं प्रार्थनाभङ्गभयान्न वक्ति।**
**भवादृशानां प्रणयं हि लब्ध्वा प्रयान्ति कन्याः कुलभूषणत्वम् ॥३७॥**

### अन्वयः

त्वयि सान्द्ररागः तदीयः पिता प्रार्थनाभङ्गभयात् किं न वक्ति। हि कन्याः भवादृशानां प्रणयं लब्ध्वा कुलभूषणत्वं प्रयान्ति।

### व्याख्या

त्वयि भवति ( विक्रमाङ्कदेवे ) सान्द्रो घनो दृढो वा रागः प्रेम यस्य सः सान्द्ररागः तदीयः पिता चन्द्रलेखाया जनकः प्रार्थनाया स्वकन्याया अभीप्सितविवाहस्य भवता साकमभ्यर्थनायाः प्रस्तावनिवेदनस्य वा भङ्गः स्वीकाराभावः तस्माद्भय भीतिः "भीतिर्भीः साध्वसं भयम्" इत्यमरः। तस्मात् किं किमपि वाक्य (किं पुनः) न वक्ति न कथयति। हि यतः कन्या आत्मजाः भवादृशानां त्वादृशानां प्रतापशालिना राज्ञां प्रणयं स्नेहं लब्ध्वा प्राप्य कुलस्य पितृवंशस्य भूषणत्वमलङ्कारतां प्रयान्ति गच्छन्ति। "अभ्यर्थनाभङ्गभयेन साधुर्माध्यस्थमिष्टेऽप्यवलम्बतेऽर्थे" इति कालिदासोक्तेः।

### भाषा

तुमसे घनिष्ट प्रेम रखनेवाला चन्द्रलेखा का पिता, प्रार्थना स्वीकृत न होगी, इस भय से तुमसे कुछ नहीं कहता है। क्योंकि कन्याएँ आप जैसे अप्रतिम प्रतापी राजा का प्रेम पाकर अपने पितृकुल का भूषण हो जाती हैं।

**स्वयम्वरस्यावसरोऽपि जातः प्रसीद भूपाल कुरु प्रयाणम् ।**
**असौ जयश्रीरिव ते द्वितीया सर्वान्विनिर्धूय वधूत्वमेतु ॥३८॥**

अन्वयः

हे भूपाल स्वयम्वरस्य अवसरः अपि जातः, प्रसीद, प्रयाणं कुरु । असौ ते द्वितीया जयश्रीः इव सर्वान् विनिर्धूय वधूत्वम् एतु ।

व्याख्या

हे भूपाल राजन् स्वयम्वरस्यावसरः समयः अपि जातः । प्रसीद प्रसन्नो भव । प्रयाण स्वयम्वरम्प्रति प्रस्थानं कुरु । असौ इयं चन्दलदेवी ते भवते द्वितीया जयश्रीः विजयलक्ष्मीः इव सर्वान् स्वयम्वरोपस्थितान्नृपान् विनिर्धूय तिरस्कृत्य वधूत्वम् जायात्वं "वधूर्जाया स्नुषा स्त्री च" इत्यमरः । एतु प्राप्नोतु । अत्रोपमालङ्कारः ।

भाषा

हे राजा ! स्वयवर का दिन भी आगया है । कृपा करिये । स्वयवर के लिये प्रस्थान कीजिए । यह चन्दलदेवी दूसरी विजयलक्ष्मी के समान स्वयवर में उपस्थित सब राजाओ का तिरस्कार कर आपकी भार्या बने ।

**श्रुत्वेति तुष्टः स जगाम तत्र तुरङ्गमैरेव जवोत्तरङ्गैः ।**
**स्वयम्वरायातनरेन्द्रचक्रा सा यत्र पुष्पायुधराजधानी ॥३९॥**

अन्वयः

इति श्रुत्वा तुष्टः सः जवोत्तरङ्गैः तुरङ्गमैः एव तत्र जगाम यत्र स्वयम्वरायातनरेन्द्रचक्रा सा पुष्पायुधराजधानी आसीत् ।

व्याख्या

इति दूतेनोक्तं पूर्वं श्रुत्वा निशम्य तुष्टः प्रीतस्सन् स विक्रमाङ्कदेवः जवेन वेगेन "तरस्वी त्वरितो वेगी प्रजवी जवनो जवः" इत्यमरः । उत्तरङ्गैरुद्गततरङ्गैरिव जवोत्तरङ्गैः अतिवेगवद्भिः तुरङ्गमैरश्वैः "घोटके पीतितुरगतुरङ्गाश्वतुरङ्गमाः" इत्यमर । एव तत्र तस्मिन् स्थाने जगाम प्रययौ यत्र स्थाने स्वयम्वराय आयातमागतं नरेन्द्राणां नृपश्रेष्ठानां चक्रं मण्डलं यस्यां सा स्वयम्वरायातनरेन्द्रचक्रा सा नायिका चन्दलदेवी पुष्पायुधस्य कामस्य राजधानीस्वरूपा तद्वदुत्कर्षातिशयशालिनी आसीत् । अत्र रूपकालङ्कारः ।

भाषा

दूत की ऐसी वाणी से प्रसन्न होकर अत्यन्त वेग से चलने वाले घोडो से ही विक्रमाङ्कदेव वहाँ गया, जहाँ, जिसके लिये स्वयंवर में अनेक राजा लोग आये थे, ऐसी वह कामदेव की राजधानीस्वरूप चन्द्रलेखा विराजित थी।

अमानिवाङ्गेषु मुदः प्रकर्षात् प्रत्युद्ययौ तं जनकः कुमार्याः।
अनुष्ठितं सम्यगुपायविद्भिर्नीतः परिस्पन्दमिवार्थसार्थः ॥४०॥

अन्वयः

कुमार्याः जनकः अङ्गेषु मुदः प्रकर्षात् अमान् इव उपायविद्भिः सम्यक् अनुष्ठितं परिस्पन्दं नीतः अर्थसार्थः इव तं प्रत्युद्ययौ।

व्याख्या

कुमार्याः चन्द्रलदेव्याः जनकः पिता करहाटराज अङ्गेषु स्वशरीरावयवेषु मुदो हर्षस्य "मुत्प्रीतिः प्रमदो हर्षप्रमोदामोदसम्मदाः" इत्यमरः। प्रकर्षातिशयात् अमान् इव मातुमशक्नुवन् इव उपायविद्भिः उपायान् कार्यसाधनानि विदन्ति जानन्ति इत्युपायविदस्तैः जनैस्सम्यक् उचितरीत्या अनुष्ठितं साधितं परिस्पन्दं साफल्यं नीतः प्रापितोऽर्थसार्थः इव वस्तुजातमिव तं विक्रमाङ्कदेवं प्रत्युद्ययौ प्रत्युज्जगाम।

भाषा

कुमारी चन्द्रलदेवी का पिता करहाट का राजा, अङ्ग प्रत्यङ्ग में अधिक हर्ष से न समाता हुआ, कार्यसिद्धि में निपुण मनुष्यो द्वारा सफल किये हुये कार्य के समान, उसकी अगवानी के लिये आगे बढा।

निधानलाभादिव हर्षमाप स कुन्तलेन्दुप्रणयान्नरेन्द्रः।
कन्यापितॄणां पदमुत्सवस्य न श्लाघ्यजामातृसमं समस्ति ॥४१॥

अन्वयः

सः नरेन्द्रः कुन्तलेन्दुप्रणयात् निधानलाभात् इव हर्षम् आप। कन्यापितॄणां श्लाघ्यजामातृसमम् उत्सवस्य पदं न समस्ति।

### व्याख्या

सः नरेन्द्रः करहाटदेशनृपतिः कुन्तलेन्दुः कुन्तलदेशस्य राजा विक्रमाङ्कदेवस्तस्य प्रणयात् स्नेहात् निधानलाभादिव निधिप्राप्तेरिव हर्षमानन्दमाप लेभे। कन्यानां कुमारीणां पितरस्तेषां कन्यापितॄणां कुमारीजनकानां कृते श्लाघ्यः प्रशंसनीयो जामाता कन्यापति "जामाता दुहितुः पतिः" इत्यमरः। तेन समं योग्यजामातृप्राप्तिसदृशमुत्सवस्याऽऽनन्दस्य पदं स्थानं "पदं व्यवसितित्राणस्थानलक्ष्माङ्घ्रिवस्तुषु" इत्यमरः। न समस्ति न वर्तते।

### भाषा

करहाट देश का राजा, राजा विक्रमाङ्कदेव की आने की कृपा से खजाना मिलजाने के समान हर्ष से प्रफुल्लित हो गया। कन्या के पिताओं के लिये योग्य जामाता प्राप्त होने के समान दूसरा कोई आनन्द का विषय नहीं है।

**प्रणम्य तेनाथ निवेद्यमान-मार्गः कृताशेषयथोचितेन।**
**श्रीकुन्तलेन्द्रः प्रविवेश भूमिं स्वयम्वरोत्कण्ठितराजचक्राम् ॥४२॥**

### अन्वयः

अथ प्रणम्य कृताशेषयथोचितेन तेन निवेद्यमानमार्गः श्रीकुन्तलेन्द्रः स्वयम्वरोत्कण्ठितराजचक्रां भूमिं प्रविवेश।

### व्याख्या

अथ द्वयोः परस्परं मिलनानन्तरं प्रणम्य प्रणामं विधाय कृतमनुष्ठितं यथोचितमतिथिसत्कारो येन स तेन करहाटनृपेण निवेद्यमानो विज्ञाप्यमानो मार्गोऽध्वा "अयनं वर्त्म मार्गाध्वपन्थानः पदवी सृतिः" इत्यमरः। यस्मै स निवेद्यमानमार्गः श्रीकुन्तलेन्द्रो विक्रमाङ्कदेवः स्वयम्वरायोत्कण्ठितं समुत्सुकं राजचक्रं राजसमूहो यस्यां सा तां भूमिं प्रविवेश लब्धवान्।

### भाषा

दोनो की भेंट होने के बाद प्रणाम कर यथोचित अतिथिसत्कार करने वाले करहाट के राजा द्वारा दिखाए गए मार्ग वाला, वह कुन्तलदेश का राजा विक्रमाङ्कदेव, स्वयम्वर के लिये उत्कण्ठित राजसमूह से युक्त स्वयवरस्थान में प्रविष्ट हुआ।

**स दुन्दुभीनां ध्वनिभिः सतूर्यैः प्रकाश्यमानाभिनवोत्सवायाम् ।**
**प्रविश्य तस्यां भुवि कौतुकेन कान्तासमन्वेषणतत्परोऽभूत् ॥४३॥**

### अन्वयः

सः दुन्दुभीनां सतूर्यैः ध्वनिभिः प्रकाश्यमानाभिनवोत्सवायां तस्यां भुवि प्रविश्य कौतुकेन कान्तासमन्वेषणतत्परः अभूत् ।

### व्याख्या

सः विक्रमाङ्कदेवः दुन्दुभीनां वाद्यविशेषाणां "स्याद्यशोर्वा दुन्दुभिः पुंसि स्यादक्षे दुन्दुभिः स्त्रियाम्" इत्यमरः । सतूर्यैः तूर्यध्वनिसहितैः उच्चध्वनियुतैः वा ध्वनिभिः शब्दैः 'शब्दे निनादनिनदध्वनिध्वानरवस्वनाः" इत्यमरः । प्रकाश्यमानः प्रकटीक्रियमाणोऽभिनवो नवीन उत्सवो महो 'मह उद्धव उत्सवः' इत्यमरः । यस्या सा तस्या प्रकाश्यमानाभिनवोत्सवाया तस्यां भुवि स्वयम्वरप्राङ्गणे प्रविश्य गत्वा कौतुकेनौत्सुक्यातिशयेन कान्तासमन्वेषणतत्परः नायिकानुसंधानपरायणोऽभूत् ।

### भाषा

वह विक्रमाङ्कदेव, तुरही सहित नगाड़ा के शब्दों से या जोर के नगाड़े के शब्दों से प्रकट किये जाने वाले नवीन उत्सव से युक्त स्वयंवर के मण्डप में जाकर बड़ी उत्सुकता से चन्द्रलेखा को देखने के लिये उत्कण्ठित हो उठा ।

**सोपानपंक्तिं स विलङ्घ्य तत्र तरङ्गमालामिव राजहंसः ।**
**सौवर्णपद्मप्रभमारुरोह हेमासनं मन्मथशासनेन ॥४४॥**

### अन्वयः

तत्र सः राजहंसः तरङ्गमालाम् इव सोपानपंक्तिं विलङ्घ्य मन्मथशासनेन सौवर्णपद्मप्रभं हेमासनम् आरुरोह ।

### व्याख्या

तत्र स्वयम्वराङ्गणे स विक्रमाङ्कदेवः राजहंस राजश्रेष्ठः मरालराजो वा तरङ्गमालमूर्मिमालामिव "भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रियां वीचिः" इत्यमरः । "आरोहणंस्यात्सोपान" इत्यमरः । सोपानपंक्तिमारोहणार्थं निर्मितवीथीविशेषश्रेणि विलङ्घ्य समुल्लङ्घ्य मन्मथस्य कामदेवस्य शासनमादेशस्तेन मन्मथशासनेन

सौवर्णपद्मप्रभं कनकमयकमलकान्तिमनोहरं हेम्नः सुवर्णस्याऽऽसनं सुवर्णमय-सिंहासनमारूरोहऽध्यतिष्ठत् ।

भाषा

स्वयंवर मण्डप में राजहंस, पक्ष में राजाओं में श्रेष्ठ विक्रमाङ्कदेव पानी की लहरों पर चलने के समान सीढ़ियों पर चढ़ कर, काम से प्रेरित होकर सोने के कमल के समान कान्ति वाले सोने के सिंहासन पर जा बैठा।

**रराज भूपैः परिवारितोऽसौ शुभ्रे स्थितः सद्मनि कुन्तलेन्द्रः ।**
**यूथे प्रविष्टः करिपोतकानां दुग्धाब्धिमध्यस्थ इवामरेभः ॥४५॥**

अन्वयः

शुभ्रे सद्मनि स्थितः भूपैः परिवारितः असौ कुन्तलेन्द्रः करिपोतकानां यूथे प्रविष्टः दुग्धाब्धिमध्यस्थः अमरेभः इव रराज ।

व्याख्या

शुभ्रे धवले सद्मनि भवने स्थितस्तन्निविष्टः भूपैर्नृपैः परिवारितः परिवेष्टितः असौ कुन्तलेन्द्रो विक्रमाङ्कदेवो करिपोतकानां गजशावकानां "मतङ्गजो गजो नागः कुञ्जरो वारणः करी" इत्यमरः । "पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः" इत्यमरः । यूथे समूहे प्रविष्टः संगतः दुग्धाब्धेः क्षीरसागरस्य मध्ये तिष्ठतीति दुग्धाब्धिमध्यस्थः अमरस्य देवस्य "अमरा निर्जरा देवा" इत्यमरः । "ऐरावतोऽभ्रमातङ्गैरावणाभ्रमुवल्लभाः" इत्यमरः । इभो हस्ती ऐरावत इव रराज शोभायमो बभूव । अत्रोपमालङ्कारः ।

भाषा

राजाओं से घिरा, सफेद मण्डप में बैठा हुआ वह कुन्तलदेश का राजा हाथियों के बच्चों के झुण्ड में प्रविष्ट, क्षीर सागर में रहने वाले ऐरावत हाथी के समान शोभित होता था।

**तस्मिन्प्रविष्टे नरनाथसिंहे कैलासशुभ्रं भवनाङ्गणं तत् ।**
**सा दुर्लभा चन्द्रमुखी नरेन्द्रैः सिंही कुरङ्गैरिव मन्यते स्म ॥४६॥**

अन्वयः

नरनाथसिंहे तस्मिन् कैलासशुभ्रं तत् भवनाङ्गणं प्रविष्टे ( सति ) कुरङ्गैः सिंही इव नरेन्द्रैः चन्द्रमुखी सा दुर्लभा मन्यते स्म ।

### व्याख्या

नारनाथसिंहे राजसिंहे तस्मिन् विक्रमाङ्कदेवे कैलासवच्छुभ्रं धवलं तत् भवनाङ्गणं स्वयम्वरस्थानं प्रविष्टे सति प्रयाते सति कुरङ्गैर्मृगैः सिंही इव नरेन्द्रैः स्वफलनृपेन्द्रैः चन्द्रमुखी विधुवदना सा चन्द्रलदेवी दुर्लभा दुष्प्राप्या मन्यते स्म ज्ञायते स्म ।

### भाषा

राजाओं में शेर के समान पराक्रमशाली, उस विक्रमाङ्कदेव के कैलास-पर्वत के समान श्वेत उस स्वयवर भूमि में पहुँचने पर, हरिणो द्वारा सिंहिनी के समान राजाओ द्वारा वह चन्द्रवदनी चन्द्रलेखा दुर्लभ मान ली गई। अर्थात् हरिणो के समान उन राजाओ को, राजसिंह के आ जाने पर सिंहिनी के समान चन्द्रलेखा को पाने की आशा छूट गई।

**वितानरत्नेषु च कुट्टिमे च बिम्बेन राज्ञां प्रतिबिम्बितेन ।**
**स्वयम्वरोत्साहसभा बभासे सम्प्राप्तलोकत्रयकामुकेव ॥४७॥**

### अन्वयः

वितानरत्नेषु च कुट्टिमेषु राज्ञां प्रतिबिम्बितेन बिम्बेन स्वयम्वरोत्साहसभा सम्प्राप्तलोकत्रयकामुका इव बभासे ।

### व्याख्या

वितानेषु उल्लोचेषु "अस्त्री वितानमुल्लोचो दूष्याद्य" इत्यमरः । रत्नानि वितानरत्नानि तेषु वितानरत्नेषु वितानसम्प्रथितरत्नेषु कुट्टिमेषु मणिरचित-भूमिषु ■ राज्ञां भूमिपालानां प्रतिबिम्बितेन प्रतिफलितेन बिम्बेन स्वरूपेण स्वयम्वरस्य उत्साहसभा आनन्दवर्धिका सभा सम्प्राप्ता लोकत्रयस्य कामुका अभीप्सवो यस्या सा सम्प्राप्तलोकत्रयकामुका इव बभासे शोभां वितस्तार । अत्रोत्प्रेक्षालङ्कारः ।

### भाषा

चदवे में लगे तथा गच में जडे रत्नो मे प्रतिबिम्बित राजाओ की परछाही से स्वयवर का उत्साह बढाने वाली वह सभा मानो तीनो लोको के कामुक एकत्र हुए हो ऐसी शोभित होती थी।

**मञ्चेषु रत्नाङ्कुरदन्तुरेषु भूषामणीनां च कदम्बकेषु ।**
**रूपप्रकर्षार्थितया मुखानि प्रेक्षाम्बभूवुः शतशः क्षितीशाः ४८॥**

अन्वयः

शतशः क्षितीशाः रत्नाङ्कुरदन्तुरेषु मञ्चेषु भूषामणीनां कदम्बकेषु च रूपप्रकर्षार्थितया मुखानि प्रेक्षाम्बभूवुः ।

व्याख्या

शतशः शतसंख्याका अनेके क्षितीशा भूपा रत्नानामङ्कुरेण कान्तिप्ररोहेण दन्तुरा मनोहरास्तेषु रत्नाङ्कुरदन्तुरेषु मञ्चेषु नृपाणामुच्चासिहासनेषु भूषामणीनामलङ्कारभूतमणीना कदम्बकेषु समूहेषु च रूपप्रकर्षस्य स्वरूपसौन्दर्यातिशयस्य अर्थितया अभिलाषुकत्वेन सौन्दर्यगौरवजिज्ञासया मुखान्याननानि प्रेक्षाम्बभूवुः ददृशुः । आदर्शे स्वरूपदर्शनेनैव सौष्ठवासौष्ठववशात तत्परिहारश्च सम्भवति नान्यथेति भावः ।

भाषा

सैकडो अर्थात् अनेक राजाओं ने रत्नों की कान्ति से मनोहर कोचों में तथा आभूषणों मे जडे मणिसमूहों में अपने स्वरूप की श्रेष्ठता का परिज्ञान करने के लिये अपने मुखों को देखा। अर्थात् उन रत्नों से दर्पण का काम लिया ।

**मुक्तावितानेषु नरेश्वराणामतिष्ठदुच्चैः प्रतिबिम्बपंक्तिः ।**
**कस्यापि सज्जीकृतपुष्पवर्षा सौभाग्यसीम्नस्त्रिदशावलीव ॥४९॥**

अन्वयः

मुक्तावितानेषु नरेश्वराणां प्रतिबिम्बपंक्तिः सौभाग्यसीम्नः कस्य अपि सज्जीकृतपुष्पवर्षा त्रिदशावली इव उच्चैः अतिष्ठत् ।

व्याख्या

मुक्तावितानेषु मुक्ताविरचितोल्लोचेषु नरेश्वराणां राज्ञां प्रतिबिम्बानां पंक्तिः प्रतिफलिता सती सौभाग्यस्य ऐश्वर्यस्य सीमा परमावधिस्तस्य सौभाग्यसीम्नोऽतिपुण्यशालिनः कस्यापि पुरुषरत्नस्य कृते सज्जीकृता समुपनीता पुष्पाणां कुसुमाना वर्षा यया सा सज्जीकृतपुष्पवर्षा त्रिदशावली देवपंक्तिरिव "अमरा

निर्जरा देवास्त्रिदशाविबुधा सुरा' इत्यमर । "वीथ्यालिरावलि पङ्क्ति श्रेणी' इत्यमर । उच्चै उपरिभागे अतिष्ठित् विराजते स्म ।

भाषा

मोती के बने चदवो में राजाओ के प्रतिविम्ब की श्रणी परम भाग्यवान् किसी पुरुष पर फूलो की वृष्टि करने में तत्पर देवो की श्रेणी के समान ऊपर विराजित थी।

मुक्ताफलस्रग्भिरवाप शोभां पतिंवरा विभ्रमवेदिका सा ।
चन्द्रो बहुस्त्रीक इति प्रवक्तुं भियेव ताराभिरुपास्यमाना ॥५०॥

अन्वयः

पतिंवरा सा विभ्रमवेदिका मुक्ताफलस्रग्भिः चन्द्रः बहुस्त्रीकः इति प्रवक्तुं भिया ताराभिः उपास्यमाना इव शोभाम् अवाप ।

व्याख्या

पतिर्व्रियतेऽस्यामिति पतिंवरा सा प्रसिद्धा विभ्रमस्य राज्ञा कन्यायाश्च विलासस्य भूमि स्वयम्वरभूमि मुक्ताफलस्रग्भि मुक्ताफलमालाभि 'माल्य मालास्रजौ' इत्यमर । चन्द्र इन्दु बहुच स्त्रियो यस्य स बहुस्त्रीक अनेक-नारीजनवल्लभ इति प्रवक्तु कथयितु भिया भयेन ताराभिश्चन्द्रस्त्रीभिरुपास्य-माना सेव्यमाना इव शोभा लक्ष्मीम् अवाप प्राप । अय भाव —कन्येय चन्द्रलेखानाम्नी । चन्द्र खलु बहुस्त्रीक इति सत्यपि सतामनि, चन्द्र मा वृण्विति स्वपत्युश्चन्द्रस्य विरोधकृद्वचनाद्भियैव प्रवक्तु चन्द्रस्त्रीभिरुपास्यमानेति भाव । तेन च बहुस्त्रीक नृव मा वृण्विति ध्वनि ।

भाषा

पति को चुनने का और राजाओ के और कन्या के विलास का स्थान वह स्वयवर मण्डप (लटकाई हुई) मोतियो की मालाओसे मानो चन्द्रमा की बहुत स्त्रिया है, ऐसा डर से कहने के लिये आई हुई ताराओ से अर्थात् चन्द्रमा की स्त्रियो से सेवित हो ऐसा शोभित होता था । अर्थात यद्यपि तुम्हारा नाम चन्द्रलेखा है तो भी चन्द्रमा को अपना पति मत बनाओ । क्योकि वह अनेक स्त्रियो का स्वामी है । ऐसा अपने पति के विरोध में कहनमें भय स युक्त होकर आई हुई ताराओ अर्थात चन्द्र की स्त्रियो से युक्त वह स्वयवर भूमि शोभित

होती थीं। इससे यह ध्वनि होती है कि जो राजा अनेक स्त्रियों वाला हो उससे विवाह मत करो।

ये भूभुजः प्राज्यतरेण धाम्ना बभूवुरुद्योतितभाः[1] सभायाम्।
ते विक्रमक्ष्मापतिसंनिधाने प्रभातदीपप्रतिमामवापुः ॥५१॥

अन्वयः

ये भूभुजः प्राज्यतरेण धाम्ना सभायाम् उद्योतितभाः बभूवुः ते विक्रमक्ष्मापतिसंनिधाने प्रभातदीपप्रतिमाम् अवापुः।

व्याख्या

ये भूभुजः भुवं पृथ्वीं भुञ्जन्ति पालयन्तीति भूभुजः राजानः प्राज्यतरेण प्रभूततरेण "प्रभूतं प्रचुरं प्राज्यमदभ्रं बहुलं बहु" इत्यमरः। धाम्ना तेजसा सभायां चन्द्रलेखास्वयम्वरसंसदि उद्योतिता उल्लसिता भा कान्तिः येषां ते उद्योतितभाः "स्युः प्रभा रुग्रुचिस्त्विड् भा भाश्छविद्युतिदीप्तयः" इत्यमरः। प्रकाशितदीप्तयः बभूवुरासन् ते विक्रमस्य विक्रमाङ्कदेवस्य क्ष्मापतेर्नृपस्य संनिधाने प्रभाते प्रातःकाले दीपप्रतिमां दीपवद्विच्छायत्वमवापुः प्रापुः। विक्रमाङ्कदेवस्य सूर्येण साम्यम् अन्येषां राज्ञां प्रातर्निस्तेजस्कदीपसादृश्यं बोध्यम्। अत्रोपमालङ्कारः।

भाषा

जो राजा लोग अत्यधिक तेज से स्वयंवर सभा में अपनी कान्ति फैलाए हुए थे वे राजा विक्रमाङ्कदेव के सामने प्रातः काल के दीप के समान दिखाई देने लगे। अर्थात सूर्य के समान कान्ति वाले विक्रमाङ्कदेव के सामने वे राजा प्रातःकालीन दीपक के समान हो गए।

सम्प्रति स्वयम्वरस्थां चन्द्रलेखां वर्णयति कुलकेन कविः।

सुवर्णरेखारमणीयदेहा देवस्य रामा नयनायुधस्य।
अनेकपृथ्वीपतिभाग्यहेम-परीक्षणार्थे कषपट्टिकेव ॥५२॥

अन्वयः

सुवर्णरेखारमणीयदेहा नयनायुधस्य देवस्य रामा अनेकपृथ्वीपतिभाग्यहेमपरीक्षणार्थं कषपट्टिका इव। (पतिंवरा सा आविर्बभूव इत्यनेन ६४ श्लोकगतेन सम्बन्धः)

---

[1] 'उद्योतनिभा' इति मूलपाठः। परन्तु स चिन्त्यः।

### व्याख्या

सुवर्णरेखावत् काञ्चनरेखावत् रमणीयः सुन्दरो देहः शरीरं यस्यास्सा नयनायुधस्य नयनं नारीनयनमेवायुधं बाणो यस्य स तस्य कामदेवस्य रामा रतिस्तत्स्वरूपा अनेके पृथ्वीपतयोनृपास्तेषां भाग्यान्येव हेम सुवर्णं तस्य परीक्षणार्थं सौष्ठवासौष्ठवविवेचनार्थं कषपट्टिका कषोपल इव "शाणस्तु निकष कष." इत्यमरः। "आविर्बभूवाथ पतिंवरा सा" इत्यनेन सम्बन्ध.। अत्र रूपकमुत्प्रेक्षा चाऽलङ्कारः।

### भाषा

सोने की लकीर के समान चमकती हुई सुन्दर देहवाली, स्त्रियों के नेत्ररूपी बाण धारण करने वाले कामदेव की स्त्री रतिस्वरूप, अनेक राजाओं के भाग्यरूपी सोने की परीक्षा करने के लिये कसौटी के समान (वह चन्द्रलेखा प्रकट हुई।)

**मुखेन लज्जाभिनयप्रगल्भा लीलालवन्यञ्चितकन्धरेण।**
**प्रत्यादिशन्तीव दिवि स्फुरन्तमनेकदोषोपहतं मृगाङ्कम् ॥५३॥**

### अन्वयः

लज्जाभिनयप्रगल्भा लीलालवन्यञ्चितकन्धरेण मुखेन दिवि स्फुरन्तम् अनेकदोषोपहतं मृगाङ्कं प्रत्यादिशन्ती इव (पतिंवरा सा आविर्बभूव।)

### व्याख्या

लज्जाया अभिनये प्रकाशने प्रगल्भा चतुरा लज्जाभिनयप्रगल्भा लीलाया विलासस्य लवेन लेशेन "लवलेशकणाणव" इत्यमर.। न्यञ्चिता वक्रीकृता कन्धरा ग्रीवा "कण्ठो गलोऽथ ग्रीवायां शिरोधिः कन्धरेत्यपि" इत्यमरः। यस्मिन् तत् तेन लीलालवन्यञ्चितकन्धरेण मुखेनाऽऽननेन दिवि आकाशे "द्योदिवौ द्वे स्त्रियामभ्रं व्योम पुष्करमम्बरम्" इत्यमरः। स्फुरन्तं देदीप्यमानमनेके बहवो दोषास्सकलङ्कत्वादय तैरुपहत विनष्टमाहात्म्यमनेकदोषासु बहुरात्रिषु कृष्णपक्षे उपहत निष्प्रभ वा मृगाङ्क चन्द्र "ग्लौर्मृगाङ्क कलानिधि" इत्यमरः। प्रत्यादिशन्तीव तिरस्कुर्वन्ती इव "प्रत्यादेशो निराकृति" इत्यमरः। अस्या तु न कोऽपि दोषो न च कासुचिदपि रजनीषु कान्तिराहित्य मुखे प्रतीयत इति भाव.। एव भूता पतिंवरा साऽऽविर्बभूवेत्यनेन चतु पञ्चिसख्याकेन श्लोकेन सबन्ध। अत्र प्रतीपालङ्कारः।

### भाषा

लज्जा को प्रकट करने में प्रवीण (वह चन्द्रलेखा) विलास से थोड़ी झुकाई हुई गर्दन से युक्त मुख से आकाश में चमकने वाले अनेक दोषों से निन्द्य अथवा अनेक रात्रियों में (कृष्ण पक्ष में) कान्तिहीन चन्द्रमा का मानों निरस्कार करती हुई (प्रकट हुई)।

एकां भ्रुवं विभ्रमराजधानीं सलिलमर्धोन्नमितां दधाना।
प्रतारकस्याखिलपार्थिवानां संतर्जनायेव मनोभवस्य ॥५४॥

### अन्वयः

अखिलपार्थिवानां प्रतारकस्य मनोभवस्य संतर्जनाय इव विभ्रम-राजधानीं सलीलम् अर्धोन्नमिताम् एकां भ्रुवं दधाना (सा आविर्बभूवेति सम्बन्धः)।

### व्याख्या

अखिलपार्थिवानां सकलनृपाणां प्रतारकस्य छलनाम् स्नेहासक्तिजननद्वारा-वञ्चकस्य मनोभवस्य कामस्य संतर्जनाय भर्त्सनायेव विभ्रमाणां विलासानां राजधानी प्रधानस्थानं तां लीलया विलासेन सहितं सलीलम् अर्धभागे उन्नमिता ऊर्ध्वीकृता अर्धोन्नमिता ताम् अर्धोन्नमिताम् एकां भ्रुवं दधाना धारयन्ती (सा पतिवराऽऽविर्बभूवेति सम्बन्धः।) अत्रोत्प्रेक्षालङ्कारः।

### भाषा

समग्र राजाओं को (सुन्दरी स्त्री का प्रलोभन देकर) ठगने वाले कामदेव को मानों डराने के लिये, विलास की प्रधान नगरी स्वरूप लीला से आधी उठी हुई एक भौं को धारण किए हुए (चन्द्रलेखा प्रकट हुई।)

प्राणेशकण्ठप्रणयोद्यतायाः करस्थितायाः कुसुमस्रजोऽपि।
ईर्ष्याविशेषादिव धारयन्ती साकूतवक्रेक्षणमाननेन्दुम् ॥५५॥

### अन्वयः

करस्थितायाः प्राणेशकण्ठप्रणयोद्यतायाः कुसुमस्रजः अपि ईर्ष्या-विशेषात् इव साकूतवक्रेक्षणं आननेन्दुं धारयन्ती (आविर्बभूव)।

### व्याख्या

करे हस्ते स्थिता करस्थिता तस्याः प्राणेशस्य भाविपत्युः कण्ठे गले प्रणय-प्राप्तिविषयकाभिलाषस्तस्मिन् उद्यता सन्नद्धा तस्याः कुसुमस्रजः स्वयम्वरसम्ब-न्धिपुष्पमालाया अपि ईर्ष्याविशेषाद् इव मात्सर्यातिशयाद् इव साकूते साभिप्राये वक्रे कुटिले चञ्चले ईक्षणे नयने यस्मिन्स्तमाननेन्दुं मुखचन्द्रं धारयन्ती दधाना (सा आविर्बभूवेति सम्बन्धः ।) स्वपत्युः ग्रीवायाः कथमन्या काऽपि स्पर्शं कुर्या-दितीर्ष्यया मालायां किञ्चिद्दमर्षं धारयन्तीति भावः ।

### भाषा

हाथ में ली हुई, भावी पति के गले में पड़ने के प्रेम में उद्यत, फूल की माला के भी मानो अधिक डाह से क्रोध के अभिप्राय से टेढ़े और चञ्चल नत्रों से युक्त मुखचन्द्र को धारण करने वाली (प्रकट हुई।) अर्थात् मेरे पति के गले का यह स्पर्श करेगी इस डाह से क्रुद्ध हो गई थी।

**माणिक्यभित्तिप्रतिमानिभेन सौभाग्यहेतोर्विधृतेव दिग्भिः ।**
**मनोभवेनापि निजोत्पलाक्षी-वैराग्यभाजेव निषेव्यमाणा ॥५६॥**

### अन्वयः

दिग्भिः माणिक्यभित्तिप्रतिमानिभेन सौभाग्यहेतोः विधृता इव निजोत्पलाक्षीवैराग्यभाजा मनोभवेन अपि निषेव्यमाणा इव (सा आवि-र्बभूवेति सम्बन्धः ।)

### व्याख्या

दिग्भिः दिगङ्गनाभिः माणिक्यभित्तिषु मणिमयकुड्येषु "भित्तिः स्त्री कुड्य-मेडूकम्" इत्यमरः । प्रतिमाः चन्द्रलेख्याः प्रतिबिम्बानि तेषां निभेन व्याजेन सौभाग्यहेतोः अस्माकमपि त्वादृशमनुपमं सौभाग्यं जायतामितीच्छया विधृता इव अनिर्वर्णनीयसौभाग्योपायजिज्ञासया गृहीता इव निजस्य स्वस्य उत्पलवदक्षिणी यस्याः सा उत्पलाक्षी नीलकमलसदृशनयना रतिः तस्यां वैराग्यं स्नेहाभावः, अन्य-स्यामुत्कृष्टतरसौन्दर्यदर्शनात्, तत् भजतीति भाक् तेन मनोभवेनाऽपि कामेनापि निषेव्यमाणा ससेव्यमाना समुपास्यमाना इव (सा पतिवराऽऽविर्बभूवेति सम्बन्धः ।) अत्रोत्प्रेक्षालङ्कारः ।

### भाषा

माणिक्या से जड़ी भीतों में पड़े चन्द्रलेखा के प्रतिबिम्बों के मिष से मानो हम लोगों को भी चन्द्रलेखा के समान सौभाग्य प्राप्त हो ऐसी भावना से

दिगङ्गनाओं द्वारा धारण की हुई तथा अपनी कमलनयनी रति से भी अधिक सुन्दर चन्द्रलेखा को देखकर मानो रति के विषय में वैराग्य रखने वाले कामदेव से सेवित (वह चन्द्रलेखा प्रकट हुई।)

**निजत्विषा भूषणरत्नमालां समुल्लसन्त्या मलिनां विधाय।**
**निवारयन्ती प्रतिबिम्बभङ्गयाप्यङ्गेषु सामान्यनरेन्द्रसङ्गम् ॥५७॥**

अन्वयः

समुल्लसन्त्या निजत्विषा भूषणरत्नमालां मलिनां विधाय प्रतिबिम्बभङ्ग्या अपि अङ्गेषु सामान्यनरेन्द्रसङ्गं निवारयन्ती (सा आविर्बभूवेति सम्बन्धः।)

व्याख्या

समुल्लसन्त्या विद्योतमानया निजत्विषा स्वदेहप्रभया भूषणरत्नमालाम्—शृङ्गाररत्नस्रजं मलिनां मलीमसां निष्प्रभां विधाय प्रतिबिम्बभङ्ग्या अपि स्तनेषु राज्ञः प्रतिबिम्बव्याजेनापि अङ्गेषु स्वीयानिर्वचनीयसौन्दर्यविशिष्टाङ्गेषु सामान्यनरेन्द्रसङ्गं साधारणनृपसम्बन्धं निवारयन्ती निषेधयन्ती। स्वीयाङ्गप्रभया भूषणरत्नमाला मलिना जाता। अतः रत्नमालायां मलिनायां साधारणनृपाणामङ्गप्रतिबिम्बं न प्रतिफलति ततो नृपा निजाङ्गप्रतिबिम्बेनापि न स्प्रष्टुं पारयन्ति किं पुनस्साक्षादिति भावः। (एवं भूता सा पतिंवराऽऽविर्बभूवेति सम्बन्धः।) अत्र व्यङ्ग्योत्प्रेक्षालङ्कारः।

भाषा

चमकभरी अपनी देह कान्ति से आभूषण रूप रत्न की माला को निस्तेज करके परछाही के मिष से भी अपने अङ्गों में अन्य साधारण राजाओं के सङ्ग को बचाती हुई (वह चन्द्रलेखा प्रकट हुई।)

**अंसस्थले हारलताञ्चलस्थ-विलोलनेत्रच्छटया सनाथा।**
**त्रिलोककान्ताजनदर्पभङ्ग-प्रसूतया कीर्तिपताकयेव ॥५८॥**

अन्वयः

त्रिलोककान्ताजनदर्पभङ्गप्रसूतया कीर्तिपताकया इव अंसस्थले हारलताञ्चलस्थविलोलनेत्रच्छटया सनाथा (सा आविर्बभूवेति सम्बन्धः।)

### व्याख्या

त्रिलोकस्य त्रिभुवनस्य "लोकस्तु भुवने जने" इत्यमर । कान्ताजन. स्त्रीजनस्तस्य दर्प सौन्दर्याहङ्कारस्तस्य भङ्गो विनाशस्तस्मात्प्रसूतयोत्पन्नया कीर्तिरेव पताका तया इव असस्थले स्कन्धप्रान्ते "स्कन्धो भुजशिरोंऽसोऽस्त्री" इत्यमर. । हारलतायाअञ्चल प्रान्तभागस्तस्मिन्तिष्ठतीति हारलताञ्चलस्या विलोला चञ्चला नेत्रच्छटा कटाक्षच्छटा तया सनाथा सहिता । पताकाया दण्डस्थाने हारयष्टिः ध्वजवस्त्रस्थाने समुज्वला चञ्चलनेत्रच्छटेति भाव । (एव भूता सा पतिवराऽऽविर्बभूव ।)

### भाषा

त्रिभुवन की सुन्दरियों के सौन्दर्य के अभिमान को नष्ट कर देने से उत्पन्न यश की पताका के समान अपने कन्धे पर मुक्ताहार के प्रान्त भाग में स्थित चञ्चल नेत्र की छटा से युक्त (वह चन्द्रलेखा प्रकट हुई ।) अर्थात् उस कीर्तिपताका का मुक्ताहार डण्डा था । उस पर पडी उसकी चञ्चल नेत्रच्छटा ध्वजा का वस्त्र था ।

**सहागतानीव जगन्मनांसि दाक्षिण्ययोगात्प्रतिपालयन्ती ।**
**कन्दर्पमत्तद्विरदेन्द्रभङ्ग्या विलम्ब्य किञ्चिद्ददती पदानि ॥४६॥**

### अन्वयः

सह आगतानि जगन्मनासि दाक्षिण्ययोगात् प्रतिपालयन्ती इव कन्दर्पमत्तद्विरदेन्द्रभङ्ग्या किञ्चित् विलम्ब्य पदानि ददती ( सा आविर्बभूवेति सम्बन्धः । )

### व्याख्या

सह आगतानि प्रेमवशात् अनुगामीनि जगतो मनासि सर्वलोकजनहृदयानि दाक्षिण्य परच्छन्दानुवर्तित्व तस्य योगात्सम्बन्धात् प्रतिपालयन्ती जगन्मनसा सहागमन प्रतीक्षमाणा इव कन्दर्प काम "कन्दर्पो दर्पकोऽनङ्ग काम पञ्चशर स्मर" इत्यमर । एव मत्तो मदान्धो द्विरदेन्द्रो गजराजस्तस्य भङ्ग्या रीत्या किञ्चिद्विलम्ब्य शनै शनै पदानि ददती चरणन्यासान् कुर्वती (सा पतिवराऽऽविर्बभूवेति सम्बन्ध ।)

भाषा

साथ में आए हुए, अनुगामी संसार भर के मनों की, सौजन्य से मानों प्रतीक्षा करती हुई, काम रूपी मदोन्मत्त श्रेष्ठ गज की चाल से कुछ रुक २ कर पाव चलाने वाली (वह चन्द्रलेखा प्रकट हुई।)

कर्पूरवल्लीदलवीटिकायां व्यापारितव्याकुलवामहस्ता।
कपोलवल्गत्पुलकाङ्कुरश्रीर्विहस्य किञ्चित्परिभावयन्ती ॥६०॥

अन्वयः

कर्पूरवल्लीदलवीटिकायां व्यापारितव्याकुलवामहस्ता कपोलवल्गत्पुलकाङ्कुरश्रीः विहस्य किञ्चित् परिभावयन्ती (सा आविर्बभूवेति सम्बन्धः।)

व्याख्या

कर्पूरवल्लीदलं कर्पूरलतापत्रं तस्य वीटिकायां "बीड़ा" इति हिन्दी भाषायाम्। व्यापारितो व्याकुलश्चञ्चलो वामहस्तो वामकरो यस्यास्सा व्यापारितव्याकुलवामहस्ता कपोले गण्डे "अधस्ताच्चिबुकं गण्डो कपोलौ" इत्यमरः। वल्गन्ती वर्धमाना पुलकाङ्कुरस्य रोमाञ्चस्य श्रीः शोभा यस्यास्सा विहस्य स्मितं कृत्वा किञ्चिद्वस्तु रहस्यभूतं परिभावयन्ती चिन्तयन्ती (सा पतिंवराऽऽविर्बभूवेति सम्बन्धः।) एतेन शृङ्गारभावजश्चेष्टाविशेष उक्तः।

भाषा

अपने चञ्चल बाँए हाथ में कपूरिया पान के बीड़े को रखने वाली, गालों पर बढ़ने वाले रोमाञ्च से युक्त, हँसकर किसी गुप्त बात को मन में सोचती हुई (वह चन्द्रलेखा प्रकट हुई।)

पदे प्रमोदालसराजहंस-विलासिनीचङ्क्रमणक्रमेण।
संक्रान्तरागेषु निवेशयन्ती नरेन्द्रचित्तेष्विव कुट्टिमेषु ॥६१॥

अन्वयः

प्रमोदालसराजहंसविलासिनीचङ्क्रमणक्रमेण संक्रान्तरागेषु कुट्टिमेषु इव संक्रान्तरागेषु नरेन्द्रचित्तेषु पदं निवेशयन्ती (सा आविर्बभूवेति सम्बन्धः।)

व्याख्या

प्रमोदेनाऽऽनन्देनाऽलसो मन्थरो यो राजहंसः "राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः" इत्यमरः। मरालराजः तस्य विलासिनी कामिनी तस्याश्चङ्क्रमणक्रमेण पादन्यासप्रकारेण सङ्क्रान्तोऽनुषक्तो रागो लौहित्यं येषु ते तेषु संक्रान्तरागेषु कुट्टिमेषु बद्धभूमिषु इव संक्रान्तोऽनुषक्तो रागो प्रेम येषु तेषु नरेन्द्रचित्तेषु राजेन्द्रमानसेषु पद चरण राजहंसो पक्षे, स्थानं तु चन्दलदेवी पक्षे, निवेशयन्ती कुर्वती ( सा पतिंवराऽऽविर्बभूवेति सम्बन्धः । )

भाषा

राजहंसी के समान आनन्द से मन्दगति के गमन के कारण पाओं की लालिमा से लाल दीख पडने वाली भूमि के समान, प्रेम से भरे राजाओं के मनों में स्थान बनाने वाली (वह चन्द्रलेखा प्रकट हुई।)

मनोभवज्यावलयानुकारि-कर्णद्वयावासितनेत्रपत्रा ।
वेणीं स्फुरत्पुष्पशिलीमुखाढ्यां कन्दर्पभस्त्रामिव धारयन्ती ॥६२॥

अन्वयः

मनोभवज्यावलयानुकारिकर्णद्वयावासितनेत्रपत्रा स्फुरत्पुष्पशिलीमुखाढ्यां कन्दर्पभस्त्राम् इव वेणीं धारयन्ती (सा आविर्बभूवेति सम्बन्धः।)

व्याख्या

मनोभवस्य कामस्य ज्यावलयं गोलाकाररूपा मौर्वी "मौर्वीज्या शिञ्जिनी गुणः" इत्यमरः। तदनुकारि तत्सदृशं कर्णद्वयं तस्मिन् तेन वा आवासितं धारितं बद्धं वा नेत्रमेव पत्रं यस्याः सा स्फुरन्ति विकसन्ति पुष्पाणि कुसुमानि एव शिलीमुखा बाणा पक्षे स्फुरन्तो पुष्पेषु भ्रमरा "अलिबाणौ शिलीमुखौ" इत्यमरः। वा तैराढ्या समृद्धा कन्दर्पस्य कामस्य भस्त्रा तूणीरमिव "इभ्य आढ्यो धनी स्वामी" इत्यमरः । वेणीं धारयन्ती दधाना ( सा पतिंवराऽऽविर्बभूवेति सम्बन्धः।) अत्रोत्प्रेक्षालङ्कारः।

भाषा

कामदेव की गोलाकार की हुई मौर्वी के समान कानों तक पहुँचे हुए नेत्रपत्र वाली, फूले हुए फूल रूपी बाणों से समृद्ध कामदेव के तरकस के समान पक्ष में फूलों पर बैठे हुए भ्रमरों से समृद्ध, वेणी को धारण करने वाली (वह चन्द्रलेखा प्रकट हुई।)

विलोलचूर्णालकवल्लरीणां सङ्गे स्पृशन्तीं कलिकानुकारम् ।
श्रीखण्डलेखामलिके वहन्ती भ्रूकार्मुके मन्मथकेतकास्त्रम् ॥६३॥

अन्वयः

विलोलचूर्णालकवल्लरीणां सङ्गे कलिकानुकारं स्पृशन्ती भ्रूकार्मुके मन्मथकेतकास्त्रं श्रीखण्डलेखां अलिके वहन्ती ( सा आविर्बभूवेति सम्बन्धः । )

व्याख्या

विलोलचूर्णालकवल्लरीणां चञ्चलचूर्णकुन्तललतानाम् "अलकाश्चूर्णकुन्तलाः" इत्यमरः । सङ्गे समीपे कलिकानुकारं कलिकायाः कोरकस्य "कलिका कोरकः पुमान्" इत्यमरः । अनुकारस्सादृश्यं तत् स्पृशन्तीं दधाना भ्रुवावेव कार्मुकं धनुस्तस्मिन् भ्रूकार्मुके मन्मथस्य कामस्य केतकास्त्रं केतकपुष्पबाण, चन्दन-तिलकस्य धवलत्वात्कामोद्दीपकत्वाच्च कामकेतकपुष्पबाणसादृश्येन रूपकम् । श्रीखण्डलेखां चन्दनतिलकम् अलिके भाले "ललाटमलिकं गोधिः" इत्यमरः । वहन्ती धारयन्ती ( सा पतिंवराऽऽविर्बभूवेति सम्बन्धः । ) अत्र रूपकालङ्कारः ।

भाषा

बिखरे हुए घुघराले बाल रूपी लताओं के समीप में कली की आकृति दिखाने वाले, भौं रूपी धनुष में कामदेव के केवड़े के बाण के स्वरूप, सफेद चन्दन के तिलक को ललाट पर लगाए हुए (वह चन्द्रलेखा प्रकट हुई) ।

आविर्बभूवाथ पतिंवरा सा क्षौमाम्बरप्रस्फुरदुत्तरीया ।
मृगेक्षणा दुग्धपयोधिमुग्ध-तरङ्गलेखानुगतेव लक्ष्मीः ॥६४॥

अन्वयः

अथ क्षौमाम्बरप्रस्फुरदुत्तरीया मृगेक्षणा सा पतिंवरा दुग्धपयोधि-मुग्धतरङ्गलेखानुगता लक्ष्मीः इव आविर्बभूव ।

व्याख्या

अथ विक्रमाङ्कदेवस्य सभायामासने समुपवेशनानन्तरं क्षौमं कौशेयमम्बरं वस्त्रमेव "अम्बरं वाससि व्योम्नि कार्पासे च सुगन्धके" इति विश्वः । प्रस्फुर-च्चञ्चलमुत्तरीयमुपरितनं धार्यमाणं वस्त्रं "संव्यानमुत्तरीयं च" इत्यमरः ।

यस्यास्सा क्षौमाम्बरप्रस्फुरदुत्तरीया मृगेक्षणा मृगनयना सा पतिवरा कन्या चन्द्रलेखा दुग्धपयोधेः क्षीरसागरस्य मुग्धा रमणीया तरङ्गलेखा ऊर्मिमाला "भङ्गस्तरङ्ग ऊर्मिर्वा" इत्यमरः। तया अनुगता पश्चात्सङ्गता लक्ष्मी इव आविर्बभूव आजगाम।

भाषा

राजा विक्रमाङ्कदेव के अपने आसन पर बैठ जाने पर, फरफराती हुई सफेद रेशमी कपड़े की चमकदार ओढनी ओढे, मृगनयनी, वह पति को चुनने वाली चन्द्रलेखा, क्षीरसागर की सुन्दर तरङ्गलेखा से अनुगत लक्ष्मी के समान प्रकट हुई।

हेमाद्रिमावर्त्य कृतेव धात्रा विसारिभिर्या किरणैस्तदीयैः ।
सा सङ्गता रङ्गतले नताङ्गी सर्वस्य लोभं सुभगा ततान ॥६५॥

अन्वयः

या धात्रा हेमाद्रिं आवर्त्य तदीयैः विसारिभिः किरणैः कृता इव सा रङ्गतले सङ्गता सुभगा नताङ्गी सर्वस्य लोभं ततान।

व्याख्या

या चन्द्रलेखा धात्रा ब्रह्मणा हेमाद्रिं कनकाद्रिं सुमेरुम् "मेरुः सुमेरुर्हेमाद्रिः" इत्यमरः। आवर्त्य सारग्रहणार्थं भ्रामयित्वा तस्य हेमाद्रेस्सम्बन्धिभिर्विसारिभिः विसृत्वरैः किरणैर्भाभिः कृता निर्मिता इव प्रकाशमानत्वात्, सा रङ्गतले स्वयम्वरस्थले सङ्गता प्राप्ता सुभगा सौभाग्यशालिनी नताङ्गी विनम्रावयवा चन्द्रलेखा सर्वस्य नृपस्य समग्रनरेन्द्रमण्डलस्य लोभं मनोग्राह्यत्वं (स्वविषये) ततान विस्तारयामास। अत्रोत्प्रेक्षालङ्कारः।

भाषा

जिस चन्द्रलेखा को ब्रह्मा ने मानो सोने के सुमेरुपर्वत की छाल बीन कर, उस सुवर्णपर्वत के चारो ओर फैलने वाले किरणो से बनाया था वह स्वयम्वर के मण्डप में आई हुई, सौभाग्यशालिनी नम्र अवयव वाली चन्द्रलेखा ने सब राजाओ के लोभ को (अपने सम्बन्ध में) बढा दिया। अर्थात् सब राजा हमको चन्द्रलेखा मिले ऐसा लोभ करने लगे।

विलोकयामास विलासपद्मं सगर्वमोपन्मुकुलायिताक्षी ।
दिक्पालहेतोरिव दूतकर्म दिगङ्गनानामवधारयन्ती ॥६६॥

### अन्वयः

ईषन्मुकुलायिताक्षी दिग्पालहेतोः दिगङ्गनानां दूतकर्म अवधारयन्ती इव सगर्वं विलासपद्मं विलोकयामास ।

### व्याख्या

ईषन्मुकुलयदाचरिते अक्षिणी नेत्रे "लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी" इत्यमरः । यस्यास्सा ईषन्मुकुलायिताक्षी मनाङ्मीलितनेत्रा दिग्पालहेतोः इन्द्रयमादिलोकपालार्थं दिगङ्गनानां दिक्स्वरूपस्त्रीणां दूतकर्म दौत्यमवधारयन्ती इव निर्णयन्ती इव, सगर्वं सदर्पं विलासपद्म स्वकरस्थितं कमलं विलोकयामास ददर्श । विचारसमये निश्चलवस्तुनि निश्चला शून्या च दृष्टिर्भवति इति बहुधा दृश्यते लोके ।

### भाषा

अपनी दोनों आँखों को कुछ बन्द किए हुए, मानो इन्द्रयमादि दिक्पालों को स्वयंवर में बुलाने के लिये दिगङ्गना दूत कर्म कर रही है ऐसा निश्चय करती हुई उस चन्द्रलेखा ने बड़े गर्व के साथ अपने हाथ में के शोभा के लिये, लिये हुए कमल को देखा । अर्थात् ध्यानावस्थित हो गई ।

स ताडितश्चेतसि मन्मथेन निःशङ्कमाक्रान्तशरासनेन ।
विलोक्य तां विभ्रमवैजयन्तीमचिन्तयत्कुन्तलचक्रवर्ती ॥६७॥

### अन्वयः

आक्रान्तशरासनेन मन्मथेन निश्शङ्कं चेतसि ताडितः सः कुन्तल-चक्रवर्ती विभ्रमवैजयन्तीं तां विलोक्य अचिन्तयत् ।

### व्याख्या

आक्रान्तं गृहीतं शरासनं धनुः "धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम्" इत्यमरः । येन सः तेन मन्मथेन कामेन निश्शङ्कं भयरहितं यथा स्यात्तथा चेतसि हृदये ताडितः प्रहृतः सः कुन्तलदेशस्य चक्रवर्ती सार्वभौमः विक्रमाङ्कदेवः विभ्रमस्य विलासस्य वैजयन्तीं पताकास्वरूपां "पताका वैजयन्ती स्यात्केतनं ध्वजमस्त्रियाम्" इत्यमरः । तां चन्द्रलेखां विलोक्य अचिन्तयत् विचारयामास ।




### भाषा

चढाए धनुषवाले कामदेव द्वारा निर्भयता से हृदय में प्रहार किया गया हुआ वह कुन्तल का सार्वभौम राजा विक्रमाङ्कदेव, विलास की विजयपताका स्वरूपिणी उस चन्दलदेवी को देख कर सोचने लगा ।

**अनर्घ्यलावण्यनिधानभूमिर्न कस्य लोभं लटभा तनोति ।**
**अवैमि पुष्पायुधयामिकोऽस्यामविश्वसन्न क्षणमेति निद्राम् ॥६८॥**

### अन्वयः

अनर्घ्यलावण्यनिधानभूमिः लटभा कस्य लोभं न तनोति, अस्याम् अविश्वसन् पुष्पायुधयामिकः निद्रां क्षणं न एति ( इति ) अवैमि ।

### व्याख्या

अनर्घस्याऽमूल्यस्य लावण्यस्य सौन्दर्यस्य निधानभूमिर्निधिस्थानम् अनर्घ्यलावण्यनिधानभूमिः लटभा सुन्दरी चन्द्रलेखा कस्य जनस्य लोभं हृदयाकर्षणं न तनोति विस्तारयति । अतएव अस्या चन्दलदेव्याम् अविश्वसन् सौजन्यव्यवहारस्य प्रतीतिमकुर्वन् पुष्पायुधः काम एव यामिकः प्राहरिक इति पुष्पायुधयामिकः निद्रा सुस्वापावस्थां "स्यान्निद्रा शयनं स्वापः स्वप्नः संवेश इत्यपि" इत्यमरः । क्षणमात्रमपि न एति प्राप्नोति इत्यवैमि । सा चन्द्रलेखा जाग्रन्मदनेति भावः । अत्रोत्प्रेक्षालङ्कारः ।

### भाषा

अमूल्य सौन्दर्य की निधि यह सुन्दरी चन्द्रलेखा, किस मनुष्य के हृदय को आकर्षित नहीं करती है अर्थात् सबके मन को आकर्षण करने वाली है । इसीलिये कामरूपी पहरेदार, यह दूसरे के फेर में न पडे इस विचार से उसका विश्वास न कर एक क्षण भी नहीं सोता है, ऐसा मैं समझता हूँ । अर्थात् उसके रोम २ में काम का प्रभाव छा गया था ।

सम्प्रति नायिकावर्णनमेव प्रस्तौति—

**इयं विलासद्रुमदोहदश्रीरियं सुधा यौवनदुग्धसिन्धोः ।**
**लावण्यमाणिक्यशलाकेयमियं मनः कार्मणचूर्णमुष्टिः ॥६९॥**

अन्वयः

इयं विलासद्रुमदोहदश्रीः, इयं यौवनदुग्धसिन्धोः सुधा, इयं लावण्य-माणिक्यरुचिच्छटा, इयं मनः कार्मणचूर्णमुष्टिः ( अस्ति )

व्याख्या

इयं नायिका विलासो विभ्रम एव द्रुमो वृक्ष "वृक्षो महीरुह शाखी विटपी पादपस्तरु । पलाशी द्रुद्रुमागमा" इत्यमर । तस्य दोहदश्री अभिवर्धकद्रव्य-विशेपलक्ष्मी, इय यौवन तारुण्यमेवदुग्धसिन्धु क्षीरसागरस्तस्य सुधा पीयूषस्व-रूपम् "पीयूषममृत सुधा" इत्यमर । इय लावण्य सौन्दर्यमेव माणिक्य रत्न तस्य रुचिच्छटा कान्तिशोभा, इय नायिका मनसा युवजनहृदयाना कार्मणस्य वशीकरणस्य "वशक्रिया संवनन मूलकर्म तु कार्मणम्" इत्यमर । चूर्णमुष्टिः चूर्णीभूतद्रव्यविशेषमुष्टिस्वरूपा, अस्तीति भाव । अत्रमालारूपकमलङ्कार ।

भाषा

यह चन्द्रलेखा विलास रूपी वृक्ष को समृद्ध बनाने वाले द्रव्यों की शोभा है। यह तारुण्य रूपी क्षीरसागर के अमृत के स्वरूप है। यह सौन्दर्य रूपी रत्न की कान्ति है। यह युवकों के हृदयों को वशीकरण करने की (अभिमन्त्रित) भस्म की मुट्ठी है।

सम्पूर्णचन्द्रोदयनित्यराका लीलारसानां परिपाकभूमिः ।
इयं मनोजन्मनराधिपस्य त्रैलोक्यसाम्राज्यफला तपःश्रीः ॥७०॥

अन्वयः

इयं सम्पूर्णचन्द्रोदयनित्यराका लीलारसानां परिपाकभूमिः मनोजन्मनराधिपस्य त्रैलोक्यसाम्राज्यफला तपःश्रीः ( अस्ति । )

व्याख्या

इय चन्द्रलेखा सम्पूर्णस्समग्रश्चन्द्रोदय इन्दूदयो यस्या सा सम्पूर्णचन्द्रोदया चासौ नित्या सर्वकालव्यापिनी राका पूर्णिमारात्रि "कलाहीने सानुमति पूर्णे राका निशाकरे" इत्यमर । लीलारसाना विलासानन्दाना परिपाकभूमि परिपुष्टिस्थान, मनसि जन्म जनन "जनुर्जननजन्मानि जनिरुत्पत्तिरुद्भव" इत्यमर । यस्य स मनोजन्मा काम एव नराधिपो राजा तस्य मनोजन्मन-राधिपस्य त्रैलोक्यस्य त्रिभुवनस्य साम्राज्यमाधिपत्यमेव फल प्रयोजनं

यस्यास्सा त्रैलोक्यसाम्राज्यफला तपःश्रीः तपस्तपस्यायाः श्रीर्लक्ष्मीः। तपोलक्ष्मीरत्वारोपो नायिकायाम्। अत्र नायिकाया मुखे चन्द्रप्रतियोगिकाभेदः नायिकायां च राकात्वारोप इति सावयवरूपकम्।

### भाषा

यह चन्द्रलेखा, सदैव पूर्णचन्द्र के उदय से युक्त पूर्णिमा की रात्रि है। विलास से भरे रसों का परिपुष्टि स्थान है। कामदेव रूपी राजा को, तीनों लोकों पर सार्वभौम राज्य देनेवाला तपस्या का फल है।

नीरन्ध्रविस्फूर्जदनङ्गगर्जिः पयोधरश्रीरियमेतदीया।
विलासवैदूर्यनवाङ्कुराणां प्रयाति नित्योद्गमकारणत्वम् ॥७१॥

### अन्वयः

इयं एतदीया नीरन्ध्रविस्फूर्जदनङ्गगर्जिः पयोधरश्रीः विलासवैदूर्यनवाङ्कुराणां नित्योद्गमकारणत्वं प्रयाति।

### व्याख्या

इयं सम्मुखस्था एतस्याः चन्द्रलेखाया इयमिति एतदीया नीरन्ध्रं निरन्तरं विस्फूर्जन्ती समुल्लसन्ती अनङ्गस्य कामस्य गर्जिर्गर्जनम् यस्या सा नीरन्ध्रविस्फूर्जदनङ्गगर्जिः पयोधराणां स्तनानां "पयोधरः कोषकारे नारिकेले स्तनेऽपि च। कशेरुमेघयोः पुंसि" इति मेदिनी। श्रीः शोभा अन्यत्र नीरन्ध्रं विस्फूर्जन्ती अनङ्गे व्योम्नि गर्जिगर्जनं यस्यां सा पयोधरश्रीर्मेघमाला कर्त्री, विलासा एव विभ्रमा एव वैदूर्यनवाङ्कुरास्तेषां विलासवैदूर्यनवाङ्कुराणां नित्योद्गमः सर्वदा निस्सरणं प्रादुर्भावस्तस्य कारणत्वं हेतुत्वं प्रयाति प्राप्नोति। मेघमालायां समुद्गतायां वैदूर्यनवाङ्कुराः प्रादुर्भवन्तीति प्रसिद्धम्। अत्र श्लेष-रूपकानुप्राणितं काव्यलिङ्गमलङ्कारः

### भाषा

यह इस चन्द्रलेखा की, निरन्तर उल्लास को प्राप्त कामदेव की गरज वाली स्तनों की शोभा पक्ष में निरन्तर उल्लास को प्राप्त होने वाली आकाश की गर्जना से युक्त मेघमाला, विलासरूपी वैडूर्य के नये २ अङ्कुरों के नित्य उत्पत्ति की कारणता को प्राप्त होती है। अर्थात् जिस प्रकार मेघमाला से वैडूर्य में नये २ अङ्कुर उत्पन्न हो जाते हैं उसी प्रकार उसकी स्तन की शोभा से विलास की सदैव अनेक छटाएँ उत्पन्न होती रहती थी।

**कान्त्या दरिद्रत्वमुपैति चन्द्रः किमस्ति तत्त्वं विकचोत्पलेषु ।**
**न वेद्मि विश्वास्य कथं मृगाक्ष्या सौन्दर्यसृष्टिर्मुषिता विधातुः ॥७२॥**

### अन्वयः

चन्द्रः कान्त्या दरिद्रत्वम् उपैति विकचोत्पलेषु किं तत्त्वम् अस्ति । मृगाक्ष्या कथं विश्वास्य विधातुः सौन्दर्यसृष्टिः मुषिता (इति) न वेद्मि ।

### व्याख्या

चन्द्र इन्दुः कान्त्या प्रभया दरिद्रत्वं हीनत्वं शोभाराहित्यम् उपैति प्रयाति नायिकाननक्षम् । विकचानि विकसितानि "व्याकोशविकचस्फुटाः । फुल्लश्चैते विकसिते" इत्यमरः । उत्पलानि कमलानि तेषु किं तत्त्वं सारः अस्ति विद्यते । मृगस्य अक्षिणोरिवाक्षिणी यस्यास्सा मृगाक्षी तया मृगाक्ष्या हरिणाक्ष्या कथं केन प्रकारेण विश्वास्य विश्वासमुत्पाद्य विधातुर्ब्रह्मणः सौन्दर्यस्य रमणीयतायास्सृष्टिस्सर्गः सौन्दर्यसृष्टिः कामनीयकं मुषिताऽपहृता इति न वेद्मि न जाने । अत्र प्रतीपालङ्कारः ।

### भाषा

चन्द्रमा इसकी कान्ति के सामने फीका पड जाता है। इसके मुकाबले में फूले हुए कमलों की शोभा की कथा गिनती है। इस मृगनयनी चन्द्रलेखा ने ब्रह्मा को कैसे विश्वास दिला कर उसकी सौन्दर्य की सृष्टि को चुरा लिया, यह मैं नहीं जानता।

**इयं मयि न्यस्यति नेत्रमालां मुहुः सखीनां किमपि ब्रुवाणा ।**
**सत्यैव साभूदनुरागवार्त्ता चिरात्प्रसन्नो भगवाननङ्गः ॥७३॥**

### अन्वयः

इयं सखीनां किमपि ब्रुवाणा (सती) मयि नेत्रमालां मुहुः न्यस्यति । सा अनुरागवार्त्ता सत्या एव अभूत् भगवान् अनङ्गः चिरात् प्रसन्नः ।

### व्याख्या

इयं चन्द्रलेखा सखीनां प्रियवयस्यानां स्वसङ्गिनीनां प्रतीत्यर्थं । किमपि रहस्यभूतं ब्रुवाणा निगदन्ती सती मयि मद्विषये नेत्रमालां कटाक्षच्छटां चक्षुर्विलासपरम्परां वा मुहुर्वारम्वारं न्यस्यति निक्षिपति इत्यनिर्वचनीयस्नेहस्य लक्षणम् । सा प्रसिद्धा दूतात् पूर्वं श्रुता अनुरागवार्त्ता प्रेमविषयिणी मनोज्ञचर्चा सत्या

एव निश्चिता एवाऽभूत् जाता। भगवानूज्योऽनङ्गः कामदेवः चिरात् बहुकालप्रतीक्षानन्तरं प्रसन्नः प्रीतः जात इत्यर्थः।

### भाषा

यह चन्द्रलेखा अपनी सखियों से कुछ रहस्य की बातें कहती हुई, मेरी ओर बार २ देखती है। दूत द्वारा कही हुई वह प्रेम की बात कि वह आपसे प्रेम करती है, सच हो गई। भगवान् कामदेव चिरकाल तक प्रतीक्षा करने पर अब प्रसन्न हुए हैं।

**जघान पादेन सखीं सखेलमाकृष्य हारं मुहुरामुमोच।**
**सा दर्शने कुन्तलपार्थिवस्य न कारिता किं मकरध्वजेन ॥७४॥**

### अन्वयः

सा सखीं पादेन सखेलं जघान, हारं मुहुः आकृष्य आमुमोच। कुन्तलपार्थिवस्य दर्शने मकरध्वजेन सा किं न कारिता।

### व्याख्या

सा चन्द्रलेखा सखीं स्वप्रियवयस्यां पादेन चरणेन सखेलं खेलया विलासक्रीडया "क्रीडा खेला च कूर्दनम्" इत्यमरः। सहितं सखेलं यथा स्यात्तथा जघान प्रहार कृतवती। हारं मुक्ताहारं पुष्पमालां वा मुहुर्वारम्वारमाकृष्य स्वकण्ठादवतार्य आमुमोच स्वकण्ठे समाबबन्ध। कुन्तलपार्थिवस्य कुन्तलदेशनृपस्य विक्रमाङ्कदेवस्य दर्शने विक्रमाङ्कदेवकर्मकदर्शने सति सा चन्द्रलेखा मकरध्वजेन कामेन किं न कारिता। कामप्रेरणया सा विविधं प्रेमसूचकं विलासकृत्यं प्रकटितवतीति भावः।

### भाषा

उस चन्द्रलेखा ने अपनी सखी को कलोल करते हुए पाँव से मार दिया। अपने गले के हार को बार २ निकाल कर फिर पहिन लेती थी अर्थात् यह सूचित करती थी कि यह हार या तो विक्रमाङ्कदेव के गले में रहेगा या मेरे ही। विक्रमाङ्कदेव को देखने पर कामदेव ने उससे क्या नहीं कराया अर्थात् उसने अनेक प्रेमसूचक हावभाव प्रकट किये।

**तदीयवक्त्रेन्दुविलोकनेन सान्द्रोल्लसद्रागपयोनिधीनाम्।**
**तत्रागतानां पृथिवीपतीनामासन्विचित्राणि विचेष्टितानि ॥७५॥**

अन्वयः

तदीयवक्त्रेन्दुविलोकनेन तत्र आगतानां सान्द्रोल्लसद्रागपयोनिधीनां पृथिवीपतीनां विचित्राणि विचेष्टितानि आसन्।

व्याख्या

तस्या अयमिति तदीयो वक्त्रेन्दुः मुखचन्द्रस्तस्य विलोकनेन दर्शनेन तदीयवक्त्रेन्दुविलोकनेन तत्र स्वयंम्वरस्थले आगतानां दिगन्तरेभ्यस्समुपागतानां सान्द्रं घनं यथा स्यात्तथा उल्लसन् वर्धमानो रागो रतिरेव पयोनिधिस्समुद्रो येषां ते तेषां सान्द्रोल्लसद्रागपयोनिधीनां पृथिवीपतीना राज्ञां विचित्राणि आश्चर्यचुम्बीनि नवानि नवानि विचेष्टितानि चेष्टाविशेषाः रत्यनुभावविशेषाः आसन् प्रादुरभूवन्।

भाषा

चन्द्रलेखा के मुखचन्द्र को देखकर वहाँ आए हुए, अत्यधिक बढ़े हुए प्रेम सागर से युक्त, राजा लोग, विचित्र २ चेष्टाएँ दिखाने लगे। अर्थात् उनमें रतिविषयक अनेक अनुभाव उत्पन्न हो कर वे विचित्र चेष्टाएँ करने लगे।

उत्कृष्यमाणं निजहारदाम समस्तभूपालविभूषणेभ्यः।
वक्षःस्थलेनोन्नमितेन दूरं कश्चिन्नरेन्द्रः प्रकटीचकार ॥७६॥

अन्वयः

कश्चित् नरेन्द्रः समस्तभूपालविभूषणेभ्यः उत्कृष्यमाणं निजहारदाम दूरम् उन्नमितेन वक्षःस्थलेन प्रकटीचकार।

व्याख्या

कश्चिन्नरेन्द्रः कोऽपि राजा स्वयम्वरस्थानस्थः समस्तास्सकला भूपाला राजानस्तेषां विभूषणेभ्यः अलङ्कारेभ्यः समस्तभूपालविभूषणेभ्यः अखिलनृपालङ्कारापेक्षया उत्कृष्यमाणं समधिकगुणं समुत्कृष्टशोभं निजं हारदाम स्वकीयमुक्ताहारं दूरम् अत्यन्तम् उन्नमितेन ऊर्ध्वदेशमुत्थापितेन वक्षस्थलेनोरःस्थलेन प्रकटीचकार *निवेदयामास। अत्र हारमिव त्वामपि हृदयेन धारयिष्यामी*त्यभिप्रायो व्यज्यते।

भाषा

किसी राजा ने, अन्य सब राजाओं के आभूषणों से उत्कृष्ट अपने हार को अपना सीना आगे बढ़ाकर दिखाया। अर्थात् तुमको भी इसी तरह हृदय में धारण करूँगा, ऐसा संकेत किया।

सावज्ञमुत्तार्य सुवर्णसूत्रं देहप्रभानिह्नुतशोभमेकः ।
मुक्ताकलापं हृदये ववन्ध पतिंवराप्राप्तिमनोरथं च ॥७७

अन्वयः

एकः देहप्रभानिह्नुतशोभं सुवर्णसूत्रं सावज्ञम् उत्तार्य पतिंवराप्राप्ति मनोरथं मुक्ताकलापं च हृदये बबन्ध ।

व्याख्या

एको नृप देहप्रभया स्वशरीरकान्त्या निह्नुता तिरस्कृता अभिभूता शोभा यस्य तत् देहप्रभानिह्नुतशोभ सुवर्णस्य काञ्चनस्य सूत्र तत् सुवर्णसूत्र काञ्चनमयहार सावज्ञम् अवज्ञया अवहेलनेन "रीढावमाननावज्ञावहेलनमसूर्क्षणम्" इत्यमरः । सहित सावज्ञ यथा स्यात्तथा उत्तार्य अवतार्य पतिंवरायाश्चन्द्रलेखायाः प्राप्तिर्लाभ एव मनोरथोऽभिलाषस्त तन्नायिकाप्राप्त्यभिलाष मुक्ताकलाप मौक्तिकहार च हृदये वक्षसि बबन्ध निवेशितवान् । अन्या. सुन्दरी परित्यज्य त्वामेव धारयामि चित्तेनेति राज्ञोऽभिप्राय । अत्र तुल्ययोगितालङ्कारः ।

भाषा

एक राजा ने, शरीर की कान्ति के आगे फीकी पडने वाली अपनी सोने की सिकडी को अवहेलना पूर्वक उतार कर मोती के हार को और कन्या की प्राप्ति के मनोरथ को अपने हृदय में धारण किया । अर्थात् अन्य सुन्दरियो को छोड कर तुम्ही को हृदय में रखता हूँ, यह सकेत किया ।

चूडामणेः कोऽपि परिश्लथस्य स्थाने निवेशाय कृताभिलाषः ।
लीलासरोजं मुकुटे बबन्ध पुराङ्गनाभिः परिहास्यमानः ॥७८॥

अन्वय.

कः अपि परिश्लथस्य चूडामणेः स्थाने निवेशाय कृताभिलाषः (सन्) पुराङ्गनाभिः परिहास्यमानः लीलासरोजं मुकुटे बबन्ध ।

व्याख्या

कोऽपि राजा परिश्लथस्य आश्चर्यवस्तुसदर्शनेन इतस्तत शिरश्चालनात् शिथिलीभूतस्य चूडामणे शिरोमणे "चूडामणि शिरोरत्न" इत्यमर । स्थाने पूर्वोपयुक्तप्रदेशे निवेशाय सप्रापणार्थं कृताभिलाषो जातकाम पुराङ्गनाभि पुरस्त्रीभि परिहास्यमान कृतपरिहास. लीलासरोज स्वकरस्य लीलाकमल मुकुटे

शिरोभूषणे यथास्थ विनिवेशितवान्। एवं त्वामपि शिरसा वोढुं तत्परोऽस्मीति नृपाभिप्रायः।

### भाषा

किसी राजा के, ढीले भए हुए अपने शिरोभूषण को फिर ठीक स्थान पर कस देने की इच्छा करने पर नागरिक स्त्रियों के हँसने से (लज्जित होकर घबड़ाहट में) उसने अपने हाथ के लीलाकमल को मुकुट में लगा लिया। अर्थात् मैं मस्तक पर तुमको धारण करने को तैयार हूँ, यह संकेत किया।

मञ्चान्तरे सन्ततमग्रपादं प्रसारयामास सगर्वमेकः।
ह्रस्वासिधेनुश्रमसूचनार्थमान्दोलयामास च पाणियुग्मम् ॥७९॥

### अन्वयः

एकः सन्ततं अग्रपादं सगर्वं मञ्चान्तरे प्रसारयामास। ह्रस्वासिधेनुश्रमसूचनार्थं पाणियुग्मम् आन्दोलयामास च।

### व्याख्या

एको नृपः सन्ततं प्रसृतं "सततानारताश्रान्तसन्ततविरतानिशम्" इत्यमरः। अग्रपादं चरणयोरग्रभागं सगर्वं दर्पसहितं साहङ्कारमित्यर्थः। अन्यो मञ्च आसनमिति मञ्चान्तरं तस्मिन्नासनान्तरे प्रसारयामास। ह्रस्वासिधेनुश्रमसूचनार्थं ह्रस्वासिधेनुः लघुछुरिका "छुरिका चासिधेनुका" इत्यमरः। तस्या तया वा जातो यः श्रमो ग्लानिस्तस्य सूचनार्थं विज्ञापनाय पाणियुग्मं हस्तयुगलम् आन्दोलयामास इतस्ततस्सञ्चालयामास। सर्वैः पूजितो वीरस्त्वाऽहमेव त्वया वरणीय इति राज्ञोऽभिप्रायः।

### भाषा

किसी राजा ने अपने लम्बे किये हुए अग्रपाद को अभिमान के साथ दूसरे के आसन पर रख दिया। उसने छोटी छूरी चलाने के श्रम को प्रगट करने के ध्येय से अपने दोनों हाथों को ऊँचा कर अंगड़ाई ली। अर्थात् सबसे बड़ा वीर मैं ही हूँ, मुझे ही चुन, ऐसा संकेत किया।

अनुद्गतस्वेदमपि क्षितीन्दुरुद्धूय कर्पूररजोभिरङ्गम्।
कर्णद्वये कुण्डलयोश्चकार वृथैव कश्चित्परिवर्तनानि ॥८०॥

अन्वयः

कश्चित् क्षितीन्दुः अनुद्गतस्वेदम् अपि अङ्गं कर्पूररजोभिः उद्धूल्य कर्णद्वये कुण्डलयोः परिवर्तनानि वृथा एव चकार।

व्याख्या

कश्चित् कोऽपि क्षितीन्दुः नृपः अनुद्गतस्वेदम् अनुद्गतोऽप्रकटीभूतः स्वेदो गात्रनिस्सृतघर्मः यस्मिंस्तत् अङ्गं शरीरावयवम् "घर्मो निदाघः स्वेदः स्यात्" इति। "अङ्गं प्रतीकोऽवयवोऽपघनोऽथ कलेवरम्" इत्यमरः। कर्पूरस्य हिमवालुकाया रजांसि धूलयस्तैः कर्पूररजोभिः उद्धूल्य लिप्तं कृत्वा कर्णयोः श्रोत्रयोर्द्वयं तस्मिन् कर्णद्वये कुण्डलयोः कर्णावतंसयोः परिवर्तनानि वैपरीत्येन धारणानि दक्षिणकर्णाद्वामकर्णे वामकर्णाद्दक्षिणकर्णे, वृथैव चकार मुधैव कृतवान्। अहमेव विलासवक्षस्त्वया वरणीय इति राजाभिप्रायः।

भाषा

किसी राजा ने पसीना न आए हुए अङ्ग पर भी कर्पूर की धूलि (पाउडर) छिड़क कर अपने दोनो कानो में कुण्डलों को व्यर्थ ही अदल बदल किया। अर्थात् मैं बड़ा शौक़ीन हूँ, यह संकेत किया।

जघान ताम्बूलकरङ्कवाहं करेण कूजद्वलयेन कश्चित्।
लिलेख ताम्बूलदलं नखैश्च प्रतारितः पुष्पशरासनेन ॥८१॥

अन्वयः

पुष्पशरासनेन प्रतारितः कश्चित् कूजद्वलयेन करेण ताम्बूलकरङ्कवाहं जघान। नखैः ताम्बूलदलं लिलेख च।

व्याख्या

पुष्पं कुसुममेव शरासनं शरा बाणा अस्यन्तेऽनेनेति शरासनं धनुः यस्य स तेन पुष्पशरासनेन कामेन प्रतारितः वञ्चितः विरूपावस्थां गमितः अस्वस्थः कश्चिद्राजा कूजच्छब्दायमानं वलयं कङ्कण "वलयः कण्ठरोगे ना कङ्कण पुंनपुंसकम्" इति मेदिनी। यस्य स तेन कूजद्वलयेन करेण हस्तेन ताम्बूलस्य करङ्को भाजनं पात्रं वहति धारयतीती ताम्बूलकरङ्कवाहस्तं ताम्बूलकरङ्कवाहं भृत्यं जघान ताडितवान्। नखैः कररुहैः "पुनर्भवः कररुहो नखोऽस्त्री नखरोऽस्त्रियाम्" इत्यमरः। ताम्बूलदलं ताम्बूलपत्रं लिलेख रेखाविन्यस्त कृतवान्। अहमेव रतिक्रीडाचतुरस्तव योग्योऽस्मीति नृपाभिप्रायः।

### भाषा

पुष्प के धनुषवाले कामदेव से वञ्चित अर्थात् कामोन्मत्त किसी राजा ने कंकण के शब्द से युक्त अपने हाथ से पान का डब्बा रखने वाले नौकर को पीट दिया और नखों से पान पर लकीरें करने लगा। अर्थात् मैं रतिक्रीडा चतुर हूँ, यह संकेत किया।

**गोष्ठीमिषेण स्वयमेवमेव प्रकाशयन्वाचि पटुत्वमन्यः ।**
**आकृष्य ताम्बूलकरङ्कमध्यात् कर्पूरदानं विदधे बहुभ्यः ॥८२॥**

### अन्वयः

अन्यः स्वयमेव गोष्ठीमिषेण एवं वाचि पटुत्वं प्रकाशयन् ताम्बूलकरङ्कमध्यात् आकृष्य बहुभ्यः कर्पूरदानं विदधे।

### व्याख्या

अन्य. कश्चित् स्वयमेव साक्षात् गोष्ठीमिषेण कवीनां परिषदो "समज्या परिषद् गोष्ठी सभासमितिसंसदः" इत्यमर.। विरचनव्याजेन एव एवममुना प्रकारेण वाचि वचसि पटुत्वं चातुर्यं प्रकाशयन् प्रकटयन् ताम्बूलकरङ्कमध्यात् ताम्बूलभाजनस्य मध्यभागात् आकृष्य गृहीत्वा बहुभ्योऽनेकनृपेभ्यः कर्पूरदानं सिताभ्रवितरणं "अथ कर्पूरमस्त्रियाम्। घनसारश्चन्द्रसंज्ञः सिताभ्रो हिमवालुका" इत्यमरः। विदधे कृतवान्। अहं गोष्ठीचतुरस्त्वया वरणीय इत्यभिप्रायः।

### भाषा

किसी दूसरे राजा ने सहृदयों की सभा के मिष से स्वयं योंही अपनी वाक्पटुता प्रकट करते हुए पान की डिब्बी में से कपूर (पीपरमेंट) निकाल कर बहुत से राजाओं को दिया। अर्थात्—मैं गोष्ठी चतुर हूँ, यह संकेत किया।

**हेमासनं वस्त्रनिवेशनेन तुङ्गत्वमानीय वृथा ववल्ग ।**
**नवोनतारुण्यनिवेदनार्थमजातकूर्चेन मुखेन कश्चित् ॥८३॥**

### अन्वयः

कश्चित् अजातकूर्चेन मुखेन नवोनतारुण्यनिवेदनार्थं वस्त्रनिवेशनेन हेमासनं तुङ्गत्वम् आनीय वृथा ववल्ग।

### व्याख्या

कश्चित् राजा न जातः न उत्पन्नः कूर्चो कपोलहनुस्थितकेशाः श्मश्रु "कूर्च-मस्त्री भ्रुवोर्मध्ये कत्थनश्मश्रुकैतवे" इति मेदिनी । यस्मिंस्तत् अजातकूर्चं तेन मुखेन नवीनस्य प्रत्यग्रस्य "प्रत्यग्रोऽभिनवो नव्यो नवीनो नूतनो नवः" इत्यमरः । तारुण्यस्य यौवनस्य निवेदनार्थं विज्ञापनाय वस्त्रस्य वस्त्राणां वा निवेशनेन सुवर्णमयसिंहासनोपरि परिस्तरणेन हेमासनं स्वकं तुङ्गत्वमुच्चत्वमानीय प्रापय्य वृथा मुधैव वयसा अहंभावं प्रदर्शितवान्, आत्मानं श्लाघते स्मेति भावः । अहं पूर्णतारुण्यवान् वरणीय इत्यभिप्रायः ।

### भाषा

कोई दूसरा राजा विना दाढी मोछ वाले मुख से अपनी नई जवानी दिखाने के लिये सुवर्ण के आसन पर कपडे बिछा कर उसे ऊँचा कर अर्थात् अपने को ऊँचा कर व्यर्थ ही अपनी डींग हाँकने लगा । अर्थात् मैं पूर्ण जवान हूँ, यह संकेत किया ।

निक्षिप्य ताम्बूलकरङ्कवाह-पृष्ठे शरीरं सविलासमेकः ।
उदञ्चितभ्रूलतिकापताकमकारणादेव मुखं चकार ॥८४॥

### अन्वयः

एकः ताम्बूलकरङ्कवाहपृष्ठे शरीरं सविलासं निक्षिप्य अकारणात् एव मुखम् उदञ्चितभ्रूलतिकापताकं चकार ।

### व्याख्या

एकः कश्चिन्नृपः ताम्बूलस्य करङ्को भाजनं तं वहतीति ताम्बूलकरङ्कवाहस्तस्य पृष्ठं पृष्ठभागः तस्मिन् ताम्बूलकरङ्कवाहपृष्ठे शरीरं स्वगात्रं सविलासं विलासयुक्तं यथा स्यात्तथा निक्षिप्य विन्यस्य अकारणात् प्रयोजनं विनैव मुखमाननमुदञ्चिता ऊर्ध्वं प्रवर्तिता उन्नमिता भ्रूलता एव भ्रूलतिका एव पताका वैजयन्ती 'पताका वैजयन्ती स्यात्' इत्यमरः । यस्मिंस्तत् उदञ्चितभ्रूलतिकापताकं चकार रचयामास । त्वामेव प्रतीक्षमाणस्तिष्ठामीति नृपाभिप्रायः ।

### भाषा

किसी राजा ने पान का डब्बा धारण करने वाले अपने नौकर के पीठ पर सविलास अपने शरीर को डालकर विना कारण ही अपने मुख को ऊपर को

उठी भौंहें रूपी पताका से युक्त बना लिया। अर्थात् चिरकाल से तुम्हारी प्रतीक्षा में हूँ, यह सकेत किया।

जृम्भावशोत्तम्भितहस्तयुग्म-संघट्टलीलास्फुटदङ्गुलीकः।
कश्चिन्निपत्योपरि विष्टरस्य दुर्वारकामग्रहमोहितोऽभूत् ॥८५॥

अन्वयः

जृम्भावशोत्तम्भितहस्तयुग्मसंघट्टलीलास्फुटदङ्गुलीकः कश्चित् विष्टरस्य उपरि निपत्य दुर्वारकामग्रहमोहितः अभूत्।

व्याख्या

जृम्भावशेन जृम्भणवशेन उत्तम्भितमुत्थापितं यत् हस्तयुग्मं करयुगलं "जृम्भस्तु त्रिषु जृम्भणम्" इत्यमरः। युग्मं तु युगलं युगम्" इत्यमरः। तस्य संघट्टः सम्मेलनं तस्य लीलया विलासेन स्फुटन्त्यः स्फोटनं कुर्वत्योऽङ्गुल्यो यस्य सः कश्चिद्राजा विष्टरस्याऽऽसनस्योपरि "विष्टरो विटपी दर्भमुष्टिः पीठाद्यमासनम्" इत्यमरः। निपत्य पतित्वा दुर्वारेणासाध्येन कामग्रहेण मदनरूपपिशाचादि-ग्रहविशेषावेशेन मोहितः मूर्च्छितः अभूत् जातः। त्वया विना क्षणमपि रतिं न लभे इति नृपाभिप्रायः।

भाषा

जम्हाई लेने के कारण अगडाई लेते हुए दोनो हाथो को ऊपर कर विलास मे मिलान से बोलने वाली अगुलियो वाला कोई राजा अपने सिंहासन पर गिरकर असह्य काम ग्रह से बेहोश सा हो गया। अर्थात् तुम्हारे बिना मुझे चैन नहीं है, यह सकेत किया।

कण्ठस्फुरत्पञ्चमकाकलीकः कश्चिद्व्यलीकस्मितमाततान।
संग्रथ्य कश्चित्कतिचित्पदानि गाथाकवित्वं कथयाम्बभूव ॥८६॥

अन्वयः

कण्ठस्फुरत्पञ्चमकाकलीकः कश्चित् व्यलीकस्मितम् आततान। कश्चित् कतिचित् पदानि संग्रथ्य गाथाकवित्वं कथयाम्बभूव।

व्याख्या

कण्ठे स्फुरन्ती प्रकटीभवन्ती पञ्चमकाकली पञ्चमरागस्य मधुरध्वनिः "काकली तु कले सूक्ष्मे ध्वनौ तु मधुरास्फुटे" इत्यमरः। यस्य सः कण्ठस्फुरत्पञ्चम-

काकलीकः सन कश्चिद्राजा कश्चिन्नृपः व्यलीकस्मितं मिथ्येषद्धास्यम् आततान, विस्तारयामास। कश्चित्कोऽप्यपरो राजा कतिचित् कानिचित् पदानि वाक्यानि संग्रथ्य विरचय्य गाथाकवित्वं प्राकृतभाषाकवित्वं कथयाम्बभूव प्रकटयामास। अत्र क्रमेण सङ्गीततः, साहित्यतश्चाऽहमिति द्वयोराशयः।

**भाषा**

किसी राजा ने पञ्चमस्वर की मधुर ध्वनि को गले में भुन भुनाते हुए व्यर्थ ही मुस्कुरा दिया। किसी दूसरे राजा ने कुछ वाक्यों की रचना कर प्राकृतभाषा की कविता पढ़ना प्रारम्भ किया। अर्थात्–किसी ने गायक तथा किसी ने कवितापटु होने का संकेत किया।

वैतालिकानां तुमुलं निवार्य ततः कुमार्याः सुकुमारकण्ठी।
उदाजहार प्रतिहाररक्षी क्रमेण चक्रं पृथिवीपतीनाम् ॥८७॥

**अन्वयः**

ततः सुकुमारकण्ठी प्रतिहाररक्षी वैतालिकानां तुमुलं निवार्य कुमार्याः पृथिवीपतीनां चक्रं क्रमेण उदाजहार।

**व्याख्या**

ततः राजसमाजे सुसज्जिते सति सुकुमारः कण्ठो यस्यास्सा सुकुमारकण्ठी प्रतिहारस्य द्वारभागस्य "स्त्रीद्वाद्वारि प्रतीहारः" इत्यमरः। रक्षी गोप्त्री प्रतिहाररक्षी वैतालिकानां बन्दिनां "वैतालिका बोधकराः" इत्यमरः। तुमुलं कोलाहलं निवार्य निरस्य कुमार्याः चन्दलदेव्याः पृथिवीपतीनां नृपतीनां चक्रं मण्डलं क्रमेण कन्दाः एकैकं गृहीत्वा उदाजहार निरूपयामास।

**भाषा**

सब तैयारी हो जाने पर, कोमल कण्ठध्वनि वाली, रानियों के महल के फाटक पर पहरा देने वाली दासी ने भाटों के भयंकर कोलाहल को शान्त कर कुमारी चन्दलदेवी को राजाओं का अर्थात् प्रत्येक राजा का परिचय कराया।

चतुर्भिः श्लोकैरयोध्याराजकुमारं वर्णयति—

अर्थेषु यो मूर्धसु खण्डितेषु खड्गं कठोरांहतिकुण्ठधारम्।
श्रीकण्ठकेयूरभुजङ्गराज-फणामणौ घर्षितुमाचकाङ्क्ष ॥८८॥

अन्वयः

यः अर्धेषु मूर्धसु खण्डितेषु कठोराहतिकुण्ठधारं खड्गं श्रीकण्ठकेयूरभूजङ्गराजफणामणौ घर्षितुम् आचकाङ्क्ष ।

व्याख्या

यो रावणः शङ्करप्रसादसिद्धयर्थमर्धेषु अर्धसंख्यकेषु मूर्धसु शिरस्सु खण्डितेषु छिन्नेषु कठोरया तीक्ष्णया आहत्या प्रहारेण कुण्ठा धारा अनिशिता धारा यस्य स तं कठोराहतिकुण्ठधारं खड्गम् असिम् (चन्द्रहासं) श्रीकण्ठस्य शिवस्य केयूररूपोऽङ्गदस्वरूपो "उग्रः कपर्दी श्रीकण्ठः शितिकण्ठः कपालभृत्" इत्यमरः । केयूरमङ्गदं तुल्ये" इत्यमरः । यो भुजङ्गराजस्सर्पराजस्तस्य "सर्पः पृदाकुर्भुजगो भुजङ्गोऽजिह्मगो भुजङ्गमः" इत्यमरः । फणामणौ फणास्थितमणौ घर्षितु तीक्ष्णधारात्वसम्पादनार्थं घर्षणं कर्तुम् आचकाङ्क्ष इयेष ।

भाषा

जिस रावण ने (शंकर को प्रसन्न करने के लिये) अपने दस मस्तकों में से पाँच मस्तकों को काट देने पर जोर से मारने से कुण्ठित धारवाली अपनी चन्द्रहास नामक तलवार को रगड़कर फिर तेज करने के लिये महादेव के बिजायट आभूषण स्वरूप सर्पराज के फन के मणि पर रगड़ने की इच्छा की ।

कृत्वा हठाद्वामकरे हराद्रिं कण्डूलदोर्मण्डलदुर्मदो यः ।
हिमालयोन्मूलनकौतुकेन भेजे भुजं दक्षिणमुत्तरङ्गम् ॥८९॥

अन्वयः

कण्डूलदोर्मण्डलदुर्मदः यः हठात् वामकरे हराद्रिं कृत्वा हिमालयोन्मूलनकौतुकेन दक्षिणं भुजम् उत्तरङ्गं भेजे ।

व्याख्या

कण्डूलं कण्डूसमन्वितं "कण्डूः खर्जूश्च कण्डूया" इत्यमरः । दोर्मण्डलं भुजमण्डलं तेन दुर्मदः प्रचण्डः कण्डूलदोर्मण्डलदुर्मदो यो रावणो हठात् प्रसभं "प्रसभं तु बलात्कारो हठोऽथ" इत्यमरः । वामकरे दक्षिणेतरहस्ते हराद्रिं कैलासं यस्मिन्गिरौ शिवो निवसति, कृत्वा निधाय हिमालयस्य तुहिनाचलस्योन्मूलनं समुत्खननं तस्य कौतुकेन कौतूहलेनोत्कण्ठया दक्षिणं वामेतरमपसव्यं भुजम् उत्तरङ्गं समुत्सुकं भेजे कृतवान् ।

### भाषा

खजबद से युक्त भुजमण्डल से प्रचण्ड रावण ने बाएँ हाथ से बलपूर्वक कैलास पर्वत को उठाकर हिमालय पर्वत को उखाड़ लेने के कौतूहल से अपनी दक्षिण भुजा को उत्सुक किया अर्थात् चलाया।

लङ्कापतेस्तस्य मुखाम्बुजानि भोगास्पदं यस्य शिलीमुखानाम् ।
रामस्य तस्यैव कुले कुमारः कुमारि नेत्रप्रणयी तवास्तु ॥९०॥

### अन्वयः

हे कुमारि तस्य लङ्कापतेः मुखाम्बुजानि यस्य शिलीमुखानां भोगास्पदं तस्य रामस्य कुले एषः कुमारः तव नेत्रप्रणयी अस्तु ।

### व्याख्या

हे कुमारि हे कन्ये तस्य लङ्कापते रावणस्य मुखाम्बुजानि वदनकमलानि यस्य रामस्य शिलीमुखानां शिली शल्यं मुखेऽग्रभागे येषां ते तेषां बाणानां "अलिबाणौ शिलीमुखौ" इत्यमरः । भोगस्य लक्ष्यप्राप्ते आस्पदं स्थानं तस्य रामस्य दाशरथेः कुले वंशे एष कुमारः तव भवत्या नेत्रयोः प्रणयी स्नेहस्थानम् अस्तु भवतु । अत्र परम्परितरूपकमलङ्कारः ।

### भाषा

हे कुमारी चन्दलदेवी, उस लङ्कापति रावण के मुखकमल जिस रामचन्द्र के बाणों के लक्ष्य बने थे उस रामचन्द्र के वंश में उत्पन्न यह राजकुमार तुम्हारे नेत्रों को आनन्द दे।

अनेन सार्धं सरयूवनान्ते कूजन्मयूरीमुखरे विहृत्य ।
विलासवातायनसेवनेन श्लाघ्यामयोध्यां नगरीं विधेहि ॥९१॥

### अन्वयः

अनेन सार्धं कूजन्मयूरीमुखरे सरयूवनान्ते विहृत्य विलासवातायनसेवनेन अयोध्यां नगरीं श्लाघ्यां विधेहि ।

### व्याख्या

अनेन रामवंशजेनाऽयोध्यापुरीनृपेण सार्धं सह "सार्कं सत्रा समं सह" इत्यमरः । कूजन्तः शब्दायमानाः मयूरस्ताभिर्मुखरे वाचाले कूजन्मयूरीमुखरे सरयूवनस्य

सरयूनदीतटस्थितारण्यस्यान्ते समीपे मध्ये वा विहृत्य विहारं पादाभ्या शनै. शनैः सचलनद्वारा विधाय विलासवातायनस्य विचित्रानन्दकरगवाक्षस्य "वातायन गवाक्षोऽथ" इत्यमर. । सेवनेन तद्द्वारागतवायुसंसेवनेन तद्द्वारा बाह्यदृश्यनिरीक्षणेन वा अयोध्यामेतन्नाम्नीं नगरीं पुरीं श्लाध्या प्रशस्यमानगुणगौरवां विधेहि कुरु ।

### भाषा

इस रामवंश के अयोध्यानगरी के राजा के साथ, बोलने वाली मयूरी से शब्दायमान सरजू नदी के किनारे के वनों में विहार कर, सुन्दर खिड़कियों में से आनेवाली हवा का उपभोग कर या सुन्दर खिड़कियों में से कौतुकमय दृश्यों को देखने का सुख प्राप्त कर अयोध्या नगरी को कृतार्थ कर ।

तयोपदेशः स कृतः कुमार्यां वृथागमन्नीच इवोपकारः ।
प्रेमाणि जन्मान्तरसंचितानि प्रादुर्भवन्ति क्वचिदेवमेव ॥९२॥

### अन्वयः

तया कुमार्यां कृतः स उपदेशः नीचे कृतः उपकारः इव वृथा अगमत् । जन्मान्तरसंचितानि प्रेमाणि क्वचित् एवमेव प्रादुर्भवन्ति ।

### व्याख्या

तया वर्णनकर्त्र्या कुमार्यां चन्द्रलेखाया कन्यायां कृतः सम्पादितस्स उपदेशः, अयोध्यानृपे प्रलोभनप्रदर्शनस्वरूपो, नीचे क्षुद्रस्वभावे जने कृत उपकारः सुखोत्पादकदुःखनिवारककृत्यमिव वृथा निष्फलं अगमत् बभूव । (यत.) जन्मान्तरसंचितानि पूर्वजन्मन्यर्जितानि प्रेमाणि स्नेहा अनिर्वचनीयदार्ढ्यरूपेण क्वचित् कास्मिंश्चित्स्थाने एवमेव स्वाभाविकरूपेण प्रादुर्भवन्ति उत्पद्यन्ते । अत्र 'समुचितार्थत्व' नाम-उपमादोषो भासते । सुधिभिर्विचारणीयम् ।

### भाषा

उस प्रतिहारी द्वारा राजकुमारी को किया हुआ वह उपदेश नीच पुरुष पर किये हुए उपकार के समान निष्फल हो गया । जन्मान्तरों से किसी के लिए सञ्चित प्रेम योंही (अपने आप) प्रकट हो जाता है ।

प्रदर्शयामास ततः कुमार्याः क्षितीशमन्यं प्रतिहाररक्षी ।
चूतानुबन्धे मधुपाङ्गनाया मुग्धा मधुश्रीरिव कर्णिकारम् ॥९३॥

अन्वयः

ततः प्रतिहाररक्षी कुमार्याः अन्यं क्षितीशं मुग्धा मधुश्रीः मधुपाङ्गनायाः चूतानुबन्धे कर्णिकारम् इव प्रदर्शयामास ।

व्याख्या

ततः तदनन्तरं प्रतिहारस्य द्वारस्य "स्त्रीद्वार्द्वारं प्रतीहारः" इत्यमरः । रक्षी रक्षाकर्त्री दासी कुमार्याः कन्यायाः तामप्रति इत्यर्थः । अन्यं क्षितीशं नृपं, मुग्धा कमनीया प्रादुर्भवन्ती मधुश्रीर्वसन्तशोभा मधुपाङ्गनायाः भ्रमर्याः चूतस्याम्रपुष्पस्यानुबन्धे "आम्रश्चूतो रसालोऽसौ" इत्यमरः । विकासे सति अथवा आम्रपुष्पविषयकाग्रहे सति कर्णिकारं कर्णिकारपुष्पमिव प्रदर्शयामास निदर्शयाम्बभूव । "कर्णिकारः पुमानारग्वधद्रौ च द्रुमोत्पले" इति मेदिनी । अत्रोपमालङ्कारः ।

भाषा

इसके बाद प्रतिहारी ने राजकुमारी चन्द्रलेखा को, मुग्धावस्था को प्राप्त वसन्त की शोभा द्वारा भ्रमरी के आम की मञ्जरी पर जाने का मन रहने पर कनैल को दिखाने के समान, किसी दूसरे राजा को दिखाया ।

श्लोकद्वयेन चेदिराजं वर्णयति—

यस्याहवे साहसलाञ्छनस्य मौर्वीरवः प्राप्य बिलोदराणि ।
क्षणेन पातालतलस्थितानां शौण्डीर्यवार्तां कथयाम्बभूव ॥९४॥

अन्वयः

साहसलाञ्छनस्य यस्य आहवे मौर्वीरवः बिलोदराणि प्राप्य पातालस्थितानां शौण्डीर्यवार्तां क्षणेन कथयाम्बभूव ।

व्याख्या

साहसलाञ्छनस्य साहसं पराक्रम एव लाञ्छनं असाधारणगुणरूपलक्षणं यस्य स तस्य यस्य चेदिराजस्य आहवे युद्धे "अभ्यामर्द समाघात सङ्ग्रामाभ्यागमाहवाः" इत्यमरः । मौर्वीरवः मौर्व्याः ज्यायाः "मौर्वी ज्या शिञ्जिनी गुणः" इत्यमरः । रवः शब्दः बिलोदराणि बिलानां कुहराणाम् उदराणि मध्यस्थानानि प्राप्य गत्वा "अथ कुहरं सुषिरं विवरं बिलम् । छिद्रं निर्व्यथनं रोकं रन्ध्रं श्वभ्रं वपा सुषिः" इत्यमरः । पातालतलस्थितानां रसातलोषितानां प्राणिनां कृते अथवा तेषां

कान्यकुब्जनृपं वर्णयति—

**कन्ये समालोकय कान्यकुब्जमकुब्जकीर्तिं नरनाथमेनम् ।**
**ककुब्जये यस्य धरापरागैर्भवन्ति वारां निधयः स्थलानि ॥९८॥**

अन्वयः

हे कन्ये ! कान्यकुब्जम् अकुब्जकीर्तिम् एनं नरनाथं समालोकय यस्य ककुब्जये धरापरागैः वारां निधयः स्थलानि भवन्ति ।

व्याख्या

हे कन्ये ! हे राजकुमारि ! कान्यकुब्जं कान्यकुब्जदेशाधिपम् अकुब्जकीर्तिम् अखर्वयशसम् एनं नराणां नाथं राजानं समालोकय पश्य, यस्य ककुभां दिक्स्थितानां "दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः" इत्यमरः । जये पराजयसमये धरापरागैः भूमिरजोभिः वारां जलानां निधयः समुद्राः स्थलानि जलरहितस्थानानि भवन्ति जायन्ते । अत्रातिशयोक्त्यलङ्कारः ।

भाषा

हे राजकुमारी ! अखण्ड कीर्तिवाले इस कनौज के राजा को देखो, जिसके विभिन्न दिशाओं के राजाओं पर विजय प्राप्त करने में पृथ्वी से उड़ी धूल से समुद्र, स्थल रूप में परिणत हो जाते हैं ।

**तस्मात्समाकृष्य नतानना सा दृष्टिं क्षिपन्ती कुचकुम्भपीठे ।**
**तस्याभ्यधत्त क्षितिवल्लभस्य स्थूलत्वमङ्गेष्विव भूषणस्य ॥९९॥**

अन्वयः

नतानना सा तस्मात् दृष्टिं समाकृष्य कुचकुम्भपीठे क्षिपन्ती अङ्गेषु भूषणस्य स्थूलत्वं इव तस्य क्षितिवल्लभस्य स्थूलत्वम् अभ्यधत्त ।

व्याख्या

नतम् आननं यस्यास्सा नतानना विनम्रमुखी सा चन्दलदेवी तस्मात्तात दृष्टिं विलोचनं समाकृष्य दूरे कृत्वा कुचावेव कुम्भौ घटौ तयोः पीठे स्थाने क्षिपन्ती विन्यस्यन्ती अङ्गेषु अवयवेषु "अङ्गं प्रतीकोऽवयवोऽपघनोऽथ कलेवरम्" इत्यमरः । भूषणस्यालङ्कारस्य स्थूलत्वमिव, भारयुक्तत्वमिव, स्थूलत्वेन ग्राम्यत्वात् शोभारहितत्वमिव, क्षितेः पृथिव्याः वल्लभस्य प्रियस्य राज्ञः स्थूलत्वं स्थूलकायत्वादप्रियत्वमभ्यधत्त कथितवती प्रकटितवतीत्यर्थः ।

### भाषा

: नीचे सिर की हुई उस चन्द्रलेखा ने उस राजा पर से दृष्टि हटा कर अपने स्तनों पर डालते हुए मानो अङ्गों पर के आभूषणों के मोटे और भारी होने से निन्दनीय होने के समान उस राजा की स्थूलता भी निन्दनीय है ऐसा संकेत किया। अर्थात् वह राजा स्थूलकाय होने से उसे पसन्द नहीं पड़ा।

**प्रलोभयन्ती गतिभिः समस्तान् सा राजहंसान्कलनूपुराभिः।**
**किञ्चित्पुरश्चङ्क्रमणप्रवृत्ता भूयस्तया सस्मितमभ्यधायि ॥१००॥**

### अन्वयः

कलनूपुराभिः गतिभिः समस्तान् राजहंसान् प्रलोभयन्ती किञ्चित् पुरश्चङ्क्रमणप्रवृत्ता सा भूयः तया सस्मितम् अभ्यधायि।

### व्याख्या

कलो मनोज्ञो नूपुरः मञ्जीरो "पादाङ्गदं तुलाकोटिमञ्जीरो नूपुरोऽस्त्रियाम्" इत्यमरः। यासु ताभिः मधुरमञ्जीराभिः अथवा कलयुक्ताः शब्दायमाना नूपुरा मञ्जीरा यासु ताभिः शब्दायमानमञ्जीराभिः गतिभिः गमनैः "कर्मे-भवि क्तिन्"। समस्तानशेषान् न तु कतिपयानेव इत्यर्थः। राजानश्च ते हंसा राजहंसा इति कर्मधारयः, राजानो हंसा इव इत्युपमितसमासो वा, हंसानां राजानः इति राजहंसा वा इति विग्रहे "राजदन्तादिषु परम्" इति राजशब्दस्य पूर्वनिपातः। श्रेष्ठनृपान् हंसान् वा प्रलोभयन्ती आकर्षन्ती किञ्चित् ईषत् पुरोऽग्रतः चंक्रमणे गमने प्रवृत्ता विहितव्यापारा सा राजकुमारी भूयः पुनः तया प्रतिहार्या स्मितेन मन्दहास्येन सहितं यथा स्यात्तथा अभ्यधायि अभिहिता। अभिपूर्वात् धा धातोः कर्मणि लुङ्। महनीयमहिम्नोऽपि महीभुजः स्वमुखरनूपुरमधुरनिनदैरावर्जयन्ती सा राजकुमारी अग्रे प्रवृत्तगमनव्यापारा प्रतिहार्या मन्दस्मितपूर्वमभाषि इत्यर्थः। यथा मराली स्वकलगुञ्जचेष्टितैः राजहंसाननुमुग्धयन्ती पुरः गन्तुं प्रवृत्ता तथैवमपि हंसगमना महामान्यान् नृपान् वञ्चयन्ती पुरः प्रसर्पितुं प्रवृत्ता प्रतिहार्या न्यरोधीतिभावः। अत्र कुमार्यां हंसीरूपकं गम्यत इति एकदेशविवर्तिरूपकमलङ्कारः।

### भाषा

शब्दायमान या सुन्दर पैंजेबों से युक्त अपनी (रसीली) चाल से सब राजाओं के मनों को लुभाने वाली, कुछ आगे बढ़ने में प्रवृत्त उस राजकन्या को फिर से प्रतिहारी ने हँस कर कहा। अर्थात् जिस प्रकार हंसिनी अपनी

कर्णे इत्यर्थः । शौण्डीर्यस्य चेदिराजपराक्रमस्य वार्तां वृत्तान्तं क्षणेन क्षणमात्रेणैव कथयाम्बभूव निवेदयामास ।

भाषा

साहस के लक्षण से युक्त अर्थात् साहसी चेदी राजा का युद्ध में वा ज्या का शब्द, छिद्रों में से घुसकर पाताल में रहने वाले लोगों को इस चेदी राजा के पराक्रम की बात तुरन्त ही सुना देता था ।

सोऽयं रणे नर्तयिता कबन्धान् मदान्धभूपालसहस्रसेव्यः ।
विलोक्यतां सुन्दरि चेदिराजस्तवास्तु दृष्टिः स्मरवैजयन्ती ॥९५॥

अन्वयः

हे सुन्दरि ! सः अयं रणे कबन्धान् नर्तयिता मदान्धभूपालसहस्रसेव्यः चेदिराजः विलोक्यतां, तव दृष्टिः स्मरवैजयन्ती अस्तु ।

व्याख्या

हे सुन्दरि हे राजकुमारि ! सः पूर्वोक्तोऽयं राजा रणे युद्धे "अस्त्रियां समरानीकरणाः कलहविग्रहौ" इत्यमरः । कबन्धान् युद्धं कुर्वाणान् मूर्धरहितशरीरान् वीरान् नर्तयिता भ्रामयिता "कबन्धोऽस्त्री क्रियायुक्तमपमूर्धकलेवरम्" इत्यमरः । मदान्धभूपालानाम् उद्दण्डनृपाणां सहस्रैः सेव्यः समर्च्यः चेदिराजो डाहलदेशनृपः विलोक्यतां दृश्यताम् । तव दृष्टिः दृक् स्मरवैजयन्ती कामपताका अस्तु जायताम् । अत्र कबन्धनर्तनकारित्वेन शौर्यातिशयरूपं वस्तु व्यज्यते ।

भाषा

हे सुन्दरी राजकुमारी चन्द्रलेखा ! युद्ध में बिना सिर के शत्रुओं के धड़ों को नचाने वाला और हजारों घमण्डी राजाओं से आदरणीय, इस प्रसिद्ध डाहलदेश के चेदिराज को देखो । तुम्हारी दृष्टि कामदेव की पताका का काम करे । अर्थात् तुमको देख कर वह कामासक्त हो जाए ।

तयेत्थमुक्ता न परं कुमारी नालोकयामास विलासिनं तम् ।
ताम्बूलमुत्सृज्य मुखाम्बुजस्य निकारमार्गेण निराचकार ॥९६॥

अन्वयः

तया इत्थम् उक्ता कुमारी विलासिनं तं न आलोकयामास (इति) न । परं मुखाम्बुजस्य ताम्बूलम् उत्सृज्य निकारमार्गेण निराचकार ।

### व्याख्या

तया द्वाररक्षिण्या प्रतिहार्येत्थम् पूर्वोक्तप्रकारेण उक्ता कथिता कुमारी कन्या चन्द्रलेखा विलासिनं कामविलासरसिकं तं चेदिराजं न आलोकयामास न ददर्श इति न परं किन्तु मुखाम्बुजस्य वदनकमलस्य ताम्बूलं नागवल्लीपत्रं "ताम्बूलवल्लीताम्बूली नागवल्ल्यप्यथ द्विजा" इत्यमरः । उत्सृज्य परित्यज्य निकारमार्गेण पराभवस्वरूपेण "निकारः स्यात्परिभवे धान्यस्योत्क्षेपणेऽपि च" इति धरणिः । निराचकार निराकरणं कृतवती, अन्तःकरणाद्बहिः कृतवतीत्यर्थः । 'मम सर्वथाऽयं हेयः' इति कुमार्या अभिप्रायः ,

### भाषा

प्रतिहारी द्वारा इस प्रकार सम्बोधित उस राजकुमारी चन्द्रलेखा ने उस चेदिराज को आँख उठाकर देखा नहीं, ऐसा नहीं अर्थात् देखा । किन्तु अपने मुँह में के पान को थूक कर निरादर दिखाते हुए उसको अपने मन मे से हटा दिया । अर्थात् यह मेरेयोग्य नहीं है यह प्रकट किया ।

अथान्यमुद्दिश्य नरेन्द्रपुत्रमुत्त्रस्तसारङ्गविलोलदृष्टिः ।
सांमुख्यमानीयत मानिनी सा वाक्यैरुदारैः प्रतिहाररक्ष्या ॥९७॥

### अन्वयः

अथ प्रतिहाररक्ष्या अन्यं नरेन्द्रपुत्रम् उद्दिश्य उत्त्रस्तसारङ्गविलोलदृष्टिः सा मानिनी उदारैः वाक्यैः सांमुख्यम् आनीयत ।

### व्याख्या

अथानन्तरम् "मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ" इत्यमरः । प्रतिहाररक्ष्या द्वारपालिन्या अन्यमितरं नरेन्द्रपुत्रं राजसुतम् उद्दिश्य लक्ष्यं कृत्वा उत्त्रस्तो भयत्रस्तसारङ्गो मृगस्तस्य "चातके हरिणे पुंसि सारङ्गः शबले त्रिषु" इत्यमरः । विलोला चञ्चला दृष्टिरिव दृष्टिर्यस्याःसा उत्त्रस्तसारङ्गविलोलदृष्टिः सा मानिनी प्रकृष्टमानयुक्ता राजकुमारी चन्द्रलेखा, उदारैः श्लाघ्यैः सारगर्भितवचोभिः साम्मुख्यम् आनुकूल्यम् आनीयत प्रापिता ।

### भाषा

अनन्तर उस प्रतिहारी ने दूसरे राजा को उद्देश्य करके (कहे हुए सारगर्भित तथा उत्कृष्ट प्रशंसा के वचनों से) उस भयभीत हरिण के नेत्रों के समान चञ्चल नेत्रवाली तथा स्वाभिमानिनी राजकुमारी चन्द्रलेखा को अनुकूल किया ।

सुन्दर गति से हंसों को आकर्षित करती हुई आगे बढ़ती है वैसे ही यह हंसिनी के समान गति वाली हंस के समान सब राजाओं के मनों को आकर्षित करती हुई आगे बढ़ रही थी कि प्रतिहारी ने हँसकर उससे कहा।

अर्जुनकुलजं नृपं वर्णयति—

उत्कर्षरेखां दृढकीलितस्य यत्पत्रिणः पोत्रिणि शङ्कमानः।
शीघ्रं हरः सूकरदेहरन्ध्राल्लीलाकिरातः शरमुच्चखान ॥१०१॥

अन्वयः

पोत्रिणि दृढकीलितस्य यत्पत्रिणः उत्कर्षरेखां शङ्कमानः लीलाकिरातः हरः सूकरदेहरन्ध्रात् शीघ्रं शरम् उच्चखान।

व्याख्या

पोत्रिणि सूकरे "वराहः सूकरो घृष्टिः कोलः पोत्री किरः किटिः" इत्यमरः। दृढं गाढं यथा स्यात्तथा कीलितस्य निखातस्य यस्य अर्जुनस्य पत्रिणः बाणस्य "पत्रिणो शरपक्षिणौ" इत्यमरः। उत्कर्षरेखां प्राशस्त्यचिह्नं शङ्कमानः अनुमन्यमानः लीलया न तु कर्मपारतन्त्र्येण किरातः वनचरः "भेदाः किरातशबरपुलिन्दा म्लेच्छजातयः" इत्यमरः। किरातवेषो हरः त्रिजगल्लयाधिष्ठानः, सूकरस्य देहरन्ध्रात् शीघ्रं झटिति शरं बाणम् उच्चखान आचकर्ष। संहारस्थापनेरपि हरस्य धृतकिरातवेषतया धनञ्जयाहतकोलाङ्गनिहितेषूत्पाटनमर्जुनस्य वीर्यवत्तामुपपादयति। अत्र व्यासोपदेशात्तपश्चरितुं निष्ठितस्य गाण्डीवभृतः परीक्षार्थं कृतकिराततनुर्भगवान् पिनाकी कोलमेकमाखेटयन् समरलीलामचीकरत। तत्रार्जुनस्य युद्धकौशलेन परितुष्यन् पाशुपतमस्त्रमदादिति भारतीया कथाऽनुसन्धेया।

भाषा

सूअर के शरीर में दृढ़ता से घुसे हुए जिस अर्जुन के बाण को विशेषता के लक्षण को समझने वाले किरात वेशधारी शंकर ने सूअर के शरीर के छिद्र में से शीघ्रता से बाण को बाहर खींच लिया। (यह वर्णन महाभारत का है। अर्जुन पाशुपतास्त्र की प्राप्ति के लिये इन्द्रकील पर्वत पर तपस्या करने गये थे और किरात वेशधारी शंकर ने उनकी परीक्षा करने के लिये, सूअर की शिकार के मिष से अर्जुन से कपट युद्ध किया था।)

**अशङ्कितः शङ्करमल्लयुद्धे यः स्वेदवारां विनिवारणाय ।**
**भस्मोत्करं विस्मयघूर्णितस्य कक्षान्तरात्तस्य समाचकर्ष ॥१०२॥**

अन्वयः

यः शङ्करमल्लयुद्धे स्वेदवारां विनिवारणाय विस्मयघूर्णितस्य तस्य कक्षान्तरात् भस्मोत्करम् अशङ्कितः ( सन् ) समाचकर्ष ।

व्याख्या

योऽर्जुनः शङ्करेण हरेण सह मल्लयुद्धे द्वन्द्वसमरे स्वेदस्वरूपाणि वारीणि तेषां स्वेदवारां घर्माम्भसां विनिवारणायापनोदाय विस्मयेनाऽऽश्चर्येण घूर्णितो यः स तस्य विस्मयघूर्णितस्याऽऽश्चर्यान्वितस्य साश्चर्यभ्रष्टुस्तस्य शिवस्य कक्षान्तरात् भुजाध-स्तलमध्यात् "बाहुमूले उभे कक्षौ" इत्यमरः । भस्मनः भूतेः उत्करं समूहं "पुञ्जराशी तूत्करः कूटमस्त्रियाम्" इत्यमरः । अशङ्कितः भयरहितस्सन् समाचकर्ष बलात् गृहीतवान् ।

भाषा

जिस अर्जुन ने शङ्कर के साथ मल्लयुद्ध में (शरीर में आये हुए) पसीने को दूर करने के लिये अर्थात् सुखाने के लिये आश्चर्य चकित शङ्कर के कांख के नीचे (लटकी थैली में) से भस्म के समूह को निडर होकर निकाल लिया ।

**पार्थस्य तस्यैष कुले प्रसूतः प्रभूतशौर्यो नृपतिः प्रतापी ।**
**एनं समालोकय रन्तुकामा चर्मण्वतीतीरवनस्थलेषु ॥१०३॥**

अन्वय

तस्य पार्थस्य कुले एषः प्रभूतशौर्यः प्रतापी नृपतिः प्रसूतः, चर्मण्व-तीतीरवनस्थलेषु रन्तुकामा एनं समालोकय ।

व्याख्या

तस्योपरिनिर्दिष्टमाहात्म्यस्य पार्थस्य पृथायाः कुन्त्याः पुत्रः पार्थोऽर्जुनस्तस्य कुले वंशे एष अयं पुरोनिर्दिष्टः प्रभूतं बहुलं शौर्यं वीरत्वं पराक्रमो वा यस्य स प्रभूतशौर्यः प्रतापी प्रभावातिशयशाली नृपतिर्भूपतिः प्रसूतः प्रादुर्भूतः । चर्मण्व-त्यास्तन्नाम्नीकनद्यास्तीरे तटे वनस्थलान्यरण्यभूमयस्तेषु चर्मण्वतीतीरवनस्थलेषु रन्तुं क्रीडां कर्तुं कामो यस्यास्सा रन्तुकामा एनं पुरोवर्तिनम् अर्जुनकुलप्रभवं नृपं समालोकय अनुरागेण पश्य ।

भाषा

उस प्रसिद्ध अर्जुन के कुल में यह महाप्रतापी राजा उत्पन्न हुआ है। चम्बल नदी के तीर पर के जंगलों में यदि सैर करने की इच्छा हो तो इसे देख।

क्षेप्तुं तदीये शिरसीव पादं समुत्क्षिपन्तीं गमनार्थमग्रे ।
उद्दिश्य सा राजकुमारमन्यं कन्यां प्रगल्भा पुनराबभाषे ॥१०४॥

अन्वयः

प्रगल्भा सा तदीये शिरसि क्षेप्तुम् इव अग्रे गमनार्थं पादं समुत्क्षिपन्तीं कन्याम् अन्यं राजकुमारम् उद्दिश्य पुनः आबभाषे।

व्याख्या

प्रगल्भाऽतीव धृष्टा वाग्मिनी "वाचो युक्तिपटुर्वाग्मी" इत्यमरः। सा नृपगुणकथयित्री प्रतिहाररक्षी तस्य पूर्वोक्तराजकुमारस्येदमिति तदीयं तस्मिस्तदीये शिरसि मूर्धनि "उत्तमाङ्गं शिरः शीर्षं मूर्धा ना मस्तकोऽस्त्रियाम्" इत्यमरः। क्षेप्तुं पादविन्यासं विधातुम् इव अग्रे गमनार्थम् अन्यत्र राजकुमारस्थितिस्थाने प्रयाणाय पादं चरणं समुत्क्षिपन्तीम् उत्थाप्योत्थाप्य विन्यस्यन्तीं कन्यां चन्द्रलेखां प्रति अन्यं राजकुमारमुद्दिश्य इतरराजकुमारसम्बन्धे पुनः भूय आबभाषे उक्तवती।

भाषा

राजाओं के गुणों का वर्णन करने में वावदूक उस प्रतिहारी ने, आगे चलने के लिये, मानों पूर्ववर्णित राजा के मस्तक पर रखने के लिये, पादविन्यास करती हुई उस राजकुमारी को दूसरे राजकुमार को लक्ष्यकर फिर से कहना प्रारम्भ किया।

कालिञ्जरपर्वतनृपं वर्णयति—

शृङ्गाणि नूनं मिलितानि यस्य स्वर्गप्रतोलीकपिशीर्षकाणाम्।
अत्र स्थितानां कथमन्यथा द्यौः क्रीडागृहप्राङ्गणभङ्गिमेति ॥१०५॥

अन्वयः

यस्य शृङ्गाणि स्वर्गप्रतोलीकपिशीर्षकाणां ( शृङ्गैस्सह ) नूनं मिलितानि अथवा यस्य शृङ्गाणि स्वर्गप्रतोलीकपिशीर्षकाणां शृङ्गाणि च नूनं मिलितानि अन्यथा द्यौः अत्र स्थितानां क्रीडागृहप्राङ्गणभङ्गिं कथम् एति।

### व्याख्या

यस्य कालिञ्जरपर्वतस्य शृङ्गाणि शिखराणि "कूटोऽस्त्री शिखरं शृङ्गम्" इत्यमरः। स्वर्गस्य सुराणां लोकस्य प्रतोली रथ्या "रथ्या प्रतोली विशिखा" इत्यमरः। मार्ग इति यावत्। तस्याः कपिशीर्षकाणां समुन्नतभागानां शृङ्गैः शिरोभिः शिखरैस्सह अथवा उभयोः शृङ्गाणि परस्परं नूनं मिलितानि एकीभूतानि सङ्गतानीत्यर्थः। अन्यथा उभयोः शृङ्गयोः परस्परं समेलनाभावे द्यौः स्वर्गः अत्र भूलोके स्थितानां वर्तमानानां जनानां क्रीडागृहस्य विलाससदनस्य प्राङ्गणमजिरं "अङ्गणं चत्वराजिरे" इत्यमरः। तस्य भङ्गिं रचनां प्राङ्गणतावत्त्वं कथम् एति प्राप्नोति। अतोऽतीवोन्नतः कालिञ्जरनामा पर्वत इति तत्र स्वर्गस्य शोभा प्रकटीवभूवेति भावः।

### भाषा

कलिञ्जर पर्वत के शिखर और स्वर्ग के मार्ग के बुर्जों के शिखर अवश्य मिल गये हैं अर्थात् उचाई में बराबर हैं, अन्यथा स्वर्ग, इस पृथ्वी पर रहने वालों के क्रीडागृह के आगन की शोभा को कैसे प्राप्त होता। अर्थात् कलिञ्जर पर्वत के अत्यधिक ऊँचे होने से वहाँ स्वर्ग की पूर्ण शोभा विराजित थी।

**तस्यैप कालिञ्जरभूधरस्य श्रीनीलकण्ठस्य विलासधाम्नः।**
**भर्ता भुजावर्तितराजचक्रः कटाक्षचक्रप्रणयी तवास्तु ॥१०६॥**

### अन्वयः

श्रीनीलकण्ठस्य विलासधाम्नः तस्य कालिञ्जरभूधरस्य भर्ता भुजावर्तितराजचक्रः एषः तव कटाक्षचक्रप्रणयी अस्तु।

### व्याख्या

श्रीनीलकण्ठस्य श्रीशङ्करस्य विलासस्य क्रीडायाः धाम स्थानं तस्य विलासधाम्नः तस्य पूर्वनिर्दिष्टस्य कालिञ्जरनामकस्य भूधरस्य पर्वतविशेषस्य भर्ता स्वामी भुजाभ्यां बाहुभ्याम् आवर्तितं परिवेष्टितं सर्वतो वशीकृतं राजचक्रं राजमण्डलं येन स भुजावर्तितराजचक्रः एवम्भूत एषः पुरो दृश्यमानो राजकुमारः तव भवत्या राजकुमार्याः कटाक्षाणामपाङ्गदर्शनानां "कटाक्षोऽपाङ्गदर्शने" इत्यमरः। चक्रं मण्डलं तस्य प्रणयी स्नेहभाजनम् अस्तु जायताम्।

भाषा

श्री नीलकण्ठ महादेव की विलास भूमि (अर्थात् जहाँ श्री नीलकण्ठ महादेव का विशाल मन्दिर है) इस उपर्युक्त कालिञ्जर पर्वत का स्वामी, अपने भुजबल से राजमण्डल को अपने वश में कर लेने वाला, यह राजा, तुम्हारी तिरछी निगाहों का पात्र बने। अर्थात् इस राजा को प्रेम से देखो।

**चेतस्यविद्धे कुसुमायुधेन मुक्ताफले तन्तुरिव प्रवेशम् ।**
**यतो न लेभे स नृपस्ततोऽस्याः सान्यं विदग्धा प्रकटीचकार ॥१०७॥**

अन्वयः

यतः सः नृपः अस्याः कुसुमायुधेन अविद्धे चेतसि अविद्धे मुक्ताफले तन्तुः इव प्रवेशं न लेभे ततः विदग्धा सा अन्यं प्रकटीचकार।

व्याख्या

यत यस्मात्कारणात् स कालिञ्जरपर्वतस्वामी नृपो राजा अस्या चन्द्रलेखाया कुसुमायुधेन कामेन लक्षणया एतद्राजकुमारविषयककामबाणेन अविद्धे असक्ते चेतसि मानसे, अविद्धे छिद्ररहिते मुक्ताफले तन्तु सूत्रमिव प्रवेशं स्थानं न लेभे न प्राप। ततस्तस्मात्कारणात् विदग्धा लोकव्यवहारनिपुणा सा प्रतिहाररक्षी अन्य राजकुमार प्रकटीचकार, तस्याप्यस्य गुणोत्कर्षं वर्णयति स्म। अत्रोपमालङ्कार।

भाषा

कामदेवने कालिञ्जर पर्वत के स्वामीके सम्बन्ध में अपने बाण न मारने से चन्द्रलेखा के हृदय के घायल (छिद्रयुक्त) न होने से बिना छेद के मोती में डोरे के समान उस चन्द्रलेखा के मनमें कालिञ्जरपर्वत का स्वामी प्रवेश न कर सका। इसलिए लोक व्यवहार कुशल प्रतिहारी ने दूसरे राजकुमार का वर्णन प्रारम्भ किया।

गोपाचलक्ष्मापतिं वर्णयति—

**शौर्यप्रियेणाहवनिःस्पृहाणां येन प्रतिक्षोणिभृतां निवासाः ।**
**लीलाचपेटक्षतकुञ्जराणां पदे पदे केसरिणेव लब्धाः ॥१०८॥**

अन्वयः

शौर्यप्रियेण येन आहवनिःस्पृहाणां प्रतिक्षोणिभृतां निवासाः केसरिणा लीलाचपेटक्षतकुञ्जराणां निवासाः इव पदे पदे लब्धाः।

व्याख्या

शौर्यं पराक्रम एव प्रियमभीष्टं यस्य सः तेन शौर्यप्रियेण येन राजकुमारेण आहवेभ्यो युद्धेभ्यो निःस्पृहाणां विरतानामाहवनिःस्पृहाणां "संग्रामाभ्यागमाहवः" इत्यमरः। प्रतिक्षोणिभृतां प्रतिभटनृपाणां निवासा निवासस्थानानि नगराणीत्यर्थः। केसरिणा सिंहेन लीलाचपेटैः विलासैनैव चपेटैर्विस्तृताङ्गुलिः सन् "पाणौ चपेटप्रतलप्रहस्ता विस्तृताङ्गुलौ" इत्यमरः। विनैवाधिकप्रयासं हस्तैः करतलक्षेपैः क्षताः भग्नाः कुञ्जरा हस्तिनस्तेषां लीलाचपेटक्षतकुञ्जराणां निवासाः स्थितयः स्थानानि इव पदे पदे वारम्वारं लब्धाः प्राप्ताः। अत्र पूर्णोपमालङ्कारः।

भाषा

पराक्रमप्रिय जिस ग्वालियर के राजा ने युद्ध से थके हुये विपक्षी राजाओं के नगरों को, शेर द्वारा खेलवाड में थप्पड मार कर घायल किये हुये हाथियों के निवास स्थानों के समान, वार वार छीन लिया।

गोपाचलक्ष्मापतिरेकवीरः स एष पृथ्व्यामवदातकीर्तिः।
स्वयम्वरस्रग्विनिवेशदूती तवात्रनेत्रोत्पलमालिकास्तु ॥१०९॥

अन्वयः

सः अवदातकीर्तिः एषः गोपाचलक्ष्मापतिः पृथ्व्याम् एकवीरः (अस्ति)। अत्र तव नेत्रोत्पलमालिका स्वयम्वरस्रग्विनिवेशदूती अस्तु।

व्याख्या

स पूर्वोक्तगुणविशिष्टः अवदाता समुज्ज्वला "अवदातः सितो गौरोऽवलक्षो धवलोऽर्जुनः" इत्यमरः। कीर्तिर्यशो यस्य स अवदातकीर्तिरेषः पुरोवर्ती गोपानां धेनुपालकानामचलः पर्वतो "अद्रिगोत्रगिरिग्रावाऽचलशैलशिलोच्चयाः" इत्यमरः। गोवर्धनाख्यः अथवा ग्वालियरप्रदेशस्तस्य क्ष्मापतिः भूपतिः पृथ्व्यां भूमण्डले एकवीरः प्रधानशूरः अस्ति। अत्र अस्मिन्नृपकुमारे तव भवत्या नेत्रोत्पलानां नयननीलकमलानां मालिका परम्परा नेत्रोत्पलमालिका स्वयम्वरस्य

स्रक् तत्सम्बन्धिनी माला तस्य विनिवेशस्य परिधापनस्य दूती निर्देशिका अस्तु जायताम् । तं दृष्ट्वा मालां परिधापयेत्यर्थः । अत्र रूपकालङ्कारः ।

### भाषा

पूर्वोक्त शुभ्रकीर्ति वाला यह ग्वालियर का राजा पृथ्वी का प्रधान शूर है । इस राजकुमार पर पड़ी तुम्हारे नयन रूपी कमलों की माला, इसे स्वयंवर की माला पहनाने का उपदेश देने वाली दूती हो । अर्थात् तुम्हारी दृष्टि उस पर पड़ कर तुम्हारा उसे माला पहनाने का मन हो ।

सा प्रार्थितान्यार्थमनङ्गबाणैः कमप्यलब्ध्वा परिहारहेतुम् ।
पादेन वाचालितनूपुरेण जगाद मौखर्यमिवास्य दोषम् ॥११०॥

### अन्वयः

अनङ्गबाणैः अन्यार्थं प्रार्थिता सा कम् अपि परिहारहेतुम् अलब्ध्वा वाचालितनूपुरेण पादेन अस्य दोषम् इव मौखर्यं जगाद ।

### व्याख्या

अनङ्गस्य कामस्य बाणैः अन्यार्थं विक्रमाङ्कदेवार्थं प्रार्थिता अभिनिवेशिता सा चन्द्रलदेवी कमपि परिहारहेतुं त्यागकारणम् अलब्ध्वा अप्राप्य वाचालितानि शब्दायमानानि नूपुराणि मञ्जीराणि यस्मिन् स तेन वाचालितनूपुरेण पादेन अस्य दोषम् इव एतद्राजकुमारस्य दोषम् इव मौखर्यं मुखरस्य भावस्तत् वाचालत्वं जगाद प्रकटीचकार । वाचालोऽयं राजा नाङ्गीकार्य इति सूचितमिति भावः ।

### भाषा

कामदेव के बाणों से दूसरे के लिए (विक्रमाङ्कदेव के लिए) प्रार्थित (प्रोत्साहित) उस चन्द्रलेखाने ग्वालियर के राजकुमार में कोई भी अस्वीकार करने का कारण न देखकर, शब्दायमान पैजेब युक्त पाव से मानो वह वावदूक है, यह दोष प्रकट किया ।

मध्येन येषां वसुधापतीनां जगाम सा कामवशीकृतानाम् ।
स्वयम्वरस्रग्रजसेव पूर्णास्तेषां दृशः साश्रुजला बभूवुः ॥१११॥

### अन्वयः

सा कामवशीकृतानां येषां वसुधापतीनां मध्येन जगाम तेषां दृशः स्वयम्वरस्रग्रजसा पूर्णाः इव साश्रुजलाः बभूवुः ।

व्याख्या

सा चन्द्रलेखा कामेन मन्मथेन वशीकृतानाम् आत्मसात्कृतानां कामवशीकृतानां येषां वसुधापतीनां पृथिवीपतीनां मध्येन अन्तरा जगाम वव्राज तेषां नृपाणां दृशो लोचनानि स्वयम्वरस्य स्रक् माला तत्सम्बन्धिरजसा परागेण "रजः क्लीबं गुणान्तरे। आर्तवे च परागे च रेणुमात्रेऽपि दृश्यते" इति मेदिनी। पूर्णा इव व्याप्ता इव साश्रुजला बाष्पार्द्रजलसहिताः बभूवुः। सा नाऽस्माभिलभ्येति दुःखेन साश्रुजलानि नेत्राणि आसानीति भावः। हेतूत्प्रेक्षालङ्कारः।

भाषा

जिन कामाभिभूत राजाओं के बीच में से वह चन्द्रलेखा गुजरती थी उनकी आँखें मानो स्वयंवर की माला की पुष्पधूलि से भर कर अश्रुपूर्ण हो जाती थी। अर्थात् वे ऐसी सुन्दरी हमको न प्राप्त हो सकी इस दुःख से दुःखी होते थे।

मालवेन्द्रं वर्णयति—

**यद्वैरिभूपालविलासिनीनां कपोलपालीषु विपाण्डुरासु।**
**भवन्ति लम्बालकवल्लरीभिः सशेवलानीव दृशोः पयांसि॥११२॥**

अन्वयः

यद्वैरिभूपालविलासिनीनां विपाण्डुरासु कपोलपालीषु लम्बालकवल्लरीभिः सशेवलानि इव दृशोः पयांसि (भवन्ति।)

व्याख्या

यस्य राज्ञो मालवेन्द्रस्य वैरिभूपालाःशत्रुनृपाः तेषां विलासिनीनां स्त्रीणा विशेषेण पाण्डुरासु पतिवियोगजनितपाण्डुत्वयुक्तासु कपोलपालीषु गण्डस्थलीषु लम्बा दीर्घा अलकाः चूर्णकुन्तला "अलकाश्चूर्णकुन्तलाः" इत्यमरः। एव वल्लर्यो लतास्ताभिः लम्बालकवल्लरीभिः शेवलेन जलनील्या 'जलनीली तु शैवालम्' इत्यमरः। सहितानि युक्तानि इव दृशोर्नयनयोः पयांसि जलानि भवन्ति।

भाषा

जिस मालवा के राजा के विपक्षी राजाओं की स्त्रियों के सफेद पड़े हुए गालों पर लम्बे बाल रूपी लताओं के आ पड़ने से उनकी आखों के अश्रुजल मानो सेवार से युक्त जल हों (ऐसे दीख पड़ते थे।)

**यस्य प्रतापोऽग्निरपूर्व एव जागर्ति भूभृत्कटकस्थलीषु।**
**यत्र प्रविष्टे रिपुपार्थिवानां तृणानि रोहन्ति गृहाङ्गणेषु॥११३॥**

### अन्वयः

भूभृत्कटकस्थलीषु यस्य प्रतापः अपूर्वः अग्निः एव जागर्ति। यत्र प्रविष्टे (सति) रिपुपार्थिवानां गृहाङ्गणेषु तृणानि रोहन्ति।

### व्याख्या

भूभृता पर्वतानां राज्ञां वा "भूभृद्भूमिधरे नृपे" इत्यमरः। कटकं सैन्यं राजपक्षे, नितम्बः "कटकस्त्वद्रिनितम्बे याहुभूषणे। सेनायां राजधान्यां च" इति हैमः। अद्रिपक्षे, तस्य स्थल्यो भूमयस्तासु भूभृत्कटकस्थलीषु यस्य मालवेन्द्रस्य प्रतापः प्रभावः (स प्रताप. प्रभावश्च यत्तेजः कोपदण्डजम्।) अपूर्वोऽन्योऽभूतपूर्वोऽदृष्टपूर्वो वा अग्निः वह्निरेव जागर्ति जृम्भते। यत्र प्रतापे प्रविष्टे गते सति रिपुपार्थिवाना शत्रुनृपाणा गृहाङ्गणानि भवनाजिराणि "अङ्गणं चत्वराजिरे" इत्यमरः। तेषु तृणानि रोहन्ति उद्भवन्ति। अग्निस्तु तृणानि भस्मसात्करोति, अयं तूत्पादयतीत्यपूर्वत्वम्। शत्रुपार्थिवास्तद्भयात्पलाय्य स्वस्थानातिरिक्तस्थानं प्रस्थिता अतस्तेषां गृहाणि शून्यानि जातानि तेन च तत्र तृणानि रोहन्तीति भावः। अत्र पर्यायोक्तालङ्कारः, विषमालङ्कारश्च।

### भाषा

राजाओ की, सेनाओ में अथवा पर्वतों की युद्धभूमियों या नितम्बभागों में जिस मालवा के राजा का अलौकिक प्रतापरूपी अग्नि ही जलता रहता है। जिस प्रतापाग्नि के घुसने से शत्रुभूत राजाओ के घर के आगनों में घास जम जाती है। अग्नि से घास जलती है उगती नहीं। परन्तु इस प्रतापाग्नि से घास जमती है—यही इस अग्निका अलौकिकत्व है। अर्थात् शत्रु इसके डरसे घर छोड भाग जाते है जिससे उनके घरके आगनो में सफाई न होने से घास जम जाती है।

**स एष लीलावति मालवेन्द्रस्तवात्र मन्त्री कुसुमायुधोऽस्तु।**
**लीलावनैस्ते विदधातु तोषममुष्य धारा कुलराजधानी ॥११४॥**

### अन्वयः

हे लीलावति सः एषः मालवेन्द्रः (अस्ति)। अत्र कुसुमायुधः तव मन्त्री अस्तु। अमुष्य कुलराजधानी धारा लीलावनैः ते तोषं विदधातु।

### व्याख्या

लीला विलासास्सन्ति अस्यामिति लीलावती तत्सम्बोधने हे लीलावति विलासवति राजकुमारि स पूर्वोक्त एष पुरोऽवलोक्यमानो मालवेन्द्रो मालवदेशस्य राजा अस्ति। अत्र अस्मिन्विषये अस्य राज्ञः सम्बन्धे कुसुमायुधः कामः तव भवत्या मन्त्री परामर्शदाताऽस्तु। अमुष्य मालवेन्द्रस्याऽस्य धारानाम्नी राजधानी लीलावने विलासोद्याने तेषु परिभ्रमणादिविलासक्रीडां ते भवत्याः तोषमानन्दं विदधातु करोतु।

### भाषा

हे विलासभरी राजकुमारी यह मालवा का राजा यही है। इसके सबंध में तुम्हें परामर्श देनेवाला मन्त्री कामदेव हो। अर्थात् तू इससे काम से अभिभूत हो प्रेमकर। इस मालवाके राजा की राजधानी धारा नगरी तुम्हें अपने विलासवनो की सैर करने से आनन्द दे॥

निरादरां तत्र ततो वितर्क्य नासाग्रसंकोचितया दृशैव[1]।
गत्वा पुरः सा कतिचित्पदानि स्मृत्वा हसन्तीमवदत्कुमारीम्॥११५॥

### अन्वयः

ततः सा नासाग्रसंकोचितया दृशा एव तत्र निरादरां वितर्क्य पुरः कतिचित् पदानि गत्वा स्मृत्वा हसन्ती कुमारीम् अवदत्।

### व्याख्या

ततो मालवेन्द्रवर्णनानन्तरं सा राजवर्णनकर्त्री नासाया अग्रभागे सङ्कोचिता सङ्कोचद्वारा विकृता तया, दृशा नेत्रेणैव, राजकुमार्या नासिकाग्रभागसंकोचित-दृष्ट्या घृणाप्रदर्शनमिति भाव। तत्र मालवेन्द्रविषये निरादरां प्रेमशून्यां राजकुमारीं वितर्क्य विधाय पुरोऽग्रे कतिचित् पदानि गत्वा कियत पादन्यासान् विधाय स्मृत्वा मालवेन्द्रवर्णनं पर्यालोच्य हसन्ती तद्गुणस्मरणेन परिहासं कुर्वाणा कुमारीम् अवदत् उवाच।

### भाषा

इसके अनन्तर उस प्रतिहारी ने (उसके) नाक भौं सिकोड़ने से ही मालवा के राजा के प्रति उसका निरादर है, ऐसी कल्पना कर दो चार पाँव आग

[1] मूले दृशवेति पाठः। परन्तु दृशैवेति पाठः साधुतर प्रतिभाति।

जाकर मालवा के राजा के गुणों का स्मरण कर हँसती हुई उस राजकुमारी से कहा।

गुर्जरदेशनृपं वर्णयति—

**निशम्य तुरुखारखुरक्षतायाः क्षितेस्तनुत्वादिव यस्य कीर्तिम् ।**
**सम्भूय गायन्ति फणीन्द्रकन्याः संगीतशालासु भुजङ्गभर्तुः ॥११६॥**

अन्वयः

फणीन्द्रकन्याः तुरुखारखुरक्षतायाः क्षितेः तनुत्वात् इव यस्य कीर्तिं निशम्य भुजङ्गभर्तुः सङ्गीतशालासु सम्भूय गायन्ति ।

व्याख्या

फणीन्द्रस्य नागेन्द्रस्य कन्या नागलोककन्या तुरुखारजात्युद्भवतुरङ्गमाना, तुरुखार काबुलनाम्ना प्रसिद्धः। खुरं खुरपुटन्यासै क्षता भग्ना तस्या क्षिते पृथिव्या तनुत्वात् अल्पकायत्वात् भूमिमण्डलस्य तनुत्वात्तत्परिपूर्णं नागलोकगता इव अधिकव्यवधानाभावेनेत्यभिप्राय । यस्य गुर्जरेन्द्रो गुर्जरदेशनृपते कीर्ति यशो निशम्य श्रुत्वा भुजङ्गाना सर्पाणा "सर्पं पृदाकुर्भुजगो भुजङ्गोऽहिर्भुजङ्गम" इत्यमर । भर्तु नागराजस्य सङ्गीतशालासु संगीतालयेषु सम्भूय एकत्रीभूय गायन्ति गीतिं कुर्वन्ति । अत्र हेतूत्प्रेक्षालङ्कार ।

भाषा

काबुली घोडों की टापों से खुदी पृथ्वी के मानो छिल जाने के कारण पतली हो जाने से और पृथ्वी के खुद जाने से नागलोक का विशेष अन्तर न रहने से (नागलोक में प्रविष्ट) गुर्जर देश के राजा की कीर्ति को सुनकर नागकन्याएँ नागराज की संगीत शालाओं में, उसकी कीर्ति का एकत्र होकर गान करती है। अर्थात् गुजर देश के राजा की पलटन में काबुली घोडे थे जिनसे सम्पूर्ण पृथ्वी को जीत कर उसने कीर्ति प्राप्त की थी।

**सोऽयं गुणग्राहिणि गुर्जरेन्दुः स्वबाहुवीर्योर्जितराजलोकः ।**
**अत्रास्तु दृष्टिस्तव नीरजाक्षि प्रसन्नपुण्यायुधपुष्पवृष्टिः ॥११७॥**

अन्वयः

हे गुणग्राहिणि स्वबाहुवीर्याजितराजलोकः सः अयं गुर्जरेन्दुः (अस्ति)। हे नीरजाक्षि अत्र प्रसन्नपुष्पायुधपुष्पवृष्टिः तव दृष्टिः अस्तु।

व्याख्या

ग्रहीतुं शीलं स्वभावो यस्यास्सा ग्राहिणी गुणानां ग्राहिणी गुणग्राहिणी तत्सम्बोधने हे गुणग्राहिणि राजकुमारि स्वबाहो स्वभुजयोर्वीर्यं पराक्रमस्तेनाजिता वशीकृता राजलोका भूपतिसमूहा येन सः स्वबाहुवीर्याजितराजलोकः सोऽयं प्रसिद्धः गुर्जरेन्दुः गुर्जरदेशस्य इन्दुसदृश आल्हादको राजा अस्ति। हे नीरजाक्षि नीरजे कमले इवाक्षिणी नयने यस्यास्सा तत्सम्बोधने हे नीरजाक्षि अत्रास्मिन् गुर्जराधिपे प्रसन्न आराधितः पुष्पायुधः कामस्तस्य पुष्पवृष्टिस्वरूपा कुसुमवृष्टिरिव मनोहारिणी तव भवदीया दृष्टिः अवलोकनं कटाक्षविक्षेपो वाऽस्तु जायताम्।

भाषा

हे गुणग्राहिणी चन्द्रलेखा! अपनी भुजाओं की शक्ति से सम्पूर्ण राजाओं को अपने वश मे करनेवाला यह, प्रसिद्ध गुजरात का राजा है। हे कमलनयनी! इस गुजरात के राजा पर प्रसन्नचित्त कामदेव की पुष्पवृष्टि रूपी तुम्हारी नजर पड़े। अर्थात् तुम्हारी दृष्टि–इस पर पड़ते ही यह तुम्हारे लिये कामासक्त हो जाए।

**लीलाम्बुजेन भ्रमरान्क्षिपन्ती तस्य प्रतिक्षेपमसौ चकार।**
**उवाच चैनां पुरतः प्रविश्य किञ्चित्सगर्वा प्रतिहारगोप्त्री ॥११८॥**

अन्वयः

असौ लीलाम्बुजेन भ्रमरान् क्षिपन्ती तस्य प्रतिक्षेपं चकार। सगर्वा प्रतिहारगोप्त्री पुरतः किञ्चित् प्रविश्य एनाम् उवाच च।

व्याख्या

असौ राजकुमारी लीलाम्बुजेन करस्थेन लीलाकमलेन, भ्रमरान् द्विरेफान् "द्विरेफपुष्पलिड्भृङ्गषट्पदभ्रमरालयः" इत्यमरः। क्षिपन्ती निवारयन्ती, भ्रमरनिवारणव्याजेन सन्निधिदेशाद्दूरं निवारयन्ती, तस्य गुर्जराधिपस्य प्रतिक्षेपं निषेधं चकार कृतवती। सगर्वा गर्वेण दर्पेण सहिता स्वराजकुमारी-

प्रतिभाचातुर्याद्यवलोकनेन स्वस्यामपि समारोपितगर्वा स्वराजकुमारीसम्बन्धादिति भाव । प्रतिहारस्य द्वारस्य गोप्त्री रक्षित्री प्रतिहारगोप्त्री पुरत राजकुमारीसमक्ष किञ्चित् कियद्दूर प्रविश्य गत्वा एना राजकुमारीमुवाच बभाषे च ।

भाषा

राजकुमारी चन्द्रलेखाने हाथमें शोभा के लिये ग्रहण किये हुए कमल से भ्रमरो को भगाकर दूर करने के मिषसे उस गुजरात के राजा का निषध किया । अपनी राजकुमारी की बुद्धिमत्ता से गर्वित उस जनानखाने की पहरा देनेवाली प्रतिहारी ने आग कुछ दूर बढकर राजकुमारी से कहा ।

पाण्ड्यदेशाधिपतिं वर्णयति—

श्रीखण्डचर्चापरिपाण्डुरोऽयं पाण्ड्यः प्रकामोन्नतचारुदेहः ।
क्षीरोदधिक्षीरपरिप्लुतस्य चातुर्यमाचामति मन्दराद्रेः ॥११९॥

अन्वयः

अयं श्रीखण्डचर्चापरिपाण्डुरः प्रकामोन्नतचारुदेहः पाण्ड्यः क्षीरोदधिक्षीरपरिप्लुतस्य मन्दराद्रेः चातुर्यम् आचामति ।

व्याख्या

अय पुरोदृश्यमान श्रीखण्डस्य चर्चा विलेपन तेन परिपाण्डुर धवलवर्ण प्रकामम् अत्यन्तम् उन्नत चारु सुन्दर देह शरीर यस्य स पाण्ड्य पाण्ड्यदेशाधिपति क्षीरोदधिर्दुग्धसागर तस्य क्षीर दुग्ध तेन परिप्लुतस्य व्याप्तस्य मन्दराद्रे मन्दरपर्वतस्य चातुर्य सादृश्यम् आचामति करोति । अत्रोपमालङ्कार ।

भाषा

यह सामने दिखाई पडने वाला, श्वेतचन्दन के लेप से श्वेतवर्ण, अत्यन्त उन्नत और सुन्दर शरीरवाला पाण्डय देश का राजा, क्षीर सागर के दूध से सने मन्दराचल पर्वत की शोभा से युक्त है । अर्थात् दूध से धुले मन्दराचल पर्वत के समान श्वेत दीख पडता है ।

अनेन मैत्रीं यदि मन्यसे ते मनोभवस्तामरसायताक्षि ।
लीलावने चन्दनपादपानां श्रयन्तु नित्यं मलयानिलास्त्वाम् ।१२०।

### अन्वयः

हे तामरसायताक्षि ते मनोभवः अनेन मैत्रीं यदि मन्यते (तर्हि) लीलावने चन्दनपादपानां मलयानिलाः त्वां नित्यं श्रयन्तु ।

### व्याख्या

तामरसे कमले "पङ्केरुह तामरस सारस" इत्यमरः । इयाऽऽयते विस्तृते "सुदूरे दीर्घमायतम्" इत्यमरः । अक्षिणी नयने यस्यास्सा तत्सम्बोधने हे तामरसायताक्षि ते तव मनोभव कामः अभिलाष "कामोऽभिलाषस्तर्षश्च" इत्यमरः । अनेन पाण्ड्यदेशनृपेण सह मैत्रीं स्नेहं यदि मन्यते (तर्हि) लीलावने विलासवने चन्दनपादपानां चन्दनवृक्षाणां "वृक्षो महीरुहः शाखी विटपी पादपस्तरुः" इत्यमरः । मलयानिलाश्चन्दनवृक्षसम्बन्धावागताः मलयवायवः त्वां भवतीं नित्यं श्रयन्तु अवलम्बन्ताम् ।

### भाषा

हे कमल के समान बड़े नेत्र वाली ! यदि तुम्हारी इच्छा इससे मित्रता करने की हो तो क्रीडोपवन में चन्दन के वृक्षों के मलयवायु तुम्हारी नित्य सेवा करेंगे । अर्थात् यदि इसको चुनोगी तो तुम्हें मलयाचल में चन्दन वृक्ष के वायु का सुख नित्य प्राप्त होगा ।

तत्रापि साभूद्गुणभाजनेऽपि पराङ्मुखी श्रीरिव भाग्यहीने ।
जगाद भूयः पटुवादिनी सा बालां प्रवालाधिकपाटलौष्ठीम् ॥२१॥

### अन्वयः

सा गुणभाजने अपि तत्र अपि भाग्यहीने श्रीः इव पराङ्मुखी अभूत् पटुवादिनी सा प्रवालाधिकपाटलौष्ठीं बालां भूयः जगाद ।

### व्याख्या

सा चन्द्रलदेवी गुणानामौदार्यधैर्यगाम्भीर्यादीनां भाजनं पात्रं "शरावमावपनं भाण्ड पात्रामत्र च भाजनम्" इत्यमरः । तस्मिन् गुणभाजनेऽपि तत्र पाण्ड्येऽपि भाग्यहीने सौभाग्यरहिते पुरुषे श्रीः लक्ष्मीः यथा पराङ्मुखी विमुखी भवति तथैव पराङ्मुखी आदरभावरहिता अभूदासीत् । पटु चतुरं प्रगल्भं यथा स्यात्तथा वदतीति तच्छीला पटुवादिनी प्रगल्भवाक् सा द्वाररक्षिका प्रवालेभ्यो विद्रुमेभ्यो-

या किसलयेभ्यः "प्रवालोऽस्त्री किसलये वीणादण्डे च विद्रुमे" इतिमेदिनी। अधिकं पाटलं रक्त ओष्ठः "श्वेतरक्तस्तु पाटलः" इत्यमरः। यस्यास्सा तां प्रवालाधिकपाटलौष्ठीं बालां राजकुमारीं चन्दलदेवीं भूयः पुनरपि जगाद कथितवती।

### भाषा

वह चन्दलदेवी, दयादाक्षिण्यादि गुणों से युक्त होते हुए भी उस पाण्डय राजा से भी, भाग्यहीन पुरुष से लक्ष्मी के समान विमुख हो गई। बातचीत करने में प्रवीण वह प्रतिहारी कोमल लाल पत्तों से या मूँगे से भी अधिक लाल रंग के ओठों वाली कन्या से, फिर कहने लगी।

चोलराजं वर्णयति—

लीलावगाहं जलधौ विधाय वेलावनान्तेषु विहारभाजाम्।
दिग्वारणानामवतारतां ये करेणुकारोहणतः प्रयाताः ॥१२२॥

### अन्वयः

ये जलधौ लीलावगाहं विधाय वेलावनान्तेषु करेणुकारोहणतः विहारभाजां दिग्वारणानाम् अवतारतां प्रयाताः।

### व्याख्या

ये करीन्द्रा जलधौ प्रतिबिम्बितं स्थिते समुद्रे लीलावगाहं क्रीडास्नानं विधाय कृत्वा वेलावनान्तेषु समुद्रतटवनेषु करेणुकासु हस्तिनीषु "करेणुर्गजयोषायां स्त्रियां पुंसि मतङ्गजे" इति मेदिनी। आरोहणतः रतिक्रीडार्थमारोहणात् विहारभाजां रतिविहारं सम्पादयतां दिग्वारणानां दिग्गजानां "मतङ्गजो गजो नागः कुञ्जरो वारणः करी" इत्यमरः। अवतारतां सारूप्यं जले सोपानस्वरूपत्वं वा प्रयाताः संप्राप्ताः।

### भाषा

जो हाथी समुद्रमें जलक्रीडा कर समुद्रतट के जंगलो में रति के लिये हथिनियों पर चढने से रतिक्रीडा में मग्न दिग्गजो के समान दीख पडते थे या दिग्गजो के उतरने के लिये सीढियो का काम करते थे।

ते जैत्रयात्रासु महाभटस्य यस्य स्फुटद्दानजलाः करीन्द्राः।
दिग्दन्तिसंदर्शनवाञ्छयेव भ्रमन्ति सर्वाणि दिगन्तराणि ॥१२३॥

अन्वयः

जैत्रयात्रासु महाभटस्य यस्य स्फुटद्दानजलाः ते करीन्द्राः दिग्दन्तिसंदर्शनवाञ्छया इव सर्वाणि दिगन्तराणि भ्रमन्ति ।

व्याख्या

जैत्रयात्रासु जयार्थप्रस्थानेषु "जैत्रस्तु जेता यो गच्छत्यलं विद्विषतः प्रति" इत्यमरः । महाभटस्य महायोधस्य यस्य चोलस्य स्फुटन्ति निर्गच्छन्ति दानजलानि मदजलानि येभ्यस्ते स्फुटद्दानजलाः ते करीन्द्रा गजा दिग्दन्तिसंदर्शनस्य वाञ्छया स्वरूपैस्सह तारतम्यकरणाय दिग्गजावलोकनस्येच्छयेव सर्वाणि सकलानि दिगन्तराणि दिशामन्तरालानि भ्रमन्ति भूयः परिव्रजन्ति । अन्वेषणार्थमिति भावः ।

भाषा

विजय यात्राओं में जिस महायोद्धा चोल देश के राजा के दानवारि (मद) गिरानेवाले (मदोन्मत्त) वे हाथी मानो दिग्गजों को देखने की इच्छा से सब दिशाओं के अन्तरालों में घूमते थे । अर्थात् दिग्गजों से भी टक्कर लेने की इच्छा रखने वाले उसके हाथी थे ।

रत्नोत्करैः सन्ततमर्थिसार्थं यं पूरयन्तं प्रतिषेधतीव ।
जलद्विपानां मदडिण्डिमत्वं गतेन मन्द्रध्वनिना पयोधिः ॥२४॥

अन्वयः

पयोधिः जलद्विपानां मदडिण्डिमत्वं गतेन मन्द्रध्वनिना रत्नोत्करैः अर्थिसार्थं संततं पूरयन्तं यं प्रतिषेधति इव ।

व्याख्या

पयोधिस्समुद्रः जलद्विपानां वारिजानां गजानां, केषाञ्चिद् गजानां जल एव समुत्पत्तिस्तस्माज्जलजानां साधारणद्विपापेक्षया भिन्नजातीयत्वमितिभावः । मदडिण्डिमत्वं मदेन हेतुना डिण्डिमत्वं वाद्यप्रभेदत्वं "वाद्यप्रभेदा डमरुमड्डुडिण्डिमझर्झराः" इत्यमरः । गतेन प्राप्तेन मन्द्रध्वनिना गम्भीरनिनादेन स्वनेन रत्नानां मण्यादीनामुत्करैः समूहैः रत्नोत्करैः अर्थिसार्थं भिक्षुकसमूहं सन्ततं निरन्तरं पूरयन्तं तस्येच्छाया परिपूर्तिं कुर्वाणं यं चोलनृपं प्रतिषेधति निवारयतीव । अमूल्यरत्नानां व्ययाधिक्यादिति भावः ।

भाषा

समुद्रने, मानो जल हाथियो के मद के बाजे (ढोल) के ऐसी गम्भीर ध्वनि से रत्न समूहो को लगातार याचकों को देने वाले जिस चोल देश के राजा को ऐसा करने से अर्थात् रत्नों का अपव्यय करने से मना किया।

क्षितौ नमन्त्यां पृतनाभरेण यः प्रोच्छलद्वीचिपरम्परस्य ।
शैलानुकारैः करिभिस्तटस्थैर्बध्नाति पालीमिव दक्षिणाब्धेः ।।१२५।

अन्वयः

यः पृतनाभरेण नमन्त्यां क्षितौ प्रोच्छलद्वीचिपरम्परस्य दक्षिणाब्धेः पालीं तटस्थैः शैलानुकारैः करिभिः बध्नाति इव ।

व्याख्या

यः चोलनृपतिः पृतनाभरेण सेनासमुदायभारेण "ध्वजिनी वाहिनी सेना पृतनाऽनीकिनी चमू." इत्यमरः । नमन्त्या नीचैर्गच्छन्त्या क्षितौ पृथिव्यां प्रोच्छलन्ती ऊर्ध्वमुद्गच्छन्ती वीचीना तरङ्गाणा "भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रियां वीचिरथोर्मिषु" इत्यमरः । परम्परा यस्य स तस्य प्रोच्छलद्वीचिपरम्परस्य दक्षिणाब्धे. दक्षिणदिक्समुद्रस्य पालीं जलागमनप्रतिबन्धकोन्नततट तटस्थैः दक्षिणसमुद्रतीरस्थैः शैलानुकारै. पर्वततत्सदृशमहाशरीरैः करिभिर्हस्तिभि. "मतङ्गजो गजो नागः कुञ्जरो वारण. करी" इत्यमरः । बध्नाति विरचयति इव । उत्प्रेक्षालङ्कारः ।

भाषा

जिस चोल राजा ने सेना के बोझे से नीचे धसने वाली पृथ्वी पर, समुद्र के तट पर विद्यमान पर्वत के ऐसे ऊँचे २ हाथियों से, उमडके आने वाली लहरों की परम्परा से युक्त दक्षिण समुद्र का, मानो बाँध बाँध दिया था।

वमन्ति पीतं सममब्धितोयैर्यस्योच्छलच्छीकरडम्बरेण ।
पदाहतित्रुट्यदरिक्तशुक्ति—मुक्ताफलक्षो[1]दमिव द्विपेन्द्राः ।।१२६।।

अन्वयः

यस्य द्विपेन्द्राः उच्छलच्छीकरडम्बरेण अब्धितोयैः समं पीतं पदाहतित्रुट्यदरिक्तशुक्तिमुक्ताफलक्षोदं वमन्ति इव।

---

[1] मुक्ताफलस्योदमित्यपि पाठान्तरम् ।

व्याख्या

यस्य चोलनृपस्य द्विपेन्द्राः करीन्द्राः उच्छलन्तः उर्ध्वं गच्छन्तः शीकराः अम्बुकणाः "शीकरोऽम्बुकणाः स्मृताः" इत्यमरः। गजमुखेभ्य, तेषां उत्करेण मिषेण अब्धितोयैस्समुद्रजलैस्समं सह पीतं जलबिन्दुभ्रमेण जलेन सह पीतं पदानां गजपादानां, जलावगाहनार्थं समुद्रजलसम्प्रविष्टहस्तिचरणानाम् आहतिभिः शुक्तपुपरि पादसंस्थापनजन्यसङ्घर्षणैः त्रुटपन्त्यः भिन्ना अरिक्ताः मुक्ताफलपूर्णाः शुक्तयः तासु मुक्ताफलानि तेषां क्षोदं चूर्णं वमन्ति समुद्गिरन्ति इव। गजाः स्वभावेनैव जलकणान् स्वशुण्डादण्डेभ्य उरिक्षपन्ति तेषु जलकणेषु मुक्ताफलचूर्णकल्पनेति भावः। अत्रोत्प्रेक्षालङ्कारः।

भाषा

जिसके हाथी ऊपर की तरफ छोड़े हुए सूँड़ के फुवारे के मिष से मानो समुद्र के जल के साथ पीए हुए, पाव से दबकर टूटी, मोती भरी सीपों में के मोती के चूर्ण को छोड़ रहे हैं।

यान्तीषु यद्वारविलासिनीषु करेणुभिः पूरितदिक्तटाभिः।
दिनेऽपि दिक्पालपुरीगवाक्षाः प्रक्षालनं चन्द्रिकया लभन्ते ॥१२७॥

अन्वयः

यद्वारविलासिनीषु पूरितदिक्तटाभिः करेणुभिः यान्तीषु (सतीषु) दिक्पालपुरीगवाक्षाः दिनेऽपि चन्द्रिकया प्रक्षालनं लभन्ते।

व्याख्या

यस्य चोलनृपस्य वारविलासिन्यो वेश्याः तासु यद्वारविलासिनीषु पूरितानि व्याप्तानि दिक्तटानि दिगन्तरालानि याभिः (अत्युन्नतमहाविशाल शरीरत्वात्) ताः ताभिः पूरितदिक्तटाभिः करेणुभिः हस्तिनीभिः "करेणुर्गजयोषायां स्त्रियां पुंसि मतङ्गजे" इति मेदिनी। यान्तीषु विहारार्थमितस्ततो गच्छन्तीषु सतीषु दिक्पालानां दिगध्यक्षाणां इन्द्रादीनां पुर्यो नगर्यं अमरावत्यादयस्तासां गवाक्षाः वायुनिस्सरणमार्गाः "वातायनं गवाक्षोऽथ" इत्यमरः। चन्द्रिकया कामिनीमुखचन्द्रचन्द्रिकया प्रक्षालनमोज्ज्वल्यं प्रकाशं शोभां वा लभन्ते प्राप्नुवन्ति। अतिशयोक्तिरलङ्कारः।

### भाषा

जिस चोल देश की वेश्याओ ने, दिशाओ के अन्तरालो को (अपनी ऊँचाई से) छिपा देनेवाली (ऊँची-ऊँची) हथिनिओ पर बैठ कर घूमते रहने से, इन्द्रादि दिक्पालो की अमरावती आदि नगरियो की खिड़कियाँ दिन में भी उन वेश्याओं के चन्द्रमुख की चाँदनी से प्रकाशित होती हैं।

**स एष चोलश्चपलाक्षि राजा जयोत्सवैर्यस्य दिशां मुखानि ।**
**स्फूर्जद्यशःपुञ्जतया स्थितानि मङ्गल्यशङ्खानिव पूरयन्ति ॥१२८॥**

### अन्वय

हे चपलाक्षि यस्य जयोत्सवैः स्फूर्जद्यशःपुञ्जतया स्थितानि दिशां मुखानि मङ्गल्यशङ्खान् पूरयन्ति इव सः एषः राजा चोलः (अस्ति।)

### व्याख्या

चपले चञ्चले अक्षिणी यस्यास्तत्सम्बोधने हे चपलाक्षि चञ्चलनयने यस्य राज्ञ चोलनृपस्य जयोत्सवे विजयक्षणे स्फूर्जत्प्रकाशमान. सन् उल्लसन् यशसां पुञ्जः समूहो येषु दिङ्मुखेषु तानि तेषां भावः तत्ता तया स्फूर्जद्यशःपुञ्जतया स्थितानि विद्यमानानि दिशां काष्ठानां मुखानि वदनानि स्वरूपाणि अग्रभागा इति यावत्। मङ्गल्यशङ्खान् माङ्गलिकशङ्खान् पूरयन्ति इव वादनार्थं वायुभिः परिपूर्णान् कुर्वन्ति इव, स प्रसिद्ध एष पुरोवर्ती राजा नृपश्चोलोऽस्ति। कीर्तिपुञ्जेषु धवलत्वाच्छङ्खस्वरूपोत्प्रेक्षा।

### भाषा

हे चञ्चल नेत्र वाली ! जिस चोल राजा के विजयोत्सव में प्रकाशमान कीर्तिसमूह से युक्त दिशाओ के मुख, मानो माङ्गलिक शंखो को बजा रहे हैं, वह यह सामने चोल राजा है। अर्थात् श्वेत कीर्ति के दिशाओ के अग्रभाग में पहुँचने से मानो वे शंखस्वरूप थे जिन्हें मङ्गलोत्सव में दिशाएं अपने मुख से बजा रही थी।

**विलासविद्याधरराजहंसं कुरुष्व दोःपञ्जरबद्धमेनम् ।**
**वातायनैः केलिविमानकल्पैस्तवास्तु काञ्ची नयनोत्सवाय ॥१२९॥**

अन्वयः

(हे राजकुमारि) विलासविद्याधरराजहंसम् एनं दोःपञ्जरबद्धं कुरुष्व काञ्ची केलिविमानकल्पैः वातायनैः तव नयनोत्सवाय अस्तु।

व्याख्या

(हे राजकुमारि) धरतीति धरः विलासविद्याया रतिविलासविद्याया धरः ज्ञातेति विलासविद्याधर एव राजहंसः नृपश्रेष्ठ श्रेष्ठमरालपक्षी च तं विलासविद्याधरराजहंसमेनं चोलनृपं दोरेव बाहुरेव "भुजबाहू प्रवेष्टो दोः" इत्यमरः। पञ्जरस्तस्मिन् बद्धं गृहीतस्तं दोःपञ्जरबद्धं कुरुष्व विधेहि। काञ्ची तन्नाम्नी चोलदेशराजधानी केलिविमानकल्पैः क्रीडाविमानसदृशैः वातायनैः गवाक्षैः तव भवत्याः नयनोत्सवाय नेत्रानन्दाय अस्तु कल्पताम्।

भाषा

हे राजकुमारी! रति क्रीडा में कुशल श्रेष्ठ राजा या राजहंस इस चोल राजा को अपने भुजा रूपी पींजडे में बन्द करलो अर्थात् इसको आलिङ्गित कर लो। खेल के (छोटे २) विमानों के सदृश झरोखों से चोल देश की राजधानी काञ्ची तुम्हारे नयनों को आनन्द दे।

तमित्थमन्यत्र कृताग्रहा सा विलङ्घ्य चालुक्यनृपोन्मुखाभूत्।
उत्तालवेलापरिवर्तितापि तरङ्गिणी नोज्झति पूर्वमार्गम् ॥१३०॥

अन्वयः

अन्यत्र कृताग्रहा सा इत्थं तं विलङ्घ्य चालुक्यनृपोन्मुखा अभूत्। उत्तालवेलापरिवर्तिता अपि तरङ्गिणी पूर्वमार्गं न उज्झति।

व्याख्या

अन्यत्र विक्रमाङ्कदेवे कृताग्रहा विहितदृढाभिनिवेशा सा चन्दलदेवीत्यम् अनिर्वचनीयप्रकारेण चोलनृपं विलङ्घ्य परित्यज्य चालुक्यनृपे विक्रमाङ्कदेवे उन्मुखा प्रवणा चालुक्यनृपोन्मुखा अभूत्। उत्ताला उत्कटा वेला समुद्रप्रवाहवेगः "अब्ध्यम्बुविकृतौ वेला कालमर्यादयोरपि" इत्यमरः। तया परिवर्तिता निवर्तिता अपि तरङ्गिणी नदी "अथ नदी सरित्। तरङ्गिणी शैवलिनी" इत्यमरः। पूर्वमार्गं पन्मार्गद्वारा प्रथममायाति तं मार्गं न उज्झति न परित्यजति। तथैव पूर्वमेव मनसा स्वीकृतं विक्रमाङ्कदेवं न परितत्याज सेति भावः। अत्र दृष्टान्तालङ्कारः।

भाषा

विक्रमाङ्कदेव में प्रेम रखने वाली वह पतिंवरा राजकुमारी ऐसी परिस्थिति में उस चोलराज को छोडकर चालुक्यराजा विक्रमाङ्कदेव की ओर बढी। समुद्र के जल में ज्वार आने से परिवर्तित मार्ग वाली भी नदी अपने प्राचीन मार्ग को नही छोडती। अर्थात् चोल राजा का उत्कृष्ट वर्णन सुनने पर भी वह पूर्व निर्धारित विक्रमाङ्कदेव के ओर ही बढी।

चालुक्यपृथ्वीपतिकृष्यमाणे नितान्तदीर्घे नयनाञ्चलेऽस्याः।
निर्वापिताशापृथुदीपवर्ति-धूमैरिवान्ये मलिना बभूवुः ॥१३१॥

अन्वयः

अस्याः नितान्तदीर्घे नयनाञ्चले चालुक्यपृथ्वीपतिकृष्यमाणे (सति) अन्ये निर्वापिताशापृथुदीपवर्तिधूमैः इव मलिनाः बभूवुः।

व्याख्या

अस्याश्चन्द्रलेखाया नितान्तदीर्घेऽत्यन्तविशाले नयनयो नेत्रयोरञ्चले प्रान्ते नयनाञ्चले चालुक्यपृथ्वीपतिना चालुक्यनृपेण कृष्यमाणे समाकर्षिते सति अन्ये राजान निर्वापिता शान्तिमाप्ता आशा मनोरथा एव पृथुदीपवर्तयो विशालदीपकवर्तय तासा धूमास्तैर्निर्वापिताशापृथुदीपवर्तिधूमैरिव मलिना मलीमसा "मलीमसं तु मलिनं कच्चरं" इत्यमरः। अप्राप्तिजन्यसन्तापोद्विग्न-मानसा बभूवु,-सजाता।

भाषा

उस चन्द्रलेखा के नेत्रों के विस्तृत प्रान्त भागो के, चालुक्यराज विक्रमाङ्क-देव द्वारा आकृष्ट होने से अन्य राजा लोग मानो बुझी हुई आशा (चन्द्रलेखा को प्राप्त करने की आशा) रूपी बडी बडी बत्तियो के धूए से मलिन हो गए। अर्थात् राजकुमारी की आखें विक्रमाङ्कदेव पर पडते ही अन्य राजाओं का चेहरा उतर गया।

तत्र क्षणे कोऽपि जगाद राजा पराङ्मुखोऽस्यां प्रियजानिरस्मि।
कश्चिद्विनोदाद्विटपार्थिवानां विलोकनायागमनं शशंस ॥१३२॥

अन्वयः

तत्र क्षणे कः अपि राजा जगाद प्रियजानिः (अहम्) अस्यां पराङ्मुखः अस्मि। कश्चित् विनोदात् विटपार्थिवानां विलोकनाय आगमनं शशंस।

## व्याख्या

तत्र तस्मिन् क्षणे विक्रमाङ्कदेवप्रत्याकर्षणकाले कोऽपि कश्चित् राजा नृपो जगादोवाच। अहं, प्रिया वल्लभा, अभीष्टा या जाया स्वकीयभार्या यस्यैवम्भूतः प्रियजानिः स्वभार्याप्रिय अतएवाऽस्यां चन्दलदेव्यां पराङ्मुखो विमुखोऽननुरक्तोऽस्मि। कश्चिदन्यो राजा विनोदात् मनःकुतूहलात् विटपायिधाना धूर्तनृपाणां विलोकनाय तेषां कपटचातुर्यं द्रष्टुं स्वस्यागमनं शशंस उक्तवान्।

## भाषा

विक्रमाङ्कदेव की ओर चन्दलदेवी की दृष्टि लगने पर किसी राजा ने कहा कि मैं तो अपनी स्त्री से ही प्रेम करनेवाला हूँ। मेरा मन इस चन्दल देवी में नहीं लगा है। किसी दूसरे राजा ने, धूर्त राजाओं के व्यवहारों को देखने के विनोद से अपना स्वयंवर में आना बताया।

**त्वयाहमानीय विडम्बितोऽत्र मिथ्येति कश्चित्सचिवं निनिन्द।**
**वज्राहतानामिव भूपतीनां ययुः परेषां नतिमाननानि ॥१२३॥**

## अन्वयः

कश्चित् अत्र त्वया अहम् आनीय मिथ्या विडम्बितः इति सचिवं निनिन्द। परेषां भूपतीनां वज्राहतानाम् इव आननानि नतिं ययुः।

## व्याख्या

कश्चिद्राजा अत्रास्मिन्स्वयम्वरस्थाने त्वया (मन्त्रिणा) अहमानीय समाहूय मिथ्या निष्फलमेव विडम्बितः वञ्चित इति कथनेन सचिवं स्वमन्त्रिणं निनिन्द भर्त्सनाञ्चकार। परेषामन्येषां भूपतीनां राज्ञां वज्राहतानां वज्रप्रहारेणाऽऽहतानां संताडितानामिव "आहत तु मृषार्थके। गुणिते ताडिते चापि" इति हैमः। आननानि मुखमण्डलानि "वक्त्रास्ये वदनं तुण्डमाननं लपनं मुखम्" इत्यमरः। नतिमधोगतिं ययुः प्रापुः।

## भाषा

किसी राजा ने तुमने मुझे यहाँ लाकर मेरी खिल्ली उड़वाई ऐसा कह कर अपने मन्त्री को फटकारा। अन्य राजाओं के मुख वज्र से आहत होने के समान नीचे धस गए। अर्थात नीच हो गए।

दृष्टिः समस्तात्क्षितिपालचक्राच्चालुक्यसिंहासनमण्डनं तम् ।
विविच्य जग्राह कुरङ्गकाक्ष्याः क्षीरं जलौघादिव राजहंसी ॥१३४॥

अन्वयः

कुरङ्गकाक्ष्याः दृष्टिः समस्तात् क्षितिपालचक्रात् चालुक्यसिंहासनमण्डनं तं विविच्य राजहंसी जलौघात् क्षीरं विविच्य इव जग्राह ।

व्याख्या

कुरङ्गकस्य मृगस्याक्षिणीवाक्षिणी नेत्रे यस्यास्सा तस्याः कुरङ्गकाक्ष्याः दृष्टिः नयनं समस्तात्सकलात् क्षितिपालानां राज्ञां चक्रं मण्डलं समूहस्तस्मात् चालुक्यसिंहासनस्य मण्डनमलङ्कारभूतं तं विक्रमाङ्कदेवं विविच्यैव पृथक्कृत्यैव राजहंसी मराली जलौघात् वारिसमूहात् क्षीरं दुग्धं विविच्य पृथक्कृत्य यथा गृह्णाति तथैव जग्राह स्वीचकार ।

भाषा

उस मृगनयनी राजकुमारी की दृष्टि ने जल समूह से दूध को अलग कर ग्रहण करनेवाली, राजहंसी के समान सम्पूर्ण राजमण्डलमें से चालुक्य राज्य के सिंहासन के आभूषण स्वरूप विक्रमाङ्कदेव को अलग कर ग्रहण किया ।

अथ प्रतीहारधुरन्धरा सा जगाद तां दन्तरुचिप्रवाहैः ।
अन्यक्षमापालविलोकनोत्थं प्रक्षालयन्तीव कलङ्कमस्याः ॥१३५॥

अन्वयः

अथ प्रतीहारधुरन्धरा सा दन्तरुचिप्रवाहैः अस्याः अन्यक्षमापालविलोकनोत्थं कलङ्कं प्रक्षालयन्ती इव जगाद ।

व्याख्या

अथानन्तरं प्रतीहारधुरन्धरा श्रेष्ठा द्वारपालिका "द्वारि द्वाःस्थे प्रतीहारः प्रतीहार्यप्यनन्तरे" इत्यमरः । सा दन्तानां दशनानां "रदना दशना दन्ता रदाः" इत्यमरः । रुचयः धवलप्रभास्तासां प्रवाहास्तैः दन्तरुचिप्रवाहैः अस्याश्चन्दलदेव्याः अन्येषां क्षमापालानां भूपतीनां विलोकनेन संदर्शनेनोत्थः संजातस्तं कलङ्कमपवादं "कलङ्कोऽङ्कापवादयोः" इत्यमरः । प्रक्षालयन्ती अपसारयन्ती इव जगाद उक्तवती । यथा कोऽपि जलेन कृष्णचिह्नं प्रक्षालयति तथैवेयमपि ममार्जेति भावः । अत्रोत्प्रेक्षाऽलङ्कारः ।

भाषा

इसके अनन्तर उस श्रेष्ठ प्रतिहारी ने अपने दांतो की श्वेतकान्ति से अन्य राजाओ को देखने से, लगे हुए चन्द्रलेखा के कलङ्क को मानो साफ करते हुए कहा। अर्थात् भारतीय महिलाएँ असूर्यपश्या होती हैं। परन्तु इसने अनेक राजाओ को देखा। इस कालुष्य को मानो अपने दांतो की कान्ति से साफ करते हुए उसने कहा।

जानाति राजीवमुखि ग्रहीतुं दृष्टिस्त्वदीया कमनीयमर्थम् ।
या शैवलानीव विलङ्घ्य सर्वान् भृङ्गीविलग्ना मुखपङ्कजेऽस्य ॥१३६॥

अन्वयः

हे राजीवमुखि त्वदीया दृष्टिः कमनीयम् अर्थं ग्रहीतुं जानाति। या सर्वान् भृङ्गी शैवलानि इव विलङ्घ्य अस्य मुखपङ्कजे लग्ना।

व्याख्या

राजीवमिव मुखं यस्यास्सा राजीवमुखी कमलमुखी "बिसप्रसूनराजीव-पुष्कराम्भोरुहाणि च" इत्यमरः। तत्सम्बोधने हे राजीवमुखि। त्वदीया ताव-कीना दृष्टिः नयनं कमनीयं रमणीयमर्थं वस्तु 'अर्थोऽभिधेयरैवस्तुप्रयोजन-निवृत्तिषु" इत्यमरः। ग्रहीतुं स्वीकर्तुं जानाति वेत्ति। या सर्वान् सकलान् नृपान् भृङ्गी द्विरेफाङ्गना शैवलानि इव जलनीलिका इव "शैवलश्चैव शैवालं शयलो जलनीलिका" इति वाचस्पतिः। 'जलनीली तु शैवालं' इत्यमरः। विलङ्घ्य त्यक्त्वा अस्य विक्रमाङ्कदेवस्य मुखमेवाननमेव पङ्कजं कमलं तस्मिन् लग्ना सम्प्राप्ता।

भाषा

हे कमलमुखी! तेरी दृष्टि अच्छी वस्तु ग्रहण करना जानती है जो भ्रमरी के सेवारों को छोड़ कमल पर जा बैठने के समान अन्य राजाओं को छोड़ कर, विक्रमाङ्कदेव के मुख कमल पर जा लगी।

अनन्यसामान्यममुष्य रूपं किमुच्यते दृष्टमिदं त्वयापि ।
वदामि सौभाग्यगुणं किमस्य यत्र स्थिते श्रीश्च सरस्वती च ॥१३७॥

अन्वयः

अमुष्य अनन्यसामान्यं रूपं किम् उच्यते इदं त्वया अपि दृष्टम्। अस्य सौभाग्यगुणं किं वदामि यत्र श्रीः सरस्वती च स्थिते स्तः।

व्याख्या

अमुष्य विक्रमाङ्कदेवस्य अन्यस्येतरस्य सामान्यं साधारणं न भवतीत्यनन्य-सामान्यमलौकिकं रूपं सौन्दर्यं किमुच्यते किं वर्ण्यते। इदमनुपमं रूपं त्वया भवत्याऽपि दृष्टमनुभवगोचरीकृतम्। अस्य विक्रमाङ्कदेवस्य सौभाग्यगुणं भोग-भाग्यं स्त्रीजनमोहकत्वमित्यर्थः। किं वदामि किं निरूपयामि, यत्र श्री लक्ष्मीः सरस्वती विद्या चोभे स्थिते विद्यमाने स्तः।

भाषा

इस विक्रमाङ्कदेव के अलौकिक रूपराशि के सम्बन्ध में क्या कहा जाए। इसको तो तुमने भी देख लिया है। इसके सौभाग्य की क्या तारीफ की जाए जिसमें लक्ष्मी और सरस्वती दोनो ही विद्यमान हैं।

सङ्गादजस्रं मदवारणानां सावज्ञमालोकितदिग्द्विपेन्द्राः।
अमुष्य वाहाः सततं जिगीषोः क्षणेन गर्भे ककुभां भ्रमन्ति ॥१३८॥

अन्वयः

मदवारणानाम् अजस्रम् सङ्गात् सावज्ञम् आलोकितदिग्द्विपेन्द्राः अमुष्य जिगीषोः वाहाः ककुभां गर्भे क्षणेन सततं भ्रमन्ति।

व्याख्या

मदवारणानां मत्तगजानामजस्रं निरन्तरं सङ्गात् सहवाससम्बन्धादवज्ञयाऽवहेलनया सहेति सावज्ञं यथा स्यात्तथाऽऽलोकिताः सदृष्टाः दिग्द्विपेन्द्राः दिग्गजा यैस्ते आलोकितदिग्द्विपेन्द्राः, महत्वशालिवस्तुसङ्गानन्तरं तदपेक्षयाऽल्पमहत्वयुक्त-वस्तुसन्दर्शनेनाऽल्प वस्तुनि निरादरो भवतीति भावः। जिगीषोः जयशील-स्याऽमुष्य विक्रमाङ्कदेवस्य वाहाः अश्वाः "वाजिवाहार्वगन्धर्वहयसैन्धवसप्तयः" इत्यमरः। ककुभां दिशानां "दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः" इत्यमरः। गर्भेऽभ्यन्तराले क्षणेन कालकलामात्रेणैव सततं निरन्तरं भ्रमन्ति पर्यटनं कुर्वन्ति। इत्युक्तयाऽश्वानां द्रुततरगामित्वं सूचितमिति भावः। अत्राति‌शयोक्तिरलङ्कारः।

भाषा

मदोन्मत्त हाथियों के सदैव सहवास से दिग्गजों को अनादर की दृष्टि से देखनेवाले इस विक्रमाङ्कदेव के घोड़े, बात की-बात में अपनी तीव्र गति से दिशाओं के अन्तरालों में भ्रमण करने लगते हैं।

**एकत्र भारेण धरा नमन्ती न मस्तके तिष्ठति भोगिभर्तुः ।**
**इतीव सर्वास्वपि दिक्षु कीर्णमनेन सेनागजचक्रवालम् ॥१३९॥**

अन्वयः

अनेन एकत्र भारेण नमन्ती धरा भोगिभर्तुः मस्तके न तिष्ठति इति इव सर्वासु अपि दिक्षु सेनागजचक्रवालं कीर्णम् ।

व्याख्या

अनेन विक्रमाङ्कदेवेनैकत्र पृथिव्या एकस्थाने भारेण सेनाभारेण नमन्ती नम्रीभवन्ती धरा भूमिः "धरा धरित्री धरणी क्षोणी ज्या काश्यपी क्षितिः" इत्यमरः । भोगिभर्तुः भोगिनां भर्ता स्वामी तस्य "उरगः पन्नगो भोगी" इत्यमरः । शेषस्य मस्तके शिरसि न तिष्ठति स्थातुं न शक्नोतीव पूर्वोक्तहेतोरिव सर्वासु सकलास्वपि दिक्षु काष्ठासु, सेनया स्थिता ये गजा दन्तिनस्तेषां "मतङ्गजो गजो नागः कुञ्जरो वारणः करी" इत्यमरः । चक्रवालं समूहः कीर्णं संस्थापितम् । अत्र हेतूत्प्रेक्षालङ्कारः ।

भाषा

इस विक्रमाङ्कदेव ने अपनी सेना के बोझ से एक तरफ दबती भूमि, शेषराज के मस्तक पर न ठहर सकेगी इस कारण से मानो अपनी सेना के हाथियों के समूह को सब दिशाओं में फैला दिया ।

**भुजङ्गमाधीशशिरोधृतस्य दार्ढ्यं धरित्रीफलकस्य कर्तुम् ।**
**क्षिप्ता जयस्तम्भमिषादनेन समन्ततः कीलकमालिकेव ॥१४०॥**

अन्वयः

अनेन भुजङ्गमाधीशशिरोधृतस्य धरित्रीफलकस्य दार्ढ्यं कर्तुम् इव जयस्तम्भमिषात् कीलकमालिका क्षिप्ता ।

व्याख्या

अनेन विक्रमाङ्कदेवेन भुजङ्गमानां सर्पाणामधीशः स्वामी शेषः "शेषोऽनन्तो वासुकिस्तु सर्पराजः" इत्यमरः । तस्य शिरोभिः शीर्षैः धृतस्योढस्य धरित्रीफलकस्य भूमिरूपकाष्ठफलकस्य दार्ढ्यं दृढतां कर्तुं विधातुमिव जयस्तम्भस्य विजयसूचकस्तम्भस्य मिषात् व्याजात् कीलकमालिका कीलकपरम्परा क्षिप्ता विन्यस्ता । अत्र सापह्नवोत्प्रेक्षालङ्कारः ।

भाषा

इस विक्रमाङ्कदेव ने शेषराज के द्वारा मस्तक पर धारण किए हुए पृथ्वी रूपी तख्ते को दृढ करने के लिये, विजय स्तम्भों के मिष से मानों अनेक काटे जड दिये हैं।

**राज्ञां शिखारत्नपरम्पराभिः प्रोताभिरस्योभयतः कृपाणः ।**
**शेषारिकण्ठास्थिविघट्टनेषु जातः क्षणं सम्प्रति कुण्ठधारः ॥१४१॥**

अन्वयः

अस्य उभयतः प्रोताभिः राज्ञां शिखारत्नपरम्पराभिः (युक्तः) कृपाणः शेषारिकण्ठास्थिविघट्टनेषु सत्सु क्षणं सम्प्रति कुण्ठधारः जातः ।

व्याख्या

अस्य विक्रमाङ्कदेवस्य उभयतः कृपाणस्योभयपार्श्वे प्रोताभिः राज्ञां भूपतीनां शिखारत्नपरम्पराभिः चूडामणिश्रेणीभिर्युक्तः सहितः कृपाणः खड्गः "कौक्षेयको मण्डलाग्रः करवालः कृपाणवत्" इत्यमरः । शेषारयः अवशिष्टाः शत्रवः तेषां कण्ठास्थीनि गलभागवर्तिबृहदस्थीनि तेषु विघट्टनानि सघर्षणानि तेषु सत्सु क्षण क्षणमात्रमेव सम्प्रत्यधुना कुण्ठा प्रहरणासमर्था अतीक्ष्णा धारा यस्य सः कुण्ठधारो जातः । सर्वे शत्रवः शान्ता जाता इति भावः ।

भाषा

विक्रमाङ्कदेव की दोनों ओर से विपक्षी राजाओं के शिरोरत्नों से युक्त दुधारी तलवार, बचे हुवे शत्रुओं की गर्दनों की हड्डियों को काट देने पर अब थोडी देर के लिये कुण्ठित धार वाली हो गई है। अर्थात् दोनों धारों में रत्नों के फसे रहने पर भी अतिशय बल के कारण उसी तलवार से बचे हुए शत्रुओं के गले काटकर समस्त शत्रुओं का नाश कर अब उस तलवार की धार थोडी देर के लिये कार्याभाव से कुण्ठित हो गई है।

**सोमेश्वरश्चोलमहीपतिश्च जयोत्सवद्वारि बलाद्विशन्तौ ।**
**द्वावप्यनेनाद्भुतसाहसेन द्वाभ्यां भुजाभ्यां बलिना निरस्तौ ॥१४२॥**

अन्वयः

अद्भुतसाहसेन बलिना अनेन बलात् जयोत्सवद्वारि विशन्तौ द्वौ अपि सोमेश्वरः चोलमहीपतिः च द्वाभ्यां भुजाभ्यां निरस्तौ ।

## व्याख्या

अद्भुतं (आश्चर्यं) साहसं पराक्रमो यस्य स तेनाद्भुतसाहसेन बलिना बल अनेन विक्रमाङ्कदेवेन बलात् हठात् जयोत्सवस्य द्वारि विशन्तौ प्रवेशं कुर्वा विजयेच्छया युद्धाय कृतनिश्चयौ, द्वावप्युभावपि सोमेश्वरः स्वभ्राता चोलमह पतिश्च चोलदेशनृपो राजिगश्च द्वाभ्यां भुजाभ्यां बाहुभ्यां "भुजबाहू प्रवेष्ट दोः" इत्यमरः। निरस्तौ विजितौ।

## भाषा

आश्चर्यजनक साहसवाले बली विक्रमाङ्कदेव ने बलपूर्वक विजयोत्सव के दरवाजे में प्रवेश करनेवाले या विजय की प्राप्ति की इच्छा रखने वाले अपने भाई सोमेश्वर तथा चोलराज राजिग दोनो को अपनी दोनो भुजाओं से परास्त कर दिया।

अस्याद्भुतत्यागनिधेः पुरस्तात् कल्पद्रुमाद्याः परमाणुकल्पाः।
समत्वमेतेन कथं लभन्ते जगत्त्रयीगौरवभाजनेन ॥१४३॥

## अन्वयः

अद्भुतत्यागनिधेः अस्य पुरस्तात् कल्पद्रुमाद्याः परमाणुकल्पाः जगत्त्रयीगौरवभाजनेन एतेन समत्वं कथं लभन्ते।

## व्याख्या

अद्भुतस्याश्चर्यजनकस्य त्यागस्य दानस्य "त्यागो विहापितं दानमुत्सर्जन-विसर्जने" इत्यमरः। निधिर्निधानं तस्याद्भुतत्यागनिधेः अस्य विक्रमाङ्कदेवस्य पुरस्तात् कल्पद्रुमाद्याः कल्पवृक्षचिन्तामणिप्रभृतयः सर्वे दानिनः परमाणुकल्पाः परमाणुसदृशाः, अतिसूक्ष्मा इत्यर्थः। जगतां त्रयी जगत्त्रयी तस्याः गौरवं गुरुत्वं तस्य भाजनमाधारः "सर्वमावपनं भाण्ड पात्रामत्रं च भाजनम्" इत्यमरः। तेन जगत्त्रयीगौरवभाजनेन एतेन विक्रमाङ्कदेवेन समत्वं सादृश्यं कथं लभन्ते प्राप्तुं शक्नुवन्ति। प्रतीपालङ्कारः।

## भाषा

आश्चर्यकारक दानो का निधि अर्थात् आश्चर्य उत्पन्न करनेवाले दानो को देनेवाले इस विक्रमाङ्कदेव की तुलना में कल्पवृक्ष, चिन्तामणि आदि तुच्छ हैं। तीनो लोको के गौरव के आधारभूत इस विक्रमाङ्कदेव की वे कैसे बराबरी कर सकते हैं।

**मुञ्जस्य गुञ्जासमतापि नास्ति का योग्यता भोजमहीभुजश्च ।**
**लब्धे कवीन्द्रैः कविबान्धवेऽस्मिन् दासीकृता पादतलेषु लक्ष्मीः ।१४४।**

### अन्वयः

मुञ्जस्य गुञ्जासमता अपि नास्ति भोजमहीभुजः च योग्यता का। अस्मिन् कविबान्धवे लब्धे (सति) कवीन्द्रैः पादतलेषु लक्ष्मीः दासीकृता।

### व्याख्या

मुञ्जस्य मालवाधीशस्य गुञ्जाभिस्समता सादृश्यं गुञ्जासमता काकचिञ्चा-साम्यमपि "चर्ण्य तु रक्तिका काकचिञ्चागुञ्जे तु कृष्णला" इत्यमरः। नास्ति न भवितुं शक्नोति। भोजमहीभुजः भोजराजस्य च योग्यता कार्यक्षमता का अत्यल्पेत्यर्थः। अस्मिन् नृपे विक्रमे कवीनां बान्धवेऽतिप्रिये लब्धे प्राप्ते सति कवीन्द्रैः कविश्रेष्ठैः पादतलेषु चरणतलेषु लक्ष्मीः दासीकृता सेवायामारोपिता।

### भाषा

(विक्रमाङ्कदेव की तुलना में) मुञ्जराजा गुञ्ज की तौल के इतना भी नही है अर्थात् बहुत हल्का है। राजा भोज की योग्यता की क्या गिनती है। कवियो के बान्धव अर्थात् रक्षक श्री विक्रमाङ्कदेव के मिलने पर श्रेष्ठ कवियो ने लक्ष्मी को दासी बनाकर अपनी सेवा में लगाया है। अर्थात् श्रेष्ठ कवि इसकी कृपा से अत्यधिक धनी हो गए है।

**विहाय वक्त्राणि मृगेक्षणानां सविभ्रमभ्रूयुगताण्डवानि ।**
**अस्यान्यतः साहसलाञ्छनस्य न भीतिमुद्रामुकुलं मनोऽभूत् ।१४५।**

### अन्वयः

साहसलाञ्छनस्य अस्य मनः मृगेक्षणानां सविभ्रमभ्रूयुगताण्डवानि वक्त्राणि विहाय अन्यतः भीतिमुद्रामुकुलं न अभूत्।

### व्याख्या

साहसलाञ्छनस्य पराक्रमातिशयशालिनोऽस्य विक्रमाङ्कदेवस्य मन मृगेक्षणानां हरिणनयनानां विभ्रमेण विलासेन सहितं भ्रूयुग्मं भ्रूयुगलं तस्य ताण्डवं उद्धतनृत्यं "ताण्डवं नटनं नाट्यं लास्यं नृत्यं च नर्तने" इत्यमरः। येषु तानि सविभ्रम-भ्रूयुगताण्डवानि वक्त्राणि मुखानि विहाय त्यक्त्वा अन्यत इतरकारणात् भीतिमुद्रया

भयमुद्रया मुकुलं संकोचमापन्नं "कुड्मलो मुकुलोऽस्त्रियाम् इत्यमरः" भीतिमुद्रामुकुलं नाऽभूत् न जातम् । हरिणाक्षीणां सविलासभ्रूयुगलताण्डवयुक्तानि मुखान्यवलोक्य ता मां स्ववशं न नयेयुरित्येव भीतेः कारणम् । वीरनृपाणां पुरतस्तु मनसोऽभीतिरेवेति भावः ।

## भाषा

अत्यन्त पराक्रमशील इस विक्रमाङ्कदेव का मन, विलास के सहित दोनों भौंवों के नीचे ऊपर होने के सौन्दर्य से युक्त मृगनयनियों के मुखों के दर्शन को छोड़ कर अन्यत्र कहीं भी भीतिग्रस्त नहीं होता है। सुन्दरियाँ कहीं मुझे अपने वश में न कर लें इस भय के अतिरिक्त उसे अन्यत्र कहीं किसी राजा से कोई भय नहीं था।

**निवेश्यतां किन्नरकण्ठि कण्ठे मालास्य दोर्बन्धविलासदूती ।**
**कीर्तिर्मिथोऽस्तु समानयोगात् कामस्य कामं फलतु प्रयासः ॥१४६॥**

## अन्वयः

हे किन्नरकण्ठि दोर्बन्धविलासदूती माला अस्य कण्ठे निवेश्यताम् । समानयोगात् मिथः कीर्तिः अस्तु । कामस्य प्रयासः कामं फलतु ।

## व्याख्या

किन्नरस्य किंपुरुषस्य "स्यात्किन्नरः किंपुरुषस्तुरङ्गवदनो मयुः" इत्यमरः । कण्ठ इव कण्ठो मधुरः कण्ठध्वनिः यस्यास्सा तत्सम्बोधने हे किन्नरकण्ठि ! दोर्बन्धः भुजाश्लेषः तद्रूपो यो विलासस्तस्य दूती विज्ञापिका दोर्बन्धविलासदूती माला पुष्पस्रक् "माल्यं माला स्रजौ मूर्ध्नि" इत्यमरः । अस्य विक्रमाङ्कदेवस्य कण्ठे निवेश्यतां परिधाप्यताम् । समानानां गुणादिभिस्समानस्वरूपाणां मिथो योगात् वैवाहिकसम्बन्धात् विधेर्ब्रह्मणः कीर्तिर्यशः समानसयोगकरणजा अस्तु जायताम् । कामस्य मन्मथस्य प्रयासः प्रयत्नः कामं परिपूर्णं फलतु सुन्दरपरिणामभाक् भवतु । अत्र समालङ्कारः ।

## भाषा

हे किन्नर के ऐसे मधुर गले वाली ! भुजाओं से आलिङ्गन के आनन्द को सूचित करने वाली इस फूल की माला को विक्रमाङ्कदेव के गले में पहना दो। समानगुण वालों का परस्पर वैवाहिक सम्बन्ध होने से ब्रह्मा का यश फैले। कामदेव का परिश्रम पूर्णरूप में सफल हो।

लज्जानिरासे निभमात्रकेण वाक्येन तेन प्रतिहाररक्ष्याः ।
पतिंवरा संवरणस्रजं तां श्रीविक्रमाङ्कस्य चकार कण्ठे ॥१४७॥

अन्वयः

पतिंवरा लज्जानिरासे निभमात्रकेण प्रतिहाररक्ष्याः तेन वाक्येन तां संवरणस्रजं श्रीविक्रमाङ्कस्य कण्ठे चकार ।

व्याख्या

पतिंवरा राजकुमारी चन्दलदेवी लज्जायाः व्रीडायाः निरासे निवारणे निभमात्रकेण व्याजमात्रकेण प्रतिहाररक्ष्याः दूत्याः तेन पूर्वोक्तेन वाक्येन, गुणरत्नराशिस्वरूपविक्रमाङ्कदेवदर्शनात् लज्जा तु स्वयमेव निरस्तप्रायैव विनैव विशेषप्रयास "कामातुराणां न भयं लज्जेति" वचनात् । तथापि दूत्या वाक्यं व्याजमात्र जातमिति भाव. । तां प्रसिद्धा संवरणस्रजं स्वयम्वरमालां श्रीविक्रमाङ्कस्य राज्ञो विक्रमाङ्कदेवस्य कण्ठे गले "कण्ठो गलोऽथ ग्रीवायां" इत्यमरः । चकार समर्पयामास ।

भाषा

स्वयंवर उत्सव में पति को चुननेवाली चन्दलदेवी ने लज्जा को दूर करने में मिषमात्र प्रतिहारी के पूर्वोक्त वचन से उस स्वयंवर की माला को विक्रमाङ्कदेव के गले में पहना दिया। अर्थात् विक्रमाङ्कदेव को देखते ही उसकी लज्जा दूर हो गई थी। दूती का वचन केवल लज्जा दूर करने में मिषमात्र हुआ ।

तया स्रजा कण्ठनिवेशभाजा मत्तालिमालाकलझाङ्कृतेन ।
अवाद्यतेवाखिलभूमिपाल-सौभाग्यलीलाजयडिण्डिमोऽस्य ॥१४८॥

अन्वयः

अस्य कण्ठनिवेशभाजा तया स्रजा मत्तालिमालाकलझाङ्कृतेन अखिलभूमिपालसौभाग्यलीलाजयडिण्डिमः अवाद्यत इव ।

व्याख्या

अस्य विक्रमाङ्कदेवस्य कण्ठे गले निवेशः परिग्रहणं भजति प्राप्नोतीति तया कण्ठनिवेशभाजा तया स्रजा मालया मत्ता मदान्धा अलयो भ्रमराः "द्विरेफ पुष्पलिड्भृङ्गषट्पदभ्रमरालयः" इत्यमरः । तेषां मालास्तासां कलं मधुर

झाङ्कृतं गुञ्जितं तेन मत्तालिमालाकलझाङ्कृतेनाऽखिलानां सकलानां भूमिपालानां नृपाणां सौभाग्यस्य रमणीयभाग्यस्य लीला विलासस्तस्या जयस्य विजयस्य डिण्डिमो वाद्यविशेषस्यः "वाद्यप्रभेदा डमरुमड्डुडिण्डिमझर्झराः" इत्यमरः। अवादित इव ताडितः शब्दायमान इवाभूदित्युत्प्रेक्षा। नृपाणां सौभाग्येषु विक्रमाङ्कदेवस्य सौभाग्यं बलवत्तरमिति नृपान्तरसौभाग्योपरि विक्रमादित्यस्य सौभाग्येन विजयो लब्ध इति भावः।

### भाषा

विक्रमाङ्कदेव के गले में स्थान प्राप्त करनेवाली उस स्वयंवरमाला के मदोन्मत्त भ्रमरों की पंक्ति के सुन्दर झंकारों से मानों समस्त राजाओं की सौभाग्यलीला पर विक्रमाङ्कदेव के विजय प्राप्त करने का नगाड़ा पीटा।

**तद्बाहुलेखे कुसुमस्रजोऽपि सौभाग्यशोभान्वयमन्वभूताम्।**
**कण्ठस्थितायामपि येन तस्यां देवस्तदालिङ्गनसत्वरोऽभूत् ॥१४६॥**

### अन्वयः

तद्बाहुलेखे अपि कुसुमस्रजः सौभाग्यशोभान्वयम् अन्वभूताम् येन देवः कण्ठस्थितायाम् अपि तस्यां तदालिङ्गनसत्वरः अभूत्।

### व्याख्या

तस्य विक्रमाङ्कदेवस्य बाहुलेखे भुजौ अपि कुसुमस्रजः पुष्पमालायाः सौभाग्यस्य सुन्दरभाग्यस्य शोभा तस्या अन्वयं सम्बन्धम् अन्वभूताम् अनुभवगोचरं अकुरुताम्। येन कारणेन देवो विक्रमाङ्कः कण्ठस्थितायामपि तस्यां मालायां तदालिङ्गनसत्वरः बाहुलेखाश्लेषे समुत्सुकतरोऽभूत्। काचिल्ललना कण्ठे लग्ना सती कामुकेन भुजाभ्यामाश्लिष्यत एवेति भावः। अत्र समासोक्तिरलङ्कारः।

### भाषा

विक्रमाङ्कदेव की दोनों भुजाओं ने भी पुष्पमाला के सौभाग्य की शोभा के सम्बन्ध का अनुभव किया। अर्थात् माला बड़ी होने से गले पर से दोनों भुजाओं का स्पर्श करती हुई नीचे की ओर लटकी। जिससे विक्रमाङ्कदेव उस माला के गले में रहने पर भी उसका आलिङ्गन करने में उत्सुक हुआ। अर्थात् किसी कामिनी के गले में लिपट जाने पर कामुक उसे अपनी भुजाओं से आलिङ्गन करता ही है।

॥ श्री ॥

## महाकविश्रीविल्हणविरचितं

# विक्रमाङ्कदेवचरितम्

### दशमः सर्गः

जातेऽथ देवस्य तया विवाह-महोत्सवे साहसलाञ्छनस्य ।
कृतार्थया पार्थिवकन्ययेव कीर्त्याप्यमुच्यन्त नृपाः समस्ताः ॥१॥

अन्वयः

अथ साहसलाञ्छनस्य देवस्य तया विवाहमहोत्सवे जाते कृतार्थया पार्थिवकन्यया इव कीर्त्या अपि समस्ताः नृपाः अमुच्यन्त ।

व्याख्या

अथ स्वयम्बरसमाप्त्यनन्तर साहसमेव पराक्रम एव लाञ्छन चिन्ह यस्य स तस्य साहसलाञ्छनस्य "कलङ्काङ्कौ लाञ्छनञ्च चिन्ह लक्ष्म च लक्षणम्" इत्यमरः । देवस्य विक्रमाङ्कदेवस्य राज्ञ तया राजकन्यया चन्दलदेव्या सह विवाहमहोत्सवे परिणयोत्सवे जाते सम्पन्ने कृत सफलीभूतोऽर्थः प्रयोजन यस्या सा तया कृतार्थया पार्थिवकन्यया राजकन्यया इव कीर्त्या यशसाऽपि समस्तास्सकला नृपा राजानोऽमुच्यन्त परिहृता । विक्रमाङ्क विहाय सर्वे राजानो निष्प्रभा सुकीर्तिवञ्चिता अपि जाता राजकन्याया अलाभात् इत्यर्थ । अत्रोपमालङ्कार । अस्मिन्सर्गे चेन्द्रवज्राच्छन्द "स्यादिन्द्रवज्रा यदि तौ जगौग" इति लक्षणात् ।

भाषा

स्वयंवर के अनन्तर, चन्दलदेवी से पराक्रम चिन्ह वाले अर्थात् पराक्रमी विक्रमाङ्कदेव का विवाह हो जाने पर, सफल मनोरथ राजकन्या के समान कीर्ति ने भी सब राजाओ को छोड दिया । अर्थात् स्वयंवर में विक्रमाङ्कदेव के सफल होने से सब राजाओ की अपकीर्ति हुई ।

आशाप्रदीपेषु गतेषु शान्तिमशेषसौभाग्यगुणक्षयेण ।
तदीयधूमैरिव धूसराङ्गाः क्षोणीभुजः श्यामलिमानमापुः ॥२॥

अन्वयः

क्षोणीभुजः अशेषसौभाग्यगुणक्षयेण आशाप्रदीपेषु शान्तिं गतेषु तदीयधूमैः इव धूसराङ्गाः (सन्तः) श्यामलिमानम् आपुः ।

व्याख्या

क्षोणीं पृथ्वीं 'क्षोणी ज्या काश्यपी क्षिति' इत्यमरः । भुञ्जन्ति पालयन्ति इति क्षोणीभुजो राजानोऽशेषस्य समग्रस्य सौभाग्यस्य सुन्दरभाग्यरूपस्य गुणस्य प्रदीपपक्षे दीपदशाया क्षयेण विनाशेन आशाप्रदीपेषु आशास्वरूपप्रदीपेषु शान्तिं निर्वाणं गतेषु प्राप्तेषु तदीयधूमैः शान्ताशाप्रदीपजन्यधूमैः इव धूसराण्यङ्गानि मलिना शरीरावयवा येषां ते धूसराङ्गाः (सन्तः) श्यामलिमानं कृष्णतां विच्छायतामापुः जग्मुः । श्लेषोत्थापिता उत्प्रेक्षाऽलङ्कारः ।

भाषा

राजा लोग समग्र सौभाग्यगुण के क्षय होने से अर्थात् चन्दलदेवी को प्राप्त न कर सकने से, पक्ष में, सौभाग्य रूपी बत्ती के नष्ट हो जाने से, चन्दलदेवी को प्राप्त करने की आशा रूपी दीपों के बुत जाने पर मानो उन दीपों के धूएँ से मलिन शरीरयुक्त होकर, काले पड गये ।

क्रमक्रमं कर्तुमभूदपेक्षा वैलक्ष्यभाजां न महीपतीनाम् ।
श्रीविक्रमाङ्कस्य न कङ्कपत्रास्ते किन्तु सह्याः समराङ्गणेषु ॥३॥

अन्वयः

वैलक्ष्यभाजां महीपतीनां क्रमम् अक्रमं कर्तुम् अपेक्षा न अभूत् किन्तु ते श्रीविक्रमाङ्कस्य कङ्कपत्राः समराङ्गणेषु न सह्याः ।

व्याख्या

वैलक्ष्यं लज्जां भजन्तीति वैलक्ष्यभाजस्तेषां वैलक्ष्यभाजां लज्जितानां महीपतीनां राज्ञां क्रमम् अक्रमम् अनुचिताचारं कर्तुम् विधातुम् अपेक्षा आवश्यकता न अभूत् न जाता अपि तु सर्वेऽपि युद्धाय विचारं चक्रुः । किन्तु परन्तु ते श्रीविक्रमाङ्कदेवस्य राज्ञः कङ्कपत्रा बाणविशेषा समराङ्गणेषु युद्धस्थलेषु न

जयति कुसुमकेतोश्चापविद्यारहस्यं
विधिरुचितविधायी साम्प्रतं वन्दनीयः ।
उदचरदिति वाणी तत्र पौराङ्गनाना-
मिह हि सदृशयोगः कस्य न प्रीतिहेतुः ॥१५०॥

अन्वयः

तत्र कुसुमकेतोः चापविद्यारहस्यं जयति साम्प्रतम् उचितविधायी विधिः वन्दनीयः इति पौराङ्गनानां वाणी उदचरत्। हि इह सदृशयोगः कस्य प्रीतिहेतुः न ( भवति )।

व्याख्या

तत्र स्वयम्वरस्थाने कुसुममेव पुष्पमेव केतुः पताका "केतुर्ना रुक्पताकारिग्रहोत्पातेषु लक्ष्मणि" इति मेदिनी। यस्य स कुसुमकेतुः कामस्तस्य कुसुमकेतो श्चापविद्याया धनुर्विद्याया रहस्यं गुप्तमहत्त्वं चापविद्यारहस्यं जयति सर्वोत्कर्षेण वर्तते। साम्प्रतमधुना उचितं विदधातीत्युचितविधायी योग्यकार्यकर्ता विधिर्ब्रह्मा वन्दनीयः पूजनीय इतीत्थं पौराङ्गनानां नागरिकाङ्गनानां वाणी वाक् उदचरत् उदतिष्ठत् आविर्भूता। हि यत इह भूमण्डले विवाहावसरे वधूवरयोः समानगुणशीलयोर्योगः सम्बन्धः कस्य जनस्य प्रीतिहेतुः प्रसन्नतासम्पादको न भवति। अपि तु सर्वेषामेव हर्षवर्धनो भवतीति भावः। अत्रार्थापत्तिरलङ्कारः। ननमयययुतेयं मालिनी भोगिलोकैरिति लक्षणान्मालिनीच्छन्दः।

भाषा

स्वयंवरभूमि में नागरिकस्त्रियों की, कामदेव की धनुर्विद्या के गुप्त महत्त्व की बलिहारी है, इस समय उचित काम करने वाला ब्रह्मा नमस्करणीय है, ऐसी वाणी उच्चरित होने लगी। क्योंकि इस संसार में वरवधू का समान गुणशील होना किसको आनन्द नहीं देता। अर्थात समान गुणशील वाले वरवधू के विवाह से सबको आनन्द होता है।

अथ मृदुलमृदङ्गध्वानमारुह्य वध्वा
सह परिणयलीलामण्डपं पाण्डुकीर्तिः।
निखिलनृपतिलक्ष्म्या रागसंक्रान्तयेव
द्युतिमधिकमुदारां कुन्तलेन्दुर्बभार ॥१५१॥

### अन्वयः

अथ पाण्डुकीर्तिः कुन्तलेन्दुः वध्वा सह मृदुलमृदङ्गध्वानं परिणयलीलामण्डपम् आरुह्य रागसंक्रान्तया निखिलनृपतिलक्ष्म्या इव उदारां द्युतिम् अधिकं बभार ।

### व्याख्या

अथ स्वयम्वरे मालाग्रहणानंतर पाण्डुकीर्तिः धवलकीर्तिः कुन्तलेन्दु विक्रमाङ्कदेव वध्वा चन्द्रलेखया सह मृदुलोऽत्यन्तकर्णानन्दहेतुर्मृदङ्गः तस्य ध्वानो नादो यस्मिन् स त मृदुलमृदङ्गध्वानं परिणयस्य विवाहकृत्यस्य "विवाहोपयमौ समौ" तथा "परिणयोद्वाह" इत्यमरः । लीलामण्डपं तत्तमारुह्य समधिष्ठाय रागेण प्रेम्णा संक्रान्तया संलग्नया निखिलानां नृपतीनां राज्ञां लक्ष्म्या राजश्रिया आलिङ्गित इव उदारामुत्कृष्टां द्युतिं कान्तिं "शोभा कान्तिर्द्युतिश्छविः" इत्यमरः । अधिकमत्यन्तं यथा स्यात्तथा बभार धारयामास । मालिनीच्छन्दः ।

### भाषा

स्वयंवर भूमि में माला पहनाई जाने पर, शुभ्रकीर्ति विक्रमाङ्कदेव, नववधू के साथ, कोमल पखावज के शब्दों से युक्त विवाह के सुन्दर मण्डप में जाकर, मानो अन्य राजाओं की राज्यश्री से प्रेमपूर्वक अलिङ्गित होने से, उत्कृष्ट कोटि की कान्ति को अधिक मात्रा में धारण करने लगा । अर्थात् स्वयंवर म पराजित सब राजाओं की राज्यश्री की शोभा इसमें आ जाने से विक्रमाङ्कदेव अत्यधिक कान्तिमण्डल से शोभित हो उठा ।

इति श्री त्रिभुवनमल्लदेव—विद्यापति—काश्मीरकभट्ट श्री बिल्हणविरचिते विक्रमाङ्कदेवचरिते महाकाव्ये नवमः सर्गः ।

नेत्राब्जाभ्रयुगाङ्कविक्रमशरत्कालेऽत्र दामोदरात्
भारद्वाजसुधोत्तमात्समुदितः श्री विश्वनाथः सुधीः ।
चक्रे रामकुबेरपण्डितवरात्सम्प्राप्तसाहाय्यकः
सर्गेऽस्मिन्नवमे रमाकरुणया टीकाद्वयं निर्मलम् ॥

ॐ शान्तिः शान्तिः शान्तिः ।

---

सह्याः न सोढुं योग्याः। पूर्वानुभूतकङ्कपत्रपीडां संस्मृत्य न कोऽपि नृपोऽनुचिताचारे प्रवृत्त इति भावः।

### भाषा

लज्जित राजाओं में किसने विक्रमाङ्कदेव के विरुद्ध अनुचित कार्य करने की अभिलाषा न की अर्थात् सब ने उसके विरुद्ध कार्य (युद्धादि) करने का विचार किया। परन्तु (पूर्वानुभव से) वे यह जानते थे कि युद्ध में विक्रमाङ्कदेव के उन कङ्कपत्रों की मार सहना कठिन है इसलिये वे उसके विरुद्ध खड़े नहीं हुए।

**यथागतेनैव पथा गतेषु भूपेष्वथ म्लानमनोरथेषु ।**
**रेमे तया भूमिपतिः श्रियेव दैत्यप्रमाथार्जितया मुरारिः ॥४॥**

### अन्वयः

अथ भूमिपतिः म्लानमनोरथेषु भूपेषु यथागतेन पथा एव गतेषु (सत्सु) तया मुरारिः दैत्यप्रमाथार्जितया श्रिया इव रेमे।

### व्याख्या

अथ चन्दलदेव्या सह विक्रमाङ्कदेवस्य परिणयानन्तरं भूमिपतिः नृपतिः विक्रमाङ्कदेवः म्लानाः श्रान्ता मनोरथा येषां ते म्लानमनोरथास्तेषु म्लानमनोरथेषु भूपेषु राजसु आगतमागमनमनतिक्रम्येति यथागतं तेन यथागतेन पथा मार्गेणैव येन मार्गेण ते समागतास्तेनैवेत्यर्थः। गतेषु स्वस्थानं प्रस्थितेषु सत्सु तया चन्द्रलेखया सह मुरारिर्विष्णुः दैत्यानां प्रमाथेन विनाशकरणेनार्जिता संगृहीता तया दैत्यप्रमाथार्जितया श्रिया लक्ष्म्या सह यथा रेमे तथैवायं विक्रमाङ्कोऽपि रेमे, विलासक्रीडया दिवसानतिवाहयाञ्चकारेतिभावः।

### भाषा

विवाह होने के अनन्तर, उदास मन वाले अन्य राजाओं के, जैसे आये थे वैसे ही लौट जाने पर, विक्रमाङ्कदेव चन्द्रलेखा के साथ, दैत्यों को परास्त कर प्राप्त लक्ष्मी के साथ विष्णु के समान, विहार करने लगा।

**सा संनताङ्गी शनकैः प्रियस्य तथा गुणैर्मानसमारुरोह ।**
**तदेकवश्यं स्मरशासनेन यथा तदन्याभिरहार्यमासीत् ॥५॥**

### अन्वयः

संनताङ्गी सा गुणैः शनकैः प्रियस्य मानसं तथा आरुरोह यथा स्मरशासनेन तदेकवश्यं तत् अन्याभिः अहार्यम् आसीत् ।

### व्याख्या

संनतान्यङ्गानि यस्यास्सा संनताङ्गी नम्राङ्गी सा चन्दलदेवी स्वगुणैः दयौदार्यप्रियानुरूपाचरणादिभिः शनैरेवशनकैः क्रमशः प्रियस्य विक्रमाङ्कदेवस्य मानसं मनः 'स्वान्तं हृन्मानसं मनः' इत्यमरः । तथा तेन प्रकारेण, तथाऽधिकं वा आरुरोह समाकृष्टवती यथा स्मरशासनेन कामाज्ञया तयैकया चन्दलदेव्यैव वश्यं वशीकर्तुं योग्यं विक्रमाङ्कदेवस्य तत् मानसं अन्याभिर्नायिकाभिरहार्यं हर्तुमयोग्यं आसीत् ।

### भाषा

नताङ्गी चन्द्रलेखा ने अपने पातिव्रत्य, सेवा आदि गुणों से धीरे २ अपने पति के मन को ऐसा अधिक आकर्षित कर लिया कि कामदेव की आज्ञा से केवल चन्दलदेवी के ही वश में रहने वाले उसके मन को अन्य सुन्दरियां आकृष्ट न कर सकीं ।

**श्रीकुन्तलक्षोणिपतेस्तदीये वक्त्रेन्दुबिम्बे हृदयं प्रविष्टे ।**
**अन्याङ्गनानां मुखपङ्कजानि संकोचमीत्येव बहिर्बभूवुः ॥६॥**

### अन्वयः

तदीये वक्त्रेन्दुबिम्बे क्षोणिपतेः हृदयं प्रविष्टे ( सति ) अन्याङ्गनानां मुखपङ्कजानि सङ्कोचभीत्या इव बहिः बभूवुः ।

### व्याख्या

तस्याश्चन्दलदेव्या इदमिति तदीयं तस्मिन् तदीये वक्त्रे मुखमेवेन्दुश्चन्द्रस्तस्य बिम्बं मण्डलं 'बिम्बोऽस्त्री मण्डलं त्रिषु' इत्यमरः । तस्मिन् वक्त्रेन्दुबिम्बे क्षोणिपतेः पृथ्वीपतेः विक्रमाङ्कदेवस्य हृदयं मनः मनमोत्ययं: प्रविष्टे सति अन्याङ्गनानामितरस्त्रीणां मुखपङ्कजानि मुखकमलानि सङ्कोचस्य म्लानतायाः भीतेर्भयात् इव बहिर्बभूवुः हृदयाद्बहिर्निर्गतानि । चन्द्रोदये कमलानि संकुचन्ति । तथैव चन्दलदेवीमुखचन्द्रे सति हृदयस्य मध्येऽन्याङ्गनामुखपङ्कजानां तस्मिन् हृदये वस्थानं संकोचायैव कल्पिष्यत इति भावः । अत्र रूपकोत्प्रेक्षयोः सङ्करः ।

भाषा

चन्दल देवी के मुख रूपी चन्द्रबिम्ब के राजा विक्रमाङ्कदेव के हृदय में प्रविष्ट होने पर, अन्य सुन्दरियों के मुखरूपी कमल सकोच को प्राप्त होने के भय से मानो उसके हृदय के बाहर ही रहे। अर्थात् चन्द्र के अस्तित्व में कमल सकुचित हो जाते हैं। इसलिये चन्दलदेवी के मुखचन्द्र युक्त हृदय से सकुचित होने के भय से अन्य नारियों के मुखकमल बाहर ही गए।

सा तत्र शीघ्रं विविधोपचार–प्रौढे नवोढाव्रतमुत्ससर्ज।
अकौशलं पत्युरिदं चिरेण विश्वासमायाति नवा वधूर्यत् ॥ ७ ॥

अन्वयः

तत्र विविधोपचारप्रौढे ( सति ) सा शीघ्रं नवोढाव्रतम् उत्ससर्ज। इदं पत्युः अकौशलं यत् नवा वधूः चिरेण विश्वासम् आयाति।

व्याख्या

तत्र तस्मिन् विक्रमाङ्कदेवे विविधेषु नानाप्रकारेषूपचारेषु समादरप्रदर्शन-सुखजनकसफलवस्तुसामग्रीपरिपूरणादिकार्येषु प्रौढ समर्थस्तस्मिन् वर्तमाने सति सा चन्दलदेवी शीघ्र द्रुतमेव नवोढाया नवपरिणीतायाः व्रतमाचारमुत्ससर्ज त्यक्तवती। इद पत्यु अकौशल प्रावीण्याभाव यत् यस्मात्कारणात् नवा नूतना वधू चिरेण बहुकालानन्तर विश्वास विस्रम्भ 'समौ विस्रम्भ-विश्वासौ' इत्यमर। आयाति प्राप्नोति। अत्रार्थान्तरन्यासोऽलङ्कार।

भाषा

विक्रमाङ्कदेव के अनेक प्रकार की सुख की सामग्री तथा सादर व्यवहारों से समृद्ध रहने पर चन्दलेखा ने शीघ्र ही नव विवाहिता स्त्री के विशेष लज्जा युक्त हाव भावों को छोड दिया। यह पति की अकुशलता है जिससे नव-वधू को अपने पति में विश्वास प्राप्त होने में विशेष समय लगता है।

शस्त्राधिकारी मकरध्वजस्य कण्ठेषु सौभाग्यगुरुः पिकानाम्।
वैशद्यसञ्जीवनमिन्दुभासां साम्राज्यमन्त्री रसपार्थिवस्य ॥ ८ ॥
उत्चित्रणे चित्रकरस्तरूणां मानद्रुमोन्मूलनमत्तदन्ती।
तस्य प्रभावादथ तत्र भर्तुश्चैत्रः पुनर्नूतनतां प्रपेदे ॥ ९ ॥

अन्वयः

अथ मकरध्वजस्य शास्त्राधिकारी पिकानां कण्ठेषु सौभाग्यगुरुः इन्दुभासा वैशद्यसञ्जीवनं रसपार्थिवस्य साम्राज्यमन्त्री तरूणाम् उच्चित्रणे चित्रकरः मानद्रुमोन्मूलनमत्तदन्ती चैत्रः तस्य भर्तुः प्रभावात् पुनः तत्र नूतनतां प्रपेदे ।

व्याख्या

अथेत्यनन्तरं मकरध्वजस्य कामस्य शास्त्राधिकारी शास्त्रनिर्माणकर्ता, पिकानां कोकिलानां 'कोकिलः पिक इत्यपि' इत्यमरः । कण्ठेषु गलेषु 'कण्ठो गलोऽथ ग्रीवायां' इत्यमरः । सौभाग्यस्य रमणीयतायाः गुरुराचार्यं विधातेत्यर्थः । इन्दुभासा चन्द्रकिरणानां वैशद्यस्य निर्मलतायास्सञ्जीवनं सम्पादनकर्ता, रस एव शृङ्गाररस एव पार्थिवो राजा तस्य रसपार्थिवस्य साम्राज्यस्य पूर्णाधिपत्यस्य मन्त्री अमात्यः 'मन्त्री धीसचिवोऽमात्यः' इत्यमरः । तरूणां वृक्षाणामुच्चित्रणे चित्रतासम्पादने चित्रकरः चित्रनिर्माणकर्ता, मानोऽहङ्कार एव द्रुमो वृक्षस्तस्योन्मूलनं समुत्पाटनं तस्य कृते मत्तदन्ती मदान्धगजः, एवम्भूतः चैत्रः चैत्रमासो यस्तर्तुस्तस्य भर्तुः स्वामिनो विक्रमाङ्कदेवस्य प्रभावात् माहात्म्यात् पुनः भूयो तत्र नूतनतां नवीनतां प्रपेदे प्राप । अत्र मालारूपकमलङ्कारः ।

भाषा

इसके अनन्तर कामदेव के बाणों का बनाने वाला, कोयलों के कण्ठों में रमणीयता उत्पन्न करने वाला, चन्द्रमा के किरणों में निर्मलता लानेवाला, शृङ्गाररस रूपी राजा के साम्राज्य का मन्त्री, वृक्षों में विचित्रता पैदा करने वाला चित्रकार, मान रूपी वृक्ष को उखाड़ कर फेंक देने वाला मदोन्मत्त हाथी, चैत्र मास अर्थात् वसन्त ऋतु पति विक्रमाङ्कदेव के प्रभाव से फिर से वहाँ नवीनता को प्राप्त हुआ । अर्थात् विक्रमाङ्कदेव सदृश पति के मिलने से वसन्तऋतु की सम्भोग की सब सामग्री नूतन रूपमें प्रकट हुई ।

जगज्जयार्थं स्मरपार्थिवेन नीतश्चमूनायकतां वसन्तः ।
वातोच्छलच्चम्पकचक्रभङ्ग्या त्यागीव हेमप्रकरैर्ववर्ष ॥१०॥

अन्वयः

स्मरपार्थिवेन जगज्जयार्थं चमूनायकतां नीतः वसन्तः त्यागी इव वातोच्छलच्चम्पकचक्रभङ्ग्या हेमप्रकरैः ववर्ष ।

व्याख्या

स्मरः कामः 'कामः पञ्चशरः स्मरः' इत्यमरः । एव पार्थिवो राजा तेन स्मरपार्थिवेन जगतस्त्रैलोक्यस्य जयार्थं विजयकरणार्थं चमूनायकतां सेनानीत्वं नीतं प्रापितं वसन्तः स्वामी दानी इव वातेन वायुना उच्छलतां समुत्पततां चम्पकपुष्पाणां चक्रं समूहस्तस्य भङ्गिर्व्याजस्तया 'व्याजच्छलनिभे भङ्गिः' इति रभसः । वातोच्छलच्चम्पकचक्रभङ्ग्या हेमप्रकरं सुवर्णसमूहं ववर्ष वृष्टवान् । चम्पकपुष्पस्यापि पीतवर्णत्वात् । अत्र रूपकात्थापिता कैतवापह्नुतिरलङ्कारः ।

भाषा

कामराज के द्वारा जगत् पर विजय पाने के लिये सेनापतित्व को प्राप्त कराए हुए अर्थात् सेनापति बनाए हुए वसन्त ऋतु ने दानी के समान, वायु से उड़ उड़ कर नीचे गिरने वाले चम्पे के पीले फूलों के मिष से मानो सुवर्णसमूह की वर्षा की ।

किञ्जल्कपुञ्जैः परिपिञ्जरासु दिक्षु प्रसूनप्रसरप्रसूतैः ।
दिवापि जाम्बूनदभूषणानां लीलाभिसारः सुदृशां बभूव ॥११॥

अन्वयः

प्रसूनप्रसरप्रसूतैः किञ्जल्कपुञ्जैः परिपिञ्जरासु दिक्षु दिवा अपि जाम्बूनदभूषणानां सुदृशां लीलाभिसारः बभूव ।

व्याख्या

प्रसूनानां पुष्पाणां प्रसरात्समूहात्तैः प्रसूताः समुत्पन्नास्तैः प्रसूनप्रसरप्रसूतैः किञ्जल्कानां केसराणां 'किञ्जल्कः केसरोऽस्त्रियाम्' इत्यमरः । पुञ्जास्समूहास्तैः किञ्जल्कपुञ्जैः परिपिञ्जरासु पिङ्गलीकृतासु दिक्षु काष्ठासु 'दिशस्तु ककुभः काष्ठाः' इत्यमरः । दिवापि दिनेऽपि जाम्बूनदस्य सुवर्णस्य 'रुक्मं कार्तस्वरं जाम्बूनदं' इत्यमरः । भूषणान्यलङ्कारा यासां तास्तासां सुदृशां सुनयनानां लीलया विलासेनाभिसारोऽभिसरणं प्रियतमोपेऽभियानं बभूव सम्पन्नम् । पिङ्गलवर्णासु दिक्षु जातासु सुवर्णालङ्कारभूषितायाः हेमसमानाङ्गवर्णाया नायिकायाः पाण्डवेनाऽभिव्यक्तिर्न जातेति भावः । अत एव सामान्यालङ्कारः ।

भाषा

पीले फूलों के गिरने से निकले पीली पुष्पधूलि के समूहों से सब दिशाओं के पीली पड़ जाने पर दिन में भी सुवर्ण के आभूषणों से युक्त सुनयनी ललनाओं

का क्रीडा युक्त अभिसरण (अपने प्रेमी के पास छिपकर जाना) हुआ करता था। अर्थात् दिशाओं के पीतवर्ण हो जाने से सोने का पीलापन उसमें मिल जाने से उन्हें छिपकर अपने प्रिय के पास जाने में कोई अड़चन नहीं होती थी।

मग्नं मधुस्रोतसि कर्दमाभे पदं समुद्धर्तुमपारयन्ती।
अजस्रमाक्रन्दनिभैर्विरावैर्मधुव्रती षट्पदमाजुहाव ॥१२॥

अन्वयः

कर्दमाभे मधुस्रोतसि मग्नं पदं समुद्धर्तुम् अपारयन्ती मधुव्रती अजस्रम् आक्रन्दनिभैः विरावैः षट्पदम् आजुहाव।

व्याख्या

कर्दमस्य पङ्कस्याऽऽभासदृशी कान्तिस्तद्रूपाऽऽभा कान्तिस्स्वरूपं वा यस्य तत् तस्मिन् कर्दमाभे मधुस्रोतसि पुष्परसप्रवाहे मग्नं सपतितं पदं चरणं समुद्धर्तुं समाकृष्टुमपारयन्ती अशक्नुवाना मधुव्रती भ्रमराङ्गनाऽजस्रं निरन्तरं 'नित्यानवरताजस्रमपि' इत्यमरः। आक्रन्दनिभैरार्तनादसदृशैर्विरावैर्गुञ्जनशब्दैः षट्पदं भ्रमरं 'षट्पदभ्रमरालयः' इत्यमरः। आजुहाव आकारितवती। अत्र भ्रमर्यां नायिका व्यवहारसमारोपात्समासोक्तिरलङ्कारः।

भाषा

कीचड़ के समान पुष्परस के प्रवाह में फंसे हुए अपने पांव को निकाल लेने में असमर्थ भ्रमरी, बार बार रोने के से शब्दों से भ्रमर को (अपनी सहायता के लिये) बुलाती थी।

निरुध्य रन्ध्रं मधुपूरितस्य पुष्पस्य लोभाद्भ्रमरोऽवतस्थे।
अन्येन मार्गेण पपुस्तदन्ये [1]लुब्धैर्जनानामयमेव मार्गः ॥१३॥

अन्वयः

भ्रमरः लोभात् मधुपूरितस्य पुष्पस्य रन्ध्रं निरुध्य अवतस्थे। अन्ये अन्येन मार्गेण तत् पपुः लुब्धैः जनानाम् अयम् एव मार्गः।

व्याख्या

भ्रमरः द्विरेफः 'द्विरेफपुष्पलिड्भृङ्गषट्पदभ्रमरालयः' इत्यमरः। लोभात् मधुपानलोभात् मधुपूरितस्य मकरन्दपूर्णस्य पुष्पस्य कुसुमस्य रन्ध्रं प्रवेशद्वार

---

[1] 'लब्धार्जनानामयमेव मार्गः' पाठोऽप्य चिन्त्यः।

निरुध्यावरुध्य अवतस्थे स्थितवान्। (एतद्दृष्ट्वा) अन्ये तस्मादितरे भृङ्गाः अन्येन भिन्नेन मार्गेण रन्ध्रेण तत् मधुरसं पयः पीतवन्तः। लुब्धैः लोभान्वितैः जनैस्सह जनानाम् अयमेव मार्गः व्यवहारो रीतिर्वा क्रियमाणो भवति। लोभाद्यदि कश्चित्केनापि मार्गेण सर्वं धनं गृह्णाति ग्रहीतुमिच्छति वा तर्हि अन्ये चतुरजना अन्यं गुप्तमार्गमन्विष्य तेनैव पथा स्वकार्यं साधयन्तीति भावः। अत्रार्थान्तरन्यासोऽलङ्कारः।

### भाषा

एक भौंरा लोभ से पराग भरे फूल के मुख को रोक कर बैठ गया। (यह देख कर) दूसरे भौंरे दूसरे मार्ग से पुष्प रस का पान करने लगे। लोभियों के साथ अन्य पुरुषों का ऐसा ही व्यवहार होता है। अर्थात् यदि कोई पुरुष लोभ से सब हमीं को मिले ऐसी इच्छा से धन लेने में प्रवृत्त होता है तो उसे देखकर अन्य लोग उसमें हिस्सा लगाने का मार्ग ढूंढ निकालते हैं।

**श्रीखण्डसंसक्तिभुजङ्गराज-विषोष्मणा क्लान्तिमिव प्रपद्य।**
**दरीमुखैर्निःश्वसितुं प्रभूतैः क्रमात्प्रवृत्तो मलयाचलेन्द्रः ॥१४॥**

### अन्वयः

मलयाचलेन्द्रः श्रीखण्डसंसक्तिभुजङ्गराजविषोष्मणा क्लान्तिं प्रपद्य प्रभूतैः दरीमुखैः क्रमात् निश्वसितुं प्रवृत्तः इव।

### व्याख्या

मलयाचलेन्द्रः मलयपर्वतश्रेष्ठः श्रीखण्डे चन्दने द्रुमे संसक्तिनो भुजङ्गराजाः सर्पश्रेष्ठाः तेषां विषस्योष्मणा सन्तापेन क्लान्तिं म्लानतां प्रपद्य संप्राप्य प्रभूतैः प्रचुरैः 'प्रभूत प्रचुर प्राज्यमदभ्र' इत्यमरः। दरीमुखैः कन्दराननैः 'दरी तु कन्दरो वा स्त्री' 'आननं लपनं मुखम्' उभयत्र चामरः। क्रमात् शनैः २ निश्वसितुं निश्वासं बहिर्निस्सारयितुं प्रवृत्त इव समुद्युक्त इव। अत्र हेतूत्प्रेक्षाऽलङ्कारः। सा च व्यञ्जकाप्रयोगाद्गम्या।

### भाषा

श्रेष्ठ मलयाचल, चन्दन के वृक्षों पर रहने वाले बड़े बड़े सांपों के विष की गर्मी से खिन्न होकर मानों अनेक कन्दरा रूपी मुखों से धीरे २ सांस लेने लगा। अर्थात् मलयाचल से मलयवायु बहने लगी।

सर्वं दिनं भूमिगृहेष्वतिष्ठद् बाधिर्ययोगं मुहुराचकाङ्क्ष ।
पिकाङ्गनापञ्चमपीड्यमानश्चकार किं किं न वियोगिवर्गः ॥१५॥

अन्वयः

वियोगिवर्गः पिकाङ्गनापञ्चमपीड्यमानः (सन्) सर्वं दिनं भूमिगृहेषु अतिष्ठत् बाधिर्ययोगं मुहुः आचकाङ्क्ष किं किं न चकार ।

व्याख्या

वियोगिनां विरहिणां वर्गः समूहः वियोगिवर्गः पिकाङ्गनानां कोकिलकामिनीनां पञ्चमस्वरस्तेन पीड्यमानः सन्ताप्यमानस्सन् विरहेणासह्यत्वात् सर्वं दिनं सम्पूर्णदिवसं यावत् भूमिगृहेषु भूम्यन्तःस्थितगृहेषु अतिष्ठत् निवासं चकार येन पिकस्वरस्य श्रवणं न स्यात् । अतएव श्रवणं माभूदिति हेतोः बाधिर्ययोगं श्रवणशक्त्यभावयोगं मुहुर्वारम्वारं आचकाङ्क्ष इयेष । किं किं उपायकार्यं न चकार । तदर्थमन्येऽपि बहव उपायाः कृता इति भावः ।

आक्रन्दपरम्पराभिः पतिवियोगजन्यसन्तापदुःखेन समुत्पन्नार्तनादसंघातैः कोकिलकूजितानां पिकनिनादानां संवर्धनमाधिक्यं चक्रुः कृतवत्यः । कोकिलकण्ठीनां नारीणां शब्दं कोकिलाः स्वजातीयकोकिलशब्दमनुमीय मुहुः रुवन्ति स्मेति भावः । विषादननामालङ्कारः ।

### भाषा

आश्चर्य की बात है कि कामदेव के सहायक मित्र ने विरहिणियों की बुद्धि का नाश कर दिया क्योंकि उन्होंने विरह के दुःख से रो २ कर कोयल के शब्दों को और अधिक बढ़ा दिया। अर्थात् कोयल के शब्द के समान शब्दवाली उन स्त्रियों के रोने के शब्दों को सुन २ कर कोकिलाएं उनको कोयल के शब्द समझ और अधिक बोलने लगीं।

कामस्य कश्चिच्चतुरः शरांश्चेद् विलङ्घयामास कथञ्चिदन्यान् ।
उन्मज्जता कोकिलकण्ठयन्त्रात् स पञ्चमास्त्रेण वशीबभूव ॥१७॥

### अन्वयः

कश्चित् चतुरः कामस्य अन्यान् चतुरः शरान् कथञ्चित् विलङ्घयामास चेत् (तर्हि) सः कोकिलकण्ठयन्त्रात् उन्मज्जता पञ्चमास्त्रेण वशीबभूव ।

### व्याख्या

कश्चिद्विरहीजनः चतुरः प्रवीणः कामस्य मदनस्य अन्यान् इतरान् चतुरः शरान् बाणान् 'पृषत्कबाणविशिखा अजिह्मगखगाशुगाः । कलम्बमार्गणशराः' इत्यमरः ।' कथञ्चित् येनापि प्रकारेण विलङ्घयामास, अतिचक्राम अवगणयाञ्चकार चेद्यदि, तर्हि, सः कश्चिच्चतुरोजनः कोकिलकण्ठ एव यन्त्रं तस्मात् उन्मज्जता उद्गच्छता पञ्चमास्त्रेण पञ्चमबाणेन पिकस्य पञ्चमस्वरेण वशीबभूव कामोन्मत्तो बभूव । कविनाऽत्र शरशब्देन पञ्चशृङ्गारोद्दीपनविभावा एव गृहीताः । तेषामपि कामशरत्वोपचारकत्वात् । वस्तुतस्तु 'अरविन्दमशोकं च चूतं च नवमल्लिका । नीलोत्पलं च पञ्चैते पञ्चबाणस्य सायकाः ।' इति । कोकिलकूजितस्य कामास्त्रमजेयमस्तीति तात्पर्यम् ।

### भाषा

कोई चतुर वियोगी कामदेव के अन्य चार शरों को किसी प्रकार भले ही टाल दे परन्तु कोयल के कण्ठरूपी यन्त्र से निकलने वाले पञ्चमस्वर से तो

वह वशीभूत हो ही जाता है। कवि ने यहाँ शृङ्गार रस के पाँच उद्दीपन विभावों को ही शर शब्द से प्रयुक्त किया है। यथार्थ में कामदेव के सफेद कमल, अशोकपुष्प, आम्रपुष्प, नवमल्लिका और नीलकमल ये ही पाँच बाण कहे गये हैं।

अथ श्रमं स्निग्धविलोकनेन चैत्रस्य कुर्वन्सफलं नरेन्द्रः।
विवेश देव्याः परिगृह्य पाणिं चित्रासु लीलोपवनस्थलीषु ॥१८॥

**अन्वयः**

अथ नरेन्द्रः स्निग्धविलोकनेन चैत्रस्य श्रमं सफलं कुर्वन् देव्याः पाणिं परिगृह्य चित्रासु लीलोपवनस्थलीषु विवेश।

**व्याख्या**

अथैतदनन्तरं नरेन्द्रो विक्रमाङ्कदेवः स्निग्धं प्रेमार्द्रं यद्विलोकनमवलोकनं तेन स्निग्धविलोकनेन चैत्रस्य चैत्रमासस्य श्रमम् उद्यानाविप्रसाधनपरिश्रमं सफलं कृतार्थं कुर्वन् रचयन् देव्याः चन्दलदेव्याः पाणिं हस्तं परिगृह्य समादाय स्वहस्तेने स्पर्शं। चित्रासु आश्चर्यमयीषु लीलोपवनस्थलीषु विलासोद्यानस्थलीषु 'आरामः स्यादुपवनं कृत्रिमं वनमेव यत्' इत्यमरः। विवेश प्रविष्टवान्। चैत्रे सेवक-व्यवहारसमारोपात् अत्र समासोक्तिरलङ्कारः।

**भाषा**

इसके अनन्तर राजा विक्रमाङ्कदेव, प्रेम भरी दृष्टि से चैत्र मास के बागों को पुष्पादि से सुन्दर बनाने के परिश्रम को सार्थक करता हुआ, चन्दलदेवी का हाथ पकड़ कर, रंग बिरंगे फूलों से युक्त विहार वाटिकाओं में प्रविष्ट हुआ।

इतस्ततः सस्पृहमीक्षमाणो मृगेक्षणां तामथ कुन्तलेन्दुः।
जगाद कन्दर्पधनुर्निनाद-प्रतिस्वनभ्रान्तिकृता स्वरेण ॥१९॥

**अन्वयः**

अथ कुन्तलेन्दुः तां मृगेक्षणाम् इतः ततः सस्पृहम् ईक्षमाणः कन्दर्पधनुर्निनादप्रतिस्वनभ्रान्तिकृता स्वरेण जगाद।

**व्याख्या**

अथैतदनन्तरम् कुन्तलदेशस्येन्दुश्चन्द्रः कुन्तलेन्दुः विक्रमाङ्कदेवः तां मृगेक्षणां हरिणनयनां चन्दलदेवीम् इतस्ततः सर्वतः सस्पृहं साभिलाषं यथास्यात्तथा

ईक्षमाणः पश्यन् सन् कन्दर्पस्य कामस्य धनुः शरासनं 'धनुश्चापौ धन्वशरासन-कोदण्डकार्मुकम्' इत्यमरः। तस्य निनादो ध्वनिः "शब्दे निनादनिनदध्वनि-ध्वानरवस्वनाः", इत्यमरः। तस्य प्रतिस्वनः प्रतिध्वनिः तस्य भ्रान्ति भ्रमं करोतीति कन्दर्पधनुर्निनादप्रतिस्वनभ्रान्तिकृत् तेन कामधनुस्स्वनसदृशेन स्वरेण जगादोक्तवान्।

भाषा

इसके अनन्तर उस चन्दलदेवी के अङ्ग प्रत्यङ्ग को बड़ी उत्कण्ठा से देखने वाले कुन्तल देश के चन्द्र विक्रमाङ्कदेव ने कामदेव के धनुष के शब्द की प्रतिध्वनि का सन्देह उत्पन्न करने वाले अपने मधुर स्वर से कहा।

**सुगात्रि कच्चित्तव नेत्रमैत्रीं चैत्रः प्रसूते रतिजन्मभूमिः।**
**यस्य श्रिया त्वद्वपुषश्च लक्ष्म्या माद्यन्न किञ्चिद्गणयत्यनङ्गः॥२०॥**

अन्वयः

हे सुगात्रि रतिजन्मभूमिः चैत्रः तव नेत्रमैत्रीं प्रसूते कच्चित्। यस्य श्रिया त्वद्वपुषः लक्ष्म्या च माद्यत् अनङ्गः किञ्चित् न गणयति।

व्याख्या

हे सुष्ठु सुन्दरं गात्रं शरीरं 'गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः' इत्यमरः। यस्यास्सा सुगात्री तत्सम्बोधने हे सुगात्रि रतेः कामक्रीडाविलासस्य जन्मभूमि-रुत्पादकः चैत्रः चैत्रमासः तव भवत्या नेत्रयोश्चक्षुषोर्मैत्रीं स्नेहं नयनानन्दमित्यर्थः प्रसूते जनयति कच्चित् किम् "कच्चित् कामप्रवेदने" इत्यमरः। चैत्रो वसन्त-सम्पादितशोभः तव मनसि प्रमोदं जनयति किमित्यर्थः। यस्य चैत्रस्य श्रिया शोभया त्वद्वपुषस्तव देहस्य लक्ष्म्या कान्त्या च माद्यन्मत्तोऽनङ्गः कामः किञ्चित् न गणयति किमप्यकरणीयं न विचारयति। चैत्रप्रीतदेहकान्तिभ्यां सर्वं वशयत्वेन साध्यमिति भावः।

भाषा

हे सुन्दर शरीर वाली! क्या कामक्रीडा का जन्मस्थान यह चैत्रमास अर्थात् वसन्त तुम्हारे नेत्रों को आनन्दित करता है? जिस वसन्त की शोभा से और तुम्हारे शरीर की कान्ति से उन्मत्त बना हुआ यह कामदेव किसी भी कार्य को न कर सकने की कल्पना ही नहीं करता है। अर्थात् उसके लिये सब साध्य ही है।

अधिष्ठिता मन्मथपार्थिवेन द्रष्टुं मुदा चैत्रचमूसमूहम् ।
आलोकनेन क्रियतां कृतार्था बाले विलासोपवनस्थलीयम् ॥२१॥

अन्वयः

हे बाले मन्मथपार्थिवेन चैत्रचमूसमूहं मुदा द्रष्टुम् अधिष्ठिता इयं विलासोपवनस्थली आलोकनेन कृतार्था क्रियताम् ।

व्याख्या

हे बाले चन्द्रलेखे ! मन्मथपार्थिवेन कामनृपेण चैत्रस्य वसन्तमासस्य 'स्याच्चैत्रे चैत्रिको मधुः' इत्यमरः । चमूसमूहं सेनासमूहं 'ध्वजिनी वाहिनी सेना पृतनानीकिनी चमूः' इत्यमरः । पुष्पादिसमृद्धिमित्यर्थः । मुदाऽऽनन्देन द्रष्टुमवलोकितुम् अधिष्ठिता समाश्रिता इव प्रत्यक्षं वर्तमाना विलासोपवनस्थली क्रीडार्थोद्यानस्थली आलोकनेन स्वकर्तृकदर्शनेन कृतार्था सफला क्रियतां विधीयताम् ।

भाषा

अरे किशोरी ! हर्षपूर्वक चैत्र के अर्थात् वसन्त के सेनासमूह अर्थात् पुष्पादिसमृद्धि को देखने के लिये आए हुए कामराज से अधिष्ठित इस क्रीडा की बाग को देखकर उसे कृतार्थ बनाओ ।

कन्दर्पलीलाजयराजधानि मधुव्रतानां मधुरैर्विरावैः ।
आभाषते संमुखमागतायाः पूर्वाभिभाषीव तवैष चैत्रः ॥२२॥

अन्वयः

हे कन्दर्पलीलाजयराजधानि ! एषः चैत्र मधुव्रतानां मधुरैः विरावैः संमुखम् आगतायाः तव पूर्वाभिभाषी आभाषते इव ।

व्याख्या

कन्दर्पस्य कामस्य लीलाया सर्वजनवशीकरणरूपस्य कार्यस्य जयो विज[illegible] स्तस्य राजधानी मुख्यस्थानं तत्सम्बोधनं हे कन्दर्पलीलाजयराजधानि ! [illegible] चैत्रमासो मधुमासः मधुव्रतानां मधुकराणां 'मधुव्रतो मधुकरो मधुलिट्[illegible] प्रालिनः' इत्यमरः । विराव शब्दः 'आरवारावसंरावविरावाः' इत्यम[illegible] करणे तृतीया । संमुखं चैत्रस्य समक्षमागतायाः समुपस्थितायास्तव भ[illegible] पूर्वं प्रथममेवाभिभाषते वदति इति पूर्वाभिभाषी आभाषते । इव [illegible]

स्वागतं करोतीवेतिभावः । एते न मधुकराणां विरावाः किन्तु चैत्रस्य त्वया सह वार्तासंलापशब्दा इति भावः । अत्रोत्प्रेक्षालङ्कारः ।

### भाषा

हे कामदेव का प्राणियों को वश में करने के विजय का मुख्य स्थान रूप चन्दलदेवी ! यह चैत्रमास अर्थात् वसन्त, भौंरों की गुंजारों से मानों सामने आई हुई तेरी प्रथम सभाषण कर अगवानी कर रहा है। अर्थात स्वागत कर रहा है।

लास्यं त्वयि प्रेक्षितुमागतायां लतापुरन्ध्यः कुसुमैः पतद्भिः ।
मृगाक्षि लीलावनरङ्गपीठे पुष्पाञ्जलिक्षेपमिवोद्वहन्ति ॥२३॥

### अन्वयः

हे मृगाक्षि त्वयि लीलावनरङ्गपीठे लास्यं प्रेक्षितुम् आगतायां (सत्याम्) लतापुरन्ध्यः पतद्भिः कुसुमैः पुष्पाञ्जलिक्षेपम् उद्वहन्ति इव ।

### व्याख्या

हे मृगाक्षि हे मृगनयने चन्द्रलेखे ! त्वयि भवत्यां लीलाया विलासस्य वनमेव रङ्गपीठो रङ्गस्थलं तस्मिन् लीलावनरङ्गपीठे लास्यं लतानर्तकीनृत्यं 'लास्यं नृत्यं च नर्तनं' इत्यमरः । प्रेक्षितुं द्रष्टुम् आगतायां समुपस्थितायां सत्यां लता एव पुरन्ध्र्यः नर्तक्यः पतद्भिरधोगच्छद्भिः कुसुमैः पुष्पैः पुष्पाञ्जलिक्षेपं कुसुमाञ्जलिविक्षेपमुद्वहन्ति इव धारयन्ति कुर्वन्तीवेत्यर्थः । नर्तक्यो रङ्गमञ्चे पुष्पाञ्जलिविक्षेपपूर्वकं नृत्यं कुर्वन्तीति रीतिः प्रसिद्धा लोके । अत्रोत्प्रेक्षालङ्कारः ।

### भाषा

हे मृगनयनी ! विहारवाटिका रूपी रङ्गमञ्च पर स्त्री का नाच देखने के लिये तुम्हारे आने पर लता रूपी स्त्रियाँ गिरने वाले फूलों से मानों (रङ्गमञ्च पर) पुष्पाञ्जलियाँ छोड़ रही हैं।

अशोकशाखी निखिलद्रुमेषु धन्यस्त्वया पादतलाहतोऽयम् ।
तेषां प्रसन्नो हि विलासबाणः क्रीडन्ति दासैरिव यैर्मृगाक्ष्यः ॥२४॥

अन्वयः

निखिलद्रुमेषु त्वया पादतलाहतः अयम् अशोकशाखी धन्यः। हि मृगाक्ष्यः दासैः इव यैः क्रीडन्ति तेषां विलासबाणः प्रसन्नः।

व्याख्या

निखिलद्रुमेषु सकलवृक्षेषु मध्ये त्वया भवत्या पादतलेन चरणतलेनाऽऽहतः सताडितः अयम् अशोकशाखी अशोकवृक्ष धन्य प्रशंसनीयः। हि मृगाक्ष्यः मृगनयनाः दासैर्भृत्यैः 'भृत्ये दासेय दासेरदासगोप्यकचेटकाः' इत्यमरः। इव यैः वृक्षादिभिः सह पुरुषैर्वा क्रीडन्ति क्रीडां कुर्वन्ति तेषां वस्तूनां जनानां चोपरि विलासबाणः कामः प्रसन्नो भवति। अशोकवृक्षः कामिनीपादाहतो विकसतीति कविप्रसिद्धिः।

भाषा

समग्र वृक्षों में यह अशोक का वृक्ष तुम्हारे पाँव से ताडित होने से धन्य है। क्यों कि मृगनयनियाँ दासों के समान जिनके (वृक्षों या मनुष्यों के) साथ खेला करती हैं उन पर कामदेव प्रसन्न होता है। कामिनी की लात के मारने से अशोक वृक्ष फूलने लगता है ऐसी कविप्रसिद्धि है।

अरोचकी पादपजातिमध्ये जाने नितान्तं बकुलद्रुमोऽयम्।
चैत्रेऽपि यः पुष्पविकासहेतोर्गण्डूषमाकाङ्क्षति ते मृगाक्षि ॥२५॥

अन्वयः

हे मृगाक्षि अयं बकुलद्रुमः पादपजातिमध्ये नितान्तम् अरोचकी (इत्यहम्) जाने। यः अपि चैत्रे पुष्पविकासहेतोः ते गण्डूषम् आकाङ्क्षति।

व्याख्या

हे मृगाक्षि मृगनयने अयं पुरोवर्ती बकुलद्रुमो बकुलवृक्षः पादपानां द्रुमाणां 'विटपी पादपस्तरु' इत्यमरः। जातिस्तेषां मध्ये पादपजातिमध्येऽखिलसकलद्रुमाणां मध्ये नितान्तमत्यन्तम् अरोचकी यस्मै किञ्चिदपि न रोचते तादृशरोगवान् इत्यहं जाने मन्ये। यः बकुलोऽपि चैत्रे वसन्तमासे पुष्पविकासहेतोः कुसुमानां विकासार्थं ते भवत्या गण्डूषं मुखस्थितमद्यादिकं 'गण्डूषो मुखपूर्तोन्मिः पुष्करप्रसृताञ्जलिः' इति वचः। आकाङ्क्षति अभिलषति। बकुलवृक्षः कामिनी-

गण्डूषेण विकसतीति कविप्रसिद्धिः। अरोचकित्वस्य चिकित्साऽपि गण्डूषविशेषेण भवतीति ध्येयम्।

भाषा

हे मृगनयनी! वृक्ष जाति में अर्थात् सम्पूर्ण वृक्षों में यह मौलसरी का पेड़ अत्यन्त रुचि हीन है यह मैं जानता हूँ। (स्वाद बिगड़ने का–रोग वाला है)। (परन्तु) वह भी चैत्र में खूब फूल हो इस रुचि से, तुम्हारे मुख में भरी सुरा के गण्डूष की–अभिलाषा करता है। मौलसरी के वृक्ष पर–कामिनी के मुख की शराब का कुल्ला पड़ने से–मौलसरी का वृक्ष फूलने लगता है ऐसी कविप्रसिद्धि है।

**एकत्र तस्मिन्मदने सकोपं देवेन दग्धे पुरसूदनेन।**
**इयं मधुश्रीस्त्वमिवोद्विकासान् मुहुः सहस्रं मदनान्विधत्ते ॥२६॥**

अन्वयः

एकत्र पुरसूदनेन देवेन तस्मिन् मदने सकोपं दग्धे (सति) त्वम् इव इयं मधुश्रीः उद्विकासान् सहस्रं मदनान् विधत्ते।

व्याख्या

एकत्रैकस्थाने शिवसमाधिस्थले कैलासे वा पुरसूदनेन त्रिपुररिपुणा देवेन शिवेन तस्मिन्मदने कामे सकोपं सक्रोधं 'कोपक्रोधामर्षरोष' इत्यमरः। दग्धे भस्मीकृते सति त्वम् भवती (चन्द्रलेखा) इव इयं मधुश्रीर्वसन्तलक्ष्मीः उद्गतः विकासः पुष्पपल्लवविकसनं येषु ते तान् उद्विकासान् मदनान् तन्नामकवृक्षान् 'अल्पा शमी शमीरः स्याच्छमी सक्तुफला शिवा। पिण्डीतको मरुबकः श्वसनः करहाटकः। शल्यश्च मदने' इत्यमरः। सहस्रं सहस्रसंख्याकान् अन्यत्रोद्गतो विकासः प्रभावो येषां तान् मदनान् कामान् विधत्ते रचयति।

भाषा

कैलास पर्वत पर महादेव के द्वारा क्रोध से कामदेव अर्थात् मदन के एक स्थान पर भस्म कर दिये जाने पर तुम्हारे समान इस वसन्त की शोभा ने हजारों फूल और फलों से युक्त मदन नाम के वृक्षों को अन्यत्र चारों ओर फैले हुए प्रभाव वाले मदनों को अर्थात् कामदेवों को उत्पन्न कर दिया है।

तवाङ्गवल्लीकुसुमैर्विलासैरवैमि कामो ह्रियमाणनेत्रः ।
चैत्रार्पितं नूतनमस्त्रजातं संधातुकामोऽपि न संदधाति ॥२७॥

अन्वयः

कामः तव विलासैः अङ्गवल्लीकुसुमैः ह्रियमाणनेत्रः सन् चैत्रार्पितं नूतनम् अस्त्रजातं संधातुकामः अपि न संदधाति (इत्यहम्) अवैमि ।

व्याख्या

कामः मदनः तव चन्द्रलेखायाः विलासैः विलासयुक्तैः अङ्गान्येव वल्ल्यो लता 'वल्ली तु व्रततिर्लता' इत्यमरः । तासां कुसुमानि पुष्पाणि तैः, अथवा लतास्थानापन्नया शरीरयष्ट्या कुसुमस्थानेऽङ्गानि । ह्रियमाणे समाकृष्टे लज्जिते वा नेत्रे यस्य सः ह्रियमाणनेत्रः सन्–चैत्रेण अर्पितं प्रदत्तं नूतनं नवीनमस्त्राणां शस्त्राणां बाणानां जातं समूहं संधातुं कामोऽभिलाषो 'कामोऽभिलाषस्तर्षश्च' इत्यमरः । यस्य सः संधातुकामः, लक्ष्येषु स्थिरीकर्तुमिच्छन्नपि न संदधाति लक्ष्येषु प्रहारार्थं सुसज्जितं न करोति । इत्यहं अवैमि जाने । तवाङ्गवल्लीकुसुमैरेव कामस्य शरसन्धानहेतुकं कार्यं कृतमिति भावः । अत्र रूपकालङ्कारः ।

भाषा

कामदेव ने तुम्हारे शरीर रूपी लता के अङ्ग-प्रत्यङ्गरूपी फूलों को देखकर या उनसे लज्जित होकर वसन्तऋतु के द्वारा दिये गये नये-नये (फूलरूपी) बाणों के समूह को लक्ष्य पर मारने की इच्छा रहते हुए भी नहीं मारा । अर्थात् तुम्हारे अङ्ग प्रत्यङ्ग रूपी फूलों से ही उसका बाण मारने का काम सिद्ध हो गया । अर्थात् तुम्हारे अङ्ग प्रत्यङ्ग ही कामोन्मादक है ।

गुणं दधाने मधुनार्प्यमाणं मनस्विनीमानसभेददक्षे ।
शिलीमुखश्रेणिरुपैति सद्म पुष्पे च कन्दर्पशरासने च ॥२८॥

अन्वयः

शिलीमुखश्रेणिः मनस्विनीमानसभेददक्षे मधुना अर्प्यमाणं गुणं दधाने च पुष्पे कन्दर्पशरासने च सद्म उपैति ।

व्याख्या

शिली शल्यं मुखे वदनेऽग्रभागे वा येषां ते शिलीमुखाः बाणा भ्रमरा वा 'अलिबाणौ शिलीमुखौ' इत्यमरः। तेषां श्रेणिः पंक्तिः शिलीमुखश्रेणिः मनस्विनां मानिनां धैर्यवतामपि मानसस्य चेतसो भेदश्चाञ्चल्योत्पादनं कामार्तत्व तस्मिन् दक्षे निपुणे तस्मिन् मानसभेददक्षे मधुना चैत्रमासेन मकरन्देन वा 'मधु क्षौद्रे जले क्षीरे मद्ये पुष्परसे मधुः। दैत्ये चैत्रे वसन्ते च' इति विश्वः। अर्प्यमाणे दीयमानं गुणं सौरभादि ज्याञ्च 'मौर्व्यां द्रव्याश्रिते सत्त्वशुक्लसन्ध्यादिके गुणः' इत्यमरः। दधाने बिभ्रति च पुष्पे कुसुमे कन्दर्पस्य कामस्य शरासने धनुषि च सङ्गं संसर्गमुपैति प्राप्नोति। अत्र श्लेषोत्थापितः पर्यायालङ्कारः।

भाषा

भौरों की पक्ष में बाणों की पंक्तियाँ, धीर पुरुषों के मन को बेधने में निपुण, पुष्परस से दिये हुए सुगन्धादि गुण को रखनेवाले पक्ष में वसन्त के द्वारा समर्पित धनुष की डोरी वाले, फूल में और धनुष में सङ्गति को प्राप्त होती हैं। अर्थात् कामदेव के फूलों के बाण वसन्त द्वारा अर्पित फूलों की ज्या से युक्त फूलों के बने कामदेव के धनुष का सङ्ग प्राप्त करते हैं। पक्ष में भ्रमर पंक्ति मनस्वियों के मन को हरण करने वाले और पुष्परस की सुगन्ध रखने वाले फूल तथा फूल के बने कामदेव के धनुष पर जा बैठती हैं।

पुंस्कोकिलस्ते मधुमासलक्ष्म्या गान्धर्वसर्वस्वविशारदायाः।
प्रकाशितुं शिष्य इवैष पश्य रागं मुहुः पञ्चममातनोति ॥२९॥

अन्वयः

मधुमासलक्ष्म्याः एषः पुंस्कोकिलः गान्धर्वसर्वस्वविशारदायाः ते (पुरः) शिष्यः इव प्रकाशितुं पञ्चमं रागं मुहुः आतनोति, पश्य।

व्याख्या

मधुमासस्य चैत्रमासस्य 'स्याच्चैत्रे चैत्रिको मधुः' इत्यमरः। लक्ष्मीः शोभा तस्याः मधुमासलक्ष्म्याः वसन्तज एषः पुंस्कोकिलः पिकः गन्धर्वाणां विद्याधराणां 'विद्याधराप्सरो-यक्ष-रक्षो-गन्धर्व-किन्नराः' इत्यमरः। इदं गान्धर्वं रागीतं तस्य सर्वस्वं सारभूतं वस्तु शास्त्रं तस्मिन्विशारदा प्रवीणा तस्याः गान्धर्वसर्वस्वविशारदायाः ते पुरः शिष्य इव छात्र इव प्रकाशितुं स्वपरीक्षादानाय पञ्चमं रागं स्वरं मुहुर्वारम्वारम् आतनोति विस्तारयति पश्य विलोकय। अत्रोत्प्रेक्षालङ्कारः।

भाषा

देखो वासन्ती शोभा में का यह कोयल मानो तुम्हारा शिष्य बनकर संगीत शास्त्र में निपुण तुम्हारे सामने परीक्षा देने के लिये बार बार पञ्चमस्वर को अलापता है।

मधुश्रिया चन्द्रमुखि त्वया च सनाथतामेति विलासचापः ।
अभूदनङ्गस्तु समक्षमस्याः पूर्णाङ्गमेनं भवती करोति ॥३०॥

अन्वयः

हे चन्द्रमुखि विलासचापः मधुश्रिया त्वया च सनाथताम् एति । अस्याः समक्षं तु अनङ्गः अभूत् भवती एनं पूर्णाङ्गं करोति ।

व्याख्या

चन्द्र इव मुखं यस्याः सा तत्सम्बोधने हे चन्द्रमुखि ! विलास एव स्त्रीणां विभ्रम एव चापः धनुर्यस्य 'धनुश्चापौधन्वशरासनकोदण्डकार्मुकम्' इत्यमरः । स विलासचापः कामः मधुश्रिया वसन्तलक्ष्म्या त्वया चन्द्रमुख्या च सनाथतामेति सत्सर्गं प्राप्नोति । फलं च मित्रं भिन्नमेव । अस्याः वासन्तशोभायाः समक्षं पुरः तु कामोऽनङ्गः स्मरनेत्राग्निना शरीररहितोऽभूत् । भवती त्वं तु एनं कामं पूर्णाङ्गं सम्पूर्णोद्दीपनसामग्रीयुक्तकरणेन बलवन्तं करोति रचयति । अत्र व्यतिरेकालङ्कारः ।

भाषा

हे चन्द्रवदनी । वासन्ती शोभा तथा तुमसे यह स्त्रियों के विलासरूपी धनुष वाला कामदेव सनाथ हो जाता है। किन्तु मधुश्री की उपस्थिति में इसको महादेव ने जला कर भस्म कर दिया था परन्तु तुम इस उद्दीपक सामग्री से सुसज्जित कर सर्वाङ्गपूर्ण बनाती हो।

कृत्वेति सूक्तैः सरसैः प्रियायाः कर्णावतंसं पुनरुक्तकल्पम् ।
आरोपयामास विलासदोलां लोलेक्षणां कुन्तलचक्रवर्ती ॥३१॥

अन्वयः

कुन्तलचक्रवर्ती इति सरसैः सूक्तैः प्रियायाः कर्णावतंसं पुनरुक्तकल्पं कृत्वा लोलेक्षणां विलासदोलाम् आरोपयामास ।

### व्याख्या

कुन्तलदेशस्य चक्रवर्ती सार्वभौमः इति पूर्वोक्तैः सरसैः रमणीयैः सूक्तैः वचोभिः प्रियायाः कान्तायाश्चन्दलदेव्याः कर्णयोरवतंसं भूषणं 'पुंस्युत्तंसावतंसौ द्वौ कर्णपूरे च शेखरे' इत्यमरः। पुनरुक्तकल्पं पुनरुक्ततामिवेति पुनरुक्तकल्पम् निरर्थकप्रायम् अथवा द्वितीयकर्णभूषणमिव कृत्वा लोलेक्षणां चञ्चलनेत्रां तां विलासदोलां क्रीडादोलाम् 'दोला प्रेङ्खादिका स्त्रियाम्' इत्यमरः। आरोपयामास प्रतिष्ठापयामास।

### भाषा

कुन्तलदेश के सम्राट् ने इस प्रकार की रसभरी बातों से, अपनी प्यारी चन्दलदेवी के कान के आभूषणों को निरर्थक बनाकर या इसकी बातें रूपी आभूषणों के कान में पड़ने से उसके कानों को इन आभूषणों से शोभित बना कर, चञ्चल नेत्र वाली चन्द्रलेखा को सुन्दर झूले पर बैठाया।

**दोलाविलोलालकमुद्विलास-भ्रूवल्लिविभ्रान्तविलोचनाब्जम्।**
**उत्कीर्य कामः शरटङ्किकाभिस्तद्वक्त्रमेतस्य हृदि न्यधत्त ॥३२॥**

### अन्वयः

कामः दोलाविलोलालकम् उद्विलासभ्रूवल्लिविभ्रान्तविलोचनाब्जं तद्वक्त्रं शरटङ्किकाभिः उत्कीर्य एतस्य हृदि न्यधत्त।

### व्याख्या

कामो मदनो दोलया प्रेङ्खया 'दोला प्रेङ्खादिका स्त्रियाम्' इत्यमरः। विलोला चञ्चला अलकाश्चूर्णकुन्तला 'अलकाश्चूर्णकुन्तलाः' इत्यमरः। यस्मिंस्तत् दोलाविलोलालकम् उद्गता विलासः विभ्रमा यस्यां सा उद्विलासा या भ्रूरूपा; वल्लिर्लता तया विभ्रान्ते इतस्ततः प्रेरिते, विलोचने एव नयने एवाब्जे कमले यस्मिन् तत् तस्याश्चन्द्रलेखायाः वक्त्रं मुखं शरा-बाणा एव टङ्किकापाषाणदारणास्ताभिः शरटङ्किकाभिः बाणस्वरूपपाषाणदारणाभि 'टङ्को नीलकपित्थे च खनित्रे टङ्कनेऽस्त्रियाम्। जङ्घायां स्त्री पुमान् कोपे कोषासिप्रायदारणे' इति मेदिनी। उत्कीर्य खनित्वा एतस्य विक्रमाङ्कदेवस्य हृदि, चेतसि न्यधत्त स्थापितवान्। कामबाणेन खण्डिते तच्चेतसि सन्मुखं प्रविष्टमितिभावः।

भाषा

कामदेव ने, झूले से बिखरे बालवाले तथा विलासयुक्त भौंवो की सिकुडनो से शोभित नेत्रकमलवाले चन्द्रलेखा के मुख को अपने बाण रूपी टाँकी से विक्रमाङ्कदेव के हृदय को खोद कर उसमें जड दिया ।

**गीतं स्फुरत्पञ्चममञ्चितभ्रु विलोकितं नूपुरनिस्वनश्च ।**
**नृपाङ्गनायास्त्रयमेतदासीत् त्रैलोक्यराज्ये मदनस्य शस्त्रम् ॥३३॥**

अन्वयः

नृपाङ्गनायाः स्फुरत्पञ्चमं गीतम् अञ्चितभ्रु विलोकितं नूपुरनिस्वनः च एतत् त्रयं मदनस्य त्रैलोक्यराज्ये शस्त्रम् आसीत् ।

व्याख्या

नृपस्य विक्रमाङ्कदेवस्याङ्गनायाश्चन्द्रलेखाया स्फुरन् प्रकाशमान पञ्चमस्स्वरो यस्मिन् तत् स्फुरत्पञ्चम गीत गानम्, अञ्चिते वक्रे भ्रुवौ यस्मिन तत् अञ्चितभ्रु विलोकित दर्शनं, नूपुराणा मञ्जीराणां 'मञ्जीरो नूपुरोऽस्त्रियाम्' इत्यमर । निस्वन शब्द नूपुरनिस्वन चैतत्त्रय मदनस्य कामस्य त्रैलोक्यराज्ये त्रिभुवनराज्ये शस्त्रं बाण आसीत् । त्रैलोक्यवशीकरणास्त्रमासीदिति भाव । अत्र रूपकालङ्कार ।

भाषा

विक्रमाङ्कदेव राजा की रानी चन्द्रलेखा का पञ्चमस्वरप्रधान गायन, तिरछी भौंवो वाली नजर और पैजन का शब्द ये तीनो कामदेव के त्रिभुवन का राज्य करने में शस्त्र थे । अर्थात् तीनो लोका को अपने वश में करने के लिये ये तीनो कामदेव के शस्त्र का काम करते थ ।

**नितम्बबिम्बातिभरेण दोला यथा यथा तारतरं चुकूज ।**
**अलक्षितज्यानिनदः क्षितीन्दुं तथा तथा पुष्पधनुर्बिभेद ॥३४॥**

अन्वयः

दोला नितम्बबिम्बातिभरेण यथा यथा तारतरं चुकूज तथा तथा अलक्षितज्यानिनदः पुष्पधनुः क्षितीन्दुं बिभेद ।

### व्याख्या

दोला प्रेङ्खा नितम्बबिम्बस्य श्रोणिबिम्बस्यातिभरोऽत्यन्तभारस्तेन यथा यथा तारतर उच्चस्वरेण 'तारोऽत्युच्चैस्त्रयस्त्रिषु' इत्यमरः। चुकूज शब्दायते स्म। तथा तथा अलक्षितोऽदृश्योऽज्ञात इत्यर्थः। ज्यायाः मौर्व्याः 'मौर्वी ज्या शिञ्जिनी गुणः' इत्यमरः। निनदः शब्दो 'शब्दे निनादनिनद' इत्यमरः। यस्य स एवम्भूतः पुष्पधनुः कामः क्षितीन्दुं विक्रमाङ्कदेवं बिभेद प्रहृतवान्।

### भाषा

चन्द्रलेखा के नितम्ब बिम्ब के बोझे से झूला, ज्यों-ज्यों जोर से शब्द करता था अर्थात् झूले में शब्द होता था त्यों-त्यों जिसके मौर्वी का शब्द नहीं सुन पड़ता है अर्थात् झूले के शब्द से छिप गया है ऐसा कामदेव पृथ्वी के चन्द्र विक्रमाङ्कदेव को घायल करता जाता था।

**आन्दोलयामास विलासदोलां स वल्लभायाः पृथिवीभुजङ्गः।**
**भङ्गं समग्रस्य वधूजनस्य जग्राह सौभाग्यगुणप्रपञ्चः ॥३५॥**

### अन्वयः

सः पृथिवीभुजङ्गः वल्लभायाः विलासदोलाम् आन्दोलयामास। समग्रस्य वधूजनस्य सौभाग्यगुणप्रपञ्चः भङ्गं जग्राह।

### व्याख्या

सः प्रसिद्धः पृथिव्या भूमेर्भुजङ्गः पतिः पृथिवीभुजङ्गः विक्रमाङ्कदेवो वल्लभायाः प्रियायाः चन्द्रलेखायाः विलासदोलां विलासप्रेङ्खां 'दोला प्रेङ्खादिकाः स्त्रियाम्' इत्यमरः। आन्दोलयामास सञ्चालयामास। समग्रस्य सम्पूर्णस्य वधूजनस्य स्त्रीजनस्य सौभाग्यगुणस्य सौन्दर्यमाहात्म्यगुणस्य सौभाग्यरज्जोर्वा प्रपञ्चो विस्तारः 'विपर्यासे विस्तरे च प्रपञ्चः' इत्यमरः। भङ्गं विनाशं जग्राह स्वीचकार। अत्रासङ्गत्यलङ्कारः।

### भाषा

उस राजा विक्रमाङ्कदेव ने अपनी प्यारी के आनन्ददायी झूले को झुलाया। सब कामिनियों के सौभाग्य के गुण या सौभाग्यरूपी रस्सियां टूट गईं। अर्थात् विक्रमाङ्कदेव के स्वयं अपनी रानी का झूला झुलाने से जो रानी को सौभाग्य की पराकाष्ठा प्राप्त हुई उससे सब कामिनियों का सौभाग्य नष्ट सा हो गया। या झूला झुलाते समय प्रायः रस्सियां टूटा करती हैं इसलिये राजा

विक्रमाङ्कदेव के स्वयं झूला झुलाने से अन्य सब कामिनियों की सौभाग्यरूपी डोरियां टूट गईं।

**समुद्वहन्त्योस्तदथायताक्षी-दोलाविलोलाननमार्गसख्यम् ।**
**दृशोः क्षितीन्द्रस्य गतागताभ्यां गव्यूतिमात्रं भ्रमणं बभूव ॥३६॥**

अन्वयः

अथ आयताक्षीदोलाविलोलाननमार्गसख्यं समुद्वहन्त्योः क्षितीन्द्रस्य दृशोः गतागताभ्यां तत् भ्रमणं गव्यूतिमात्रं बभूव ।

व्याख्या

अथेत्यनन्तरम् आयताक्ष्या विशालाक्ष्याः 'सुदूरे दीर्घमायतम्' इत्यमरः । दोलायां प्रेङ्खायां विलोलस्य इतस्ततः प्रेङ्खोलनात् चञ्चलस्याऽऽननस्य चन्द्रलेखावदनस्य मुखकर्तृकदर्शनेनानुसरणात् मार्गस्याध्वनस्सख्यं मैत्रीं समुद्वहन्त्योर्धारयन्त्योः क्षितीन्द्रस्य विक्रमादित्यस्य दृशोर्नयनयोः गतं चागतं च ताभ्यां तत् भ्रमणं गव्यूतिमात्रं क्रोशयुगप्रमाणं 'गव्यूतिः स्त्री क्रोशयुगं' इत्यमरः । बभूव ।

भाषा

इसके अनन्तर बड़ी-बड़ी आंख वाली उस रानी के निरन्तर इधर-उधर फिरनेवाले मुख का साथ देनेवाली अर्थात् निरन्तर उसके मुख का अवलोकन करने वाली उस राजा की दोनों आँखों का आते जाते लगातार उसके मुख को देखते रहने से दो कोस का घूमना हो गया।

**अथावतीर्य क्षणमात्रमङ्के प्रियस्य विश्रम्य गतश्रमा सा ।**
**वसन्तलक्ष्म्या परिलोभ्यमाना चचाल पुष्पावचयाय देवी ॥३७॥**

अन्वयः

अथ सा देवी अवतीर्य प्रियस्य अङ्के क्षणमात्रं विश्रम्य गतश्रमा (सती) वसन्तलक्ष्म्या परिलोभ्यमाना पुष्पावचयाय चचाल।

व्याख्या

अथेत्यनन्तरं सा देवी चन्द्रलेखा अवतीर्य दोलातो भूभावागत्य प्रियस्य विक्रमाङ्कदेवस्य अङ्के उत्सङ्गे 'उत्सङ्गचिह्नयोरङ्कः' इत्यमरः । क्षणमात्रं अल्पकालमेव विश्रम्य विश्रान्तिं कृत्वा गतश्रमा निरस्तक्लमा सती वसन्तलक्ष्म्या वसन्तश्रिया परिलोभ्यमाना आकृष्यमाणा पुष्पाणामवचयाय सम्प्रहणाय चचाल प्रतस्थे ।

### भाषा

इसके बाद वह चन्द्रलेखा झूले पर से नीचे उतरकर अपने प्यारे पति विक्रमाङ्कदेव की गोद में थोड़ा विश्राम कर थकावट को दूर करके वासन्ती शोभा से आकृष्ट होकर फूलों को तोड़ने के लिये चल पड़ी।

भ्रूसंज्ञया कुन्तलभूमिभर्तुरन्तःपुरं सर्वमपि क्रमेण।
चक्राम पुष्पोच्चयबद्धहर्षमुत्साहसीमा हि पतिप्रसादः ॥३८॥

### अन्वयः

सर्वम् अन्तःपुरम् अपि कुन्तलभूमिभर्त्तुः भ्रूसंज्ञया क्रमेण पुष्पोच्चयबद्धहर्षं चक्राम। हि पतिप्रसादः उत्साहसीमा।

### व्याख्या

सर्वं सकलम् अन्तःपुरम् अवरोधाङ्गना 'स्त्र्यगारं भूभुजामन्तःपुरं स्यादवरोधनम्। शुद्धान्तश्चावरोधश्च' इत्यमरः। अपि कुन्तलभूमेर्भर्त्तुर्विक्रमाङ्कदेवस्य भ्रूसंज्ञया भ्रुकुटिनिर्देशेन क्रमेण क्रमशः पुष्पाणाम् उच्चयः संग्रहणं तस्मिन्बद्धो हर्षस्समागत आनन्दो यस्मिन् कर्मणि तत् पुष्पोच्चयबद्धहर्षं यथास्यात्तथा हर्षपूर्वकं पुष्पावचयाय चक्राम चचाल। हि यतः भर्तुः प्रसादः प्रसन्नता 'प्रसादस्तु प्रसन्नता' इत्यमरः। एव उत्साहस्य चित्तविकासस्य सीमा चरम उत्कर्षः।

### भाषा

रनवास में की सब स्त्रियाँ भी कुन्तलदेश के राजा विक्रमाङ्कदेव की भौंह के इशारे से धीरे २ फूलों को एकत्र करने में अत्यन्त हर्ष दिखाती हुई चल पड़ीं। क्योंकि स्वामी की प्रसन्नता ही स्त्रियों के प्रोत्साहित होने की चरम सीमा है। अर्थात् पति को प्रसन्न देख कर स्त्रियों को हर्ष की पराकाष्ठा प्राप्त होती है।

असंख्यपुष्पोऽपि मनोभवस्य पञ्चैव बाणार्थमयं ददाति।
एवं कदर्यत्वमिवावधार्य सर्वस्वमग्राहि मधोर्वधूभिः ॥३९॥

### अन्वयः

असंख्यपुष्पः अपि अयं मनोभवस्य बाणार्थं पञ्च एव ददाति एवं कदर्यत्वम् अवधार्य इव वधूभिः मधोः सर्वस्वम् अग्राहि।

## व्याख्या

अर्गणनीयानि पुष्पाणि कुसुमानि यस्य सोऽसंख्यपुष्प अपि अयं वसन्त मनोभवस्य कामस्य बाणार्थं शरनिर्माणाय पञ्चैव पुष्पाणि ददाति समर्पयति । एव रीत्या वसन्तस्य कदर्यत्व कृपणत्वम् 'कदर्यकृपणक्षुद्रकिंपचान-मितंपचा' इत्यमर । अवधार्य इव निश्चित्य इव वधूभि कामिनीभि मधो वसन्तस्य सर्वस्व सकलमेव सारभूत कुसुमरूप वस्तु अग्राहि गृहीतम् । "अरविन्दम-शोकञ्च चूतञ्च नवमल्लिका । नीलोत्पलञ्च पञ्चैते पञ्चबाणस्य सायका" एतेषा पुष्पाण्येव कामबाणा इति कविप्रसिद्धि ।

## भाषा

अगणित पुष्पो से युक्त होने पर भी वह वसन्त, कामदेव को बाणो को तयार करने के लिये केवल पाच ही फूल देता है, इस प्रकार मानो उसकी कृपणता समझ कामिनियो ने, वसन्त के सब फूलो को तोड लिया ।

आरोहति क्षोणिपतेः कलत्रे शिरःस्थपुष्पोच्चयकौतुकेन ।
प्रभ्रंशमाशङ्क्य नितम्बभाराद् भियेव लीलावकुलश्चकम्पे ॥४०॥

## अन्वयः

लीलाबकुलः शिरःस्थपुष्पोच्चयकौतुकेन क्षोणिपतेः कलत्रे आरोहति (सति) नितम्बभारात् प्रभ्रंशम् आशङ्क्य भिया चकम्पे इव ।

## व्याख्या

लीलाबकुलो क्रीडावृक्षो बकुलो नाम शिरस्सु तिष्ठन्तीति शिरःस्थानि मस्तकोपर्यवलम्बितानि पुष्पाणि तेषामुच्चयस्तग्रहण तस्य कौतुकेनोत्कण्ठया क्षोणि-पते क्षोणिर्भूमिस्तस्या पतिस्तस्य "क्षोणिर्ज्या काश्यपी क्षिति" इत्यमर । विक्रमाङ्कदेवस्य कलत्रे कामिनीसमूहे 'कलत्र श्रोणिभार्ययो' इत्यमर । आरोहति बकुलवृक्षोपरि गते सति नितम्बाना श्रोणीनां भारात् भरात्प्रभ्रंश प्रपतनमाशङ्क्य सम्भाव्य भिया भयेन चकम्पे इव कम्पमाप इव ।

## भाषा

बाग में का मौलसरी का वृक्ष, चोटी पर के फूलो को तोडने के कौतुक से राजा की स्त्रियो के उस पर चढने पर मानो नितम्बो के बोझा से कही टूट न जाय इस भय से कांपने लगा ।

आनम्यमाना लतिका रजोभिः पौष्पैर्दृशौ पूरयति स्म देव्याः ।
अन्या नृपालिङ्गनमाससाद भाग्येषु नास्ति प्रतिषेधमार्गः ॥४१॥

अन्वयः

आनम्यमाना लतिका पौष्पैः रजोभिः देव्याः दृशौ पूरयति स्म । अन्या नृपालिङ्गनम् आससाद । भाग्येषु प्रतिषेधमार्गः न अस्ति ।

व्याख्या

कयाचिन्नायिकया आनम्यमाना नीचैः कृता लतिका वल्ली पौष्पैः पुष्पसम्बन्धिभिः रजोभिः परागैः 'परागः सुमनो रजः' इत्यमरः । देव्याः चन्द्रलेखायाः दृशौ नयने पूरयति स्म आच्छादयति स्म । एतस्मिन्नेव सुन्दरावसरेऽन्या काचिन्नायिका नृपस्य विक्रमाङ्कदेवस्य आलिङ्गनं परिरम्भणम् आससाद कृतवती गुप्तरूपेण । भाग्येषु दैवानुकूल्ये सति प्रतिषेधमार्गः प्रतिबन्धस्य मार्गः कारणं नास्ति, किमपि न भवतीति भावः । अत्रार्थान्तरन्यासोऽलङ्कारः ।

भाषा

किसी स्त्री के द्वारा (फूल तोड़ने के लिये) नीचे की ओर खींची हुई लता ने फूलों के पराग से चन्द्रलेखा की आँखों को भर दिया अर्थात् लता में से गिरी पुष्पधूलि से चन्द्रलेखा की आँखें बन्द हो गईं। इसी बीच में किसी दूसरी स्त्री ने राजा का आलिङ्गन प्राप्त कर लिया। दैव की अनुकूलता रहने पर सुखप्राप्ति में किसी प्रकार की रुकावट नहीं हो सकती है।

अताडयत्पल्लवपाणिनैकां पुष्पोच्चये राजवधूमशोकः ।
तच्छेदहेतोरलिपंक्तिभङ्गया व्याकृष्यतेवासिलता स्मरेण ॥४२॥

अन्वयः

अशोकः एकां राजवधूं पुष्पोच्चये पल्लवपाणिना अताडयत् । स्मरेण तच्छेदहेतोः अलिपंक्तिभङ्गया असिलता व्याकृष्यत इव ।

व्याख्या

अशोकः वृक्षविशेषः एकां काञ्चित् राजवधूं राज्ञः कामिनीं पुष्पाणामुच्चये संग्रहणे तद्रूपे कार्ये प्रवृत्ते सति पल्लवरूपेण पाणिना हस्तेन अताडयत्जघान । कुतस्त्वया मम सर्वस्वभूतानि पुष्पाणि गृहीतानीति रुषा पल्लवहस्तेन ताडितवानिति भावः । स्मरेण कामेन तद्वैरस्य प्रतियातनायेव तस्या-

शोकपल्लवहस्तस्य छेदः कर्तनं तस्य हेतोः कारणात्, पल्लवपाणिकर्त्तनार्थं अलिपंक्तिभङ्ग्या भ्रमरसमूहानां तत्र समुपस्थितानां छद्मनाऽसिलता खड्गलता 'खड्गे तु निस्त्रिंशचन्द्रहासासिरिष्टयः' इत्यमरः। भ्रमराणां कृष्णत्वादसिलतात्वारोपः। व्याकृष्यत इव निष्कासिता समाकृष्टा इव छेदनार्थमिति भावः। अत्र सापह्नवोत्प्रेक्षालङ्कारः।

### भाषा

फूल तोड़ते समय अशोक ने (अपने फूलों को तोड़ने से क्रुद्ध होकर) किसी एक कामिनी को अपनी कोमल डाल रूपी हाथ से मार दिया। कामदेव ने उस कोमल डाल रूपी हाथ को काट डालने के लिए भ्रमर पंक्ति के मिष से मानो तलवार खींच ली।

**आरोप्यमाणा दयितेन काचिन्नितम्बभारात्स्वयमप्रगल्भा।**
**स्कन्धात्तरोः प्रत्युतमूलमाप स्विन्नेन पादाम्बुरुहद्वयेन ॥४३॥**

### अन्वयः

नितम्बभारात् स्वयम् अप्रगल्भा काचित् दयितेन आरोप्यमाणा स्विन्नेन पादाम्बुरुहद्वयेन तरोः स्कन्धात् प्रत्युत मूलम्, आप।

### व्याख्या

नितम्बस्य भारात् स्वयमेव सहायं विना अप्रगल्भा असमर्था काचिन्नायिका दयितेन प्रियेण विक्रमाङ्कदेवेनारोप्यमाणा वृक्षोपरि प्राप्यमाणा स्विन्नेन स्वेदाप्लुतेन पादावेव चरणावेवाम्बुरुहे कमले तयोर्द्वयं युगलं तेन पादाम्बुरुहद्वयेन तरोः वृक्षस्य स्कन्धात् प्रकाण्डात् 'अस्त्री प्रकाण्डः स्कन्धः स्यान्मूलाच्छाखावधिस्तरोः' इत्यमरः। प्रत्युत मूलं निम्नस्थानमेवाऽऽप प्राप पतितेति भावः।

### भाषा

नितम्ब के बोझे से स्वयं पेड़ पर चढ़ने में असमर्थ किसी स्त्री को प्रिय विक्रमाङ्कदेव के चढ़ाने पर, पसीने से तर दोनों चरण रूपी कमलों के कारण वह पेड़ के तने पर से खिसक कर उलटे उस पेड़ की जड़ के पास आ पड़ी।

**आरुह्य कान्तासु विधुन्वतीषु संभाव्य भङ्गं जघनातिभारैः।**
**लघुत्वहेतोरिव पुष्पभारं द्रुमास्त्यजन्ति स्म निजोत्तमाङ्गात् ॥४४॥**

अन्वयः

कान्तासु आरुह्य विधुन्वतीषु (सतीषु) जघनातिभारैः भङ्गं सम्भाव्य द्रुमाः लघुत्वहेतोः इव निजोत्तमाङ्गात् पुष्पभारं त्यजन्ति स्म।

व्याख्या

कान्तासु नृपकामिनीषु आरुह्य वृक्षाणामुपरि सम्प्राप्य विधुन्वतीषु वृक्षेषु कम्पमातन्वतीषु सतीषु जघनानां नितम्बपूर्वभागानां 'जघनं स्यात् स्त्रियाः श्रोणिपुरोभागे कटावपि' इति मेदिनी। अतिभारास्तैः भङ्गं वृक्षाणां पातनं सम्भाव्य विचार्य द्रुमा वृक्षा लघुत्वहेतोः स्वशरीरे लाघवं यथास्यात्तथा च पातः कामिनीकर्तृको न स्यादित्ययं निजोत्तमाङ्गात्स्वशिरसः 'उत्तमाङ्गं शिरः शीर्षं' इत्यमरः। सकाशात् पुष्परूपं भारं त्यजन्ति स्म पातयन्ति स्म। अत्र हेतूत्प्रेक्षालङ्कारः।

भाषा

कान्ताओं के पेड पर चढ कर, फूल गिराने के लिए पेडों को झकझोरते रहने से, उनके जघनस्थल के वजन से टूट जाने की सम्भावना कर, वृक्ष, मानो अपना बोझ हलका करने के लिये अपनी चोटी पर लगे हुए फूल के बोझ को उतार रहे थे।

केलिद्रुमाः क्ष्मातलमागतासु संगृह्य पुष्पाणि नितम्बिनीषु।
भारान्न भङ्गः समजायतेति गर्वादिवोच्चैः शिरसो बभूवुः ॥४५॥

अन्वयः

केलिद्रुमाः नितम्बिनीषु पुष्पाणि संगृह्य क्ष्मातलम् आगतासु(सतीषु) भारात् (नः) भङ्गः न समजायत इति गर्वात् इव उच्चैः शिरसः बभूवुः।

व्याख्या

केलिद्रुमाः क्रीडावृक्षा नितम्बिनीषु कामिनीषु पुष्पाणि संगृह्योच्चयं कृत्वा क्ष्मातलं भूमितलं 'क्ष्मावनिर्मेदिनी मही' इत्यमरः। आगतासु अवतीर्णासु सतीषु भारादासां नितम्बभारात् नः अस्माकं भङ्गः पतनं न समजायत न जातम् इति गर्वात् दर्पात् इव उच्चैः शिरसः उन्नतमस्तकाः बभूवुर्जाताः। कामिनीनां नितम्ब-भारेण पुष्पावचये नीचैर्भूता वृक्षास्तासां भूमितलमागमेन पुनरुच्चैर्भूता इति भावः। अत्रोत्प्रेक्षालङ्कारः।

### भाषा

बागों में के वृक्ष, कामिनियों के फूलों को तोड़ कर उन पर से नीचे उतर आने पर, हम, नितम्बवतीयों के बोझ से नहीं टूटे इस अभिमान से मानो फिर से अपना मस्तक ऊँचा करने लगे। अर्थात् कामनियों के बोझ से दबे वृक्ष उनके नीचे उतर पड़ने पर फिर सीधे हो गये।

**स्वेदाम्भसा पुष्परजोभरैश्च सर्वत्र पङ्के विहिते वधूनाम्।**
**चक्रे निवासं कठिनोन्नतेषु तासां मनोभूः स्तनमण्डलेषु ॥४६॥**

### अन्वयः

वधूनां स्वेदाम्भसा पुष्परजोभरैः च सर्वत्र पङ्के विहिते सति मनोभूः तासां कठिनोन्नतेषु स्तनमण्डलेषु निवासं चक्रे।

### व्याख्या

वधूनां स्त्रीणां स्वेदाम्भसा घर्मजलेन 'घर्मो निदाघः स्वेदः स्यात्' इत्यमरः। पुष्परजोभरैः कुसुमपरागराशिभिश्च सर्वत्र पङ्के कर्दमे 'पङ्कोऽस्त्री शाद-कर्दमौ' इत्यमरः। विहिते कृते सति मनोभूः कामः तासां स्त्रीणां कठिनानि कठोराणि उन्नतानि तुङ्गानि 'उच्चप्रांशून्नतोदग्रोच्छ्रितास्तुङ्गे' इत्यमरः। कठिनोन्नतानि तेषु स्तनमण्डलेषु निवासं स्थितिं चक्रे कृतवान्। सर्वत्र कर्दमावृत्ते मार्गे जनः कठिनमुन्नतञ्च स्थानमाश्रयतीति प्रसिद्धमेतत्। कठिनोन्नतस्तन-मण्डलमतीव कामोद्दीपकमिति भावः।

### भाषा

कामिनियों के पसीने और पुष्पधूलि के समूह से सर्वत्र जमीन पर कीचड़ हो जाने पर कामदेव ने कामिनियों के कठोर और उन्नत स्तन-मण्डलों निवास किया।

**नाभीह्रदेषु स्थलतां गतेषु लताच्युतैः पुष्पपरागपुञ्जैः।**
**मध्यप्रदेशः सुदृशां स्मरस्य लीलागतिप्राङ्गणतां जगाम॥४७॥**

### अन्वयः

लताच्युतैः पुष्पपरागपुञ्जैः नाभीह्रदेषु स्थलतां गतेषु सुदृशां मध्य-प्रदेशः स्मरस्य लीलागतिप्राङ्गणताम् जगाम।

व्याख्या

लताभ्यो वल्लीभ्यः 'वल्ली तु व्रततिर्लता' इत्यमरः । च्युतानि पतितानि तैः लताच्युतैः पुष्पपरागपुञ्जैः कुसुमरजसमूहैः नाभीह्रदेषु नाभीसरस्सु तत्रागाधजलो ह्रदः' इत्यमरः । स्थलतां गतेषु जलशून्यता प्राप्तेषु सुदृशां सुनयनानां मध्यप्रदेशः कटिप्रदेशः उदरदेशो वा स्मरस्य कामस्य लीलागतेः विलासयुक्तगमनस्य प्राङ्गणतां विलाससंचारभूमितां जगाम प्राप । तासां मध्यप्रदेशे सर्वत्र कामसञ्चारः समदृश्यतेति भावः ।

भाषा

लताओं से गिरे हुए फूलों के पराग समूह से नाभी रूपी तलाव या गड्ढे के भर जाने से समतल भूमि हो जाने से सुन्दर नयनोंवाली स्त्रियों का मध्यप्रदेश कामदेव का विलास भरी चाल से चलने के लिये आंगन काम करने लगा । अर्थात् उनके मध्यप्रदेश में कामसंचार होने लगा ।

प्रवर्तमानासु नृपाङ्गनासु तत्र ग्रहीतुं कुसुमानि तासु ।
कृतो महांस्तन्मधुजीविनीभिः कोलाहलः षट्चरणावलीभिः ॥४८॥

अन्वयः

तत्र तासु नृपाङ्गनासु कुसुमानि ग्रहीतुं प्रवर्तमानासु (सतीषु) तन्मधुजीविनीभिः षट्चरणावलीभिः महान् कोलाहलः कृतः ।

व्याख्या

तत्रोद्याने तासु प्रसिद्धसुन्दरीषु नृपस्य विक्रमाङ्कदेवस्य अङ्गनासु स्त्रीषु कुसुमानि पुष्पाणि ग्रहीतुमुच्चयं कर्तुं प्रवर्तमानासु समुद्युक्तासु सतीषु तेषां पुष्पाणां मधुभिः मकरन्दैर्जीवनं जीविका प्राणसधारणं यासां तास्ताभिः तन्मधुजीविनीभिः षट्चरणानां भृङ्गाणां 'षट्पदभ्रमरालय.' इत्यमरः आवल्य पङ्क्तयस्ताभिः 'आवलिः पङ्क्तिः श्रेणीलेखा' इत्यमरः । षट्चरणावलीभिः महान् कोलाहलः जीविकापहारजन्यदुःखात् महान् कोलाहलः कलकलः "कोलाहलः कलकलः" इत्यमरः । कृतः । अत्र काव्यलिङ्गालङ्कारः ।

भाषा

उस उद्यान में उन राजा की स्त्रियों के फूलों को तोड़ लेने में प्रवृत्त होने पर फूलों के मकरन्द से अपना जीवन निर्वाह करने वाली भौंरों की श्रेणियों ने बड़ा ही कोलाहल किया ।

**विधाय काचिन्नयने सपत्न्याः क्रीडाच्छलात्पुष्पपरागपूर्णे।**
**पात्रत्वमाप प्रियचुम्बनस्य किमस्ति वैदग्ध्यवतामसाध्यम् ॥४९॥**

अन्वयः

काचित् क्रीडाच्छलात् सपत्न्याः नयने पुष्पपरागपूर्णे विधाय प्रिय-चुम्बनस्य पात्रत्वम् आप। वैदग्ध्यवतां किम् असाध्यम् अस्ति।

व्याख्या

काचित् नायिका क्रीडाया विलासस्य छलात् व्याजात् सपत्न्या नयने नेत्रे पुष्पाणां परागस्तेन पूर्णे व्याप्ते विधाय प्रियस्य विक्रमाङ्कदेवकर्तृकस्य चुम्बनस्य मुखसंयोगस्य पात्रत्वं भाजनत्वम् 'योग्यभाजनयोः पात्रं' इत्यमरः। आप प्राप। वैदग्ध्यवतां चातुर्ययुक्तानां जनानामिति शेषः, किमसाध्यं साधयितुमयोग्यमस्ति। अत्रार्थान्तरन्यासोऽलङ्कारः।

भाषा

किसी स्त्री ने खेल के बहाने से अपनी सौत की आखें फूलों की धूलि से भर कर अपने को विक्रमाङ्कदेव द्वारा चुम्बित होने का स्थान बना लिया। अर्थात् सौत की आखें बन्द देख कर विक्रमाङ्कदेव ने उसका चुम्बन किया। चतुर जनों के लिये क्या असाध्य है अर्थात कुछ नहीं।

**मानप्रिया कापि नृपस्य पत्नी स्पृष्टा न पुष्पोच्चयवाञ्छयापि।**
**अनेकनारीजनबाहुमूल–नखक्षतावेक्षणतत्पराऽभूत् ॥५०॥**

अन्वयः

पुष्पोच्चयवाञ्छया अपि न स्पृष्टा मानप्रिया का अपि नृपस्य पत्नी अनेकनारीजनबाहुमूलनखक्षतावेक्षणतत्परा अभूत्।

व्याख्या

पुष्पाणां कुसुमानामुच्चयः सग्रहणं तस्य वाञ्छया अपि न स्पृष्टा अर्थात् यस्या हृदये पुष्पोच्चयस्येच्छाऽपि मानातिशयवशान्न जाता एवम्भूता मानएव प्रियो यस्यास्सा काऽपि नृपस्य पत्नी अनेके नारीजनास्तेषां बाहुमूलेषु नखक्षतानि नखप्रहारास्तेषामवेक्षणे निरीक्षणे तत्परा आसक्ताऽभूत्। क्रोधेन अन्यासां नखक्षतावलोकनं कृतवतीत्यर्थः। असूयाभाव समुदित इति यावत्।

भाषा

फूलों को तोड़ने की इच्छा ने भी जिसका स्पर्श नहीं किया है अर्थात् जिसके मन में फूलों को तोड़ने की इच्छा भी नहीं हुई है ऐसी मान से भरी राजा की कोई स्त्री अनेक स्त्रियों की भुजाओं के मूल में विद्यमान नखक्षतों को देखने में ही तत्पर हो गई। अर्थात् ईर्ष्या से उन नखक्षतों को देखने लगी।

**कस्याश्चिदूर्ध्वं नयनाय शाखामाक्रम्य यामर्पयति स्म देवः।**
**सा तन्नितम्बस्य भरेण भग्ना समं मनोभिः प्रतिकामिनीनाम् ॥५१॥**

अन्वयः

देवः कस्याश्चित् ऊर्ध्वं नयनाय यां शाखाम् आक्रम्य अर्पयति स्म सा तन्नितम्बस्य भरेण प्रतिकामिनीनां मनोभिः समं भग्ना।

व्याख्या

देवो विक्रमाङ्कः कस्याश्चिन्नायिकाया ऊर्ध्वं वृक्षोपरिदेशे नयनाय प्रापणाय या शाखा आक्रम्य स्वहस्तेन गृहीत्वा नायिकायै अर्पयति स्म ददौ सा शाखा तस्या नितम्बस्य श्रोणिप्रदेशस्य 'पश्चान्नितम्बः स्त्रीकट्याः' इत्यमरः। भरेण भारेण प्रतिकामिनीनां सपत्नीनां मनोभिः चेतोभिस्सम सह भग्ना विच्छिन्ना। अत्र सहोक्तिरलङ्कारः।

भाषा

विक्रमाङ्कदेव ने किसी नायिका को पेड़ पर और ऊपर चढ़ा देने के उद्देश्य से जिस शाखा को खींच कर उसको थमाया वह शाखा उसके नितम्ब के बोझ से सौतों के मनों के साथ टूट पड़ी। अर्थात् उस नायिका पर विक्रमाङ्कदेव का विशेष प्रेम देखकर सौतों का मन दुःखित हो गया।

**नृपेण काचिद्विहितावतंसा तृणाय नामन्यत काश्चिदन्याम्।**
**स्त्रीणां हि सौभाग्यमदप्रसूतिः प्रियप्रसादो मदिरासहस्रम् ॥५२॥**

अन्वयः

नृपेण विहितावतंसा काचित् अन्यां काश्चित् तृणाय न अमन्यत। हि स्त्रीणां सौभाग्यमदप्रसूतिः प्रियप्रसादः मदिरासहस्रम्।

व्याख्या

नृपेण विक्रमाङ्कदेवेन विहितो विरचितोऽवतंसः कर्णभूषणं 'पुंस्युत्तंसावतंसौ द्वौ कर्णपूरे च शेखरे' इत्यमरः। यस्यास्सा विहितावतंसा पुष्पादिभिर्विहित कर्णावतंसा काचित्स्त्री अन्यां काञ्चिन्नायिकां सपत्नीं तृणाय तृणसमानमपि न अमन्यत विदितवती। हि यतः स्त्रीणां कामिनीनां सौभाग्यरूपस्य मदस्य दर्पस्य प्रसूतिरुत्पत्तिकारणरूपः प्रियस्य प्रसादः प्रसन्नता 'प्रसादस्तु प्रसन्नता' इत्यमरः। एव मदिरासहस्रम् मद्यसहस्रतुल्यम्। प्रियप्रसादेन हर्षातिरेकेण नार्यो मदोन्मत्ता भवन्तीति भावः।

भाषा

राजा विक्रमाङ्कदेव के द्वारा किसी कामिनी के कानों को पुष्पादि से आभूषित कर दिये जाने पर वह स्त्री अन्य कामिनी अर्थात् सौत को तृण के समान भी नहीं समझती थी अर्थात् उसको तुच्छ समझती थी। क्योंकि सौभाग्यरूपी नशे को उत्पन्न करनेवाली पति की प्रसन्नता शराब से हजारगुना नशा पैदा करनेवाली होती है।

पौष्पे रजस्युच्छलिते समन्तात् समस्तनेत्रप्रतिबन्धहेतौ।
आश्चर्यमङ्गेषु नृपाङ्गनानाममोघबाणः कुसुमायुधोऽभूत् ॥५३॥

अन्वयः

समस्तनेत्रप्रतिबन्धहेतौ पौष्पे रजसि समन्तात् उच्छलिते (सति) कुसुमायुधः नृपाङ्गनानाम् अङ्गेषु अमोघबाणः अभूत् इति आश्चर्यम्।

व्याख्या

समस्तानां सकलानां नरनारीणां नेत्राणि तेषां प्रतिबन्धः अवलोकनसामर्थ्याभावस्तस्य हेतौ कारणभूते पौष्पे पुष्पसम्बन्धिनि रजसि परागे 'स्याद्रजः पुष्पमार्तवम्' इत्यमरः। समन्तात् वायुना सर्वासु दिक्षु उच्छलिते प्रसृते सति कुसुमायुधः कामः नृपाङ्गनानां नृपकामिनीनामङ्गेषु शरीरावयवेषु अमोघस्सफलः 'अमोघं सफले वाच्यवत्स्त्री पथ्या विडङ्गयोः' इति मेदिनी। बाणो यस्य सः अमोघबाणः सफललक्ष्यभेदनः अभूत्। इत्याश्चर्यम्। अत्र विभावनाऽलङ्कारः।

भाषा

सब प्राणियों की आंखों का अर्थात् दृष्टि का प्रतिबन्ध करने की कारणभूत पुष्प की धूली के चारों ओर फैल जाने पर (भी) कामदेव, राजा की स्त्रियों

के अङ्गों में ठीक-ठीक निशाना मारने में सफल हुआ यह एक आश्चर्य की बात है। अर्थात् आंख से न देखते हुए भी ठीक-ठीक निशाना मारना यह आश्चर्य की बात है।

**कृष्टांशुका कापि नरेन्द्रवामा लतानिकुञ्जात्कपिना सकोपम् ।**
**धूर्ता पलाय्य प्रियमालिलिङ्ग कोपं न चाप प्रतिसुन्दरीभ्यः ॥५४॥**

अन्वयः

लतानिकुञ्जात् कपिना सकोपं कृष्टांशुका का अपि धूर्ता नरेन्द्रवामा पलाय्य प्रियम् आलिलिङ्ग प्रतिसुन्दरीभ्यः कोपं च न आप।

व्याख्या

लतानिकुञ्जात् वल्लीभिर्निर्मितात् पिहितोदरगृहात् कपिना वानरेण 'कपिप्लवगप्लवगशाखामृगवलीमुखाः। मर्कटो वानरः कीशः' इत्यमरः। सकोपं सक्रोधं यथा स्यात्तथा कृष्टं हृतम् अंशुकं वस्त्रं 'वस्त्रमाच्छादनं वासश्चैलं वसनमंशुकम्' इत्यमरः। यस्याः सा कृष्टांशुका कापि धूर्ता विदग्धा नरेन्द्रवामा नृपकामिनी पलाय्य झटिति गत्वा प्रियं राजानम् आलिलिङ्ग। प्रतिसुन्दरीभ्यः सपत्नीभ्यः कोपं क्रोधं च न आप न प्राप। सा वानरभिया पतिमालिङ्गतीति सपत्नीनां न क्रोधावसर इति भावः।

भाषा

लता के बने कुञ्ज पर से बन्दर के क्रोध से वस्त्र खींचने पर राजा की कोई प्रगल्भ नारी भाग कर राजा को जा चिपकी अर्थात् राजा का आलिङ्गन कर लिया (इससे) सौतों का क्रोध भी उस पर नहीं हुआ। सौतों के सामने पति का आलिङ्गन यद्यपि क्रोधकारक है परन्तु यह बन्दर के डर से ऐसा कर रही है इस भावना से क्रोध उत्पन्न नहीं हुआ।

**श्रोणीभरस्यातितरां गरिम्णा भङ्क्त्वा लतां कापि कुरङ्गकाक्षी ।**
**नरेश्वरस्योपरि निष्पपात पीडामवापुः प्रतियोषितस्तु ॥५५॥**

अन्वयः

का अपि कुरङ्गकाक्षी श्रोणीभरस्य अतितरां गरिम्णा लतां भङ्क्त्वा नरेश्वरस्य उपरि निष्पपात प्रतियोषितः तु पीडाम् अवापुः।

व्याख्या

का अपि कुरङ्गकाक्षी मृगनयना श्रोणीभरस्य नितम्बभारस्य अतितर गरिम्णा गौरवेण लता वल्लीं 'वल्ली तु व्रततिर्लता' इत्यमरः । भङ्क्त्वा नरेश्वरस्य राज्ञ उपरि निष्पपात निपतितवती प्रतियोषित सपत्न्यस्तु दु खमवापु प्राप्तवत्य । इय नरेश्वरोपरि पतित्वाऽनायासेनैव तदालि प्राप्तवतीति दु खकारणमिति भाव । अत्रासङ्गत्यलङ्कार ।

भाषा

कोई लता पर चढी हुई मृगनयनी नितम्बो के अत्यधिक बोझ से लता तोडती हुई राजा के ऊपर आ गिरी परन्तु पीडा सौतो को हुई । अर्थात् रा के ऊपर गिरने से अनायास ही उसे राजा का आलिङ्गन प्राप्त होने से सौतो मनमें ईर्ष्यासे पीडा हुई ।

बबन्ध धम्मिल्लमधीरदृष्टेः क्ष्मानायकश्चम्पकमालिकाभिः ।
चित्तेषु मन्युः स्थिरतामवाप विपक्षसारङ्गविलोचनानाम् ॥५६॥

अन्वयः

क्ष्मानायकः अधीरदृष्टेः चम्पकमालिकाभिः धम्मिल्लं बबन्ध विपक्ष-सारङ्गविलोचनानां चित्तेषु मन्युः स्थिरताम् अवाप ।

व्याख्या

क्ष्माया भूमेर्नायको नेता क्ष्मानायको भूपतिरधीरदृष्टेश्चञ्चलनयनाया धम्मिल्ल कचभार अय धम्मिल्ल सयमा कचा' इत्यमर । चम्पकमालिकाभि-श्चम्पकपुष्पस्रग्भि बबन्ध बद्धवान् । विपक्षा विरोधिन्य सारङ्गविलोचना मृगनयना "चातके हरिणे पुंसि सारङ्ग शबले त्रिषु' इत्यमर । तासां चित्तेषु हृदयेषु मन्यु क्रोध स्थिरता स्थैर्यमवाप प्राप्तवान् । अत्रासङ्गत्यलङ्कार ।

भाषा

राजा विक्रमाङ्कदेव ने चञ्चल नत्रवाली किसी कामिनी के (बिखरे) बालो को चम्पे के फूल की माला से बाँध दिया । (इससे) हरिण के समान नेत्र वाली सौतो के मनो में क्रोध स्थिर होगया ।

विरेजिरे कुन्तलराजदाराः प्रसूनरेणूत्करवर्णिकाभिः ।
निजेषु दोर्विक्रमनाटकेषु कामेन नीता इव नर्तकीत्वम् ॥५७॥

अन्वयः

कुन्तलराजदाराः प्रसूनरेणूत्करवर्णिकाभिः कामेन निजेषु दोर्विक्रमनाटकेषु नर्तकीत्वम् नीताः इव विरेजिरे ।

व्याख्या

कुन्तलदेशाधिपस्य कामिन्यः प्रसूनानां पुष्पाणां रेणवो धूलयः 'रेणुर्द्वयोः स्त्रियां धूलिः' इत्यमरः । तेषामुत्करस्समूहः 'पुञ्जराशी तूत्करः कूटमस्त्रियाम्' इत्यमरः । तस्य वर्णिकाः वर्णपरम्पराः ताभिः कामेन मन्मथेन निजेषु स्वकीयेषु दोर्विक्रमस्य भुजपराक्रमस्य 'भुजबाहू प्रवेष्टो दोः' इत्यमरः । नाटकानि तेषु नर्तकीत्व नर्तनकारिणीत्व नीताः प्रापिताः इव विरेजिरे शुशुभिरे । अत्रोत्प्रेक्षालङ्कारः ।

भाषा

कुन्तल देश के राजा विक्रमाङ्कदेव की स्त्रियां फूलों के रंग बिरंगी धूली के समूह के पड़ने से रंग बिरंगी हो जाने से मानो कामदेव ने अपनी भुजाओं के पराक्रम रूपी नाटकों में नाचने वाली बनाई हों, ऐसी शोभित होती थीं ।

प्रसूनभाराभरणा विरेजुश्चालुक्यभर्तुर्लटभाङ्गनास्ताः ।
प्राचुर्यतः पुष्पशिलीमुखानां कृतास्त्रवर्षा इव मन्मथेन ॥५८॥

अन्वयः

चालुक्यभर्तुः प्रसूनभाराभरणाः ताः लटभाङ्गनाः पुष्पशिलीमुखानां प्राचुर्यतः मन्मथेन कृतास्त्रवर्षाः इव विरेजुः ।

व्याख्या

चालुक्यभर्तुश्चालुक्यवंशनायकस्य विक्रमाङ्कदेवस्य प्रसूनभाराभरणाः पुष्पसमूहालङ्काराः 'अलङ्कारस्त्वाभरणं' इत्यमरः । ताः लटभाङ्गनाः सुन्दर्यः कामिन्यः पुष्पाण्येव शिलीमुखाः बाणाः 'अलिबाणौ शिलीमुखौ' इत्यमरः । तेषाम् अथवा पुष्पेषु शिलीमुखाः भ्रमरास्तेषां प्राचुर्यतः बाहुल्यात् मन्मथेन कामेन कृतमस्त्राणां वर्षं यासु ताः कृतास्त्रवर्षा इव विरेजुः शुशुभिरे ।

भाषा

चालुक्यदेश के स्वामी विक्रमाङ्कदेव की, फूलों के समूह से शोभित वे सुन्दर स्त्रियां, फूल रूपी बाणों के या फूलपर आनेवाले भ्रमरों के आधिक्य से मानो कामदेव ने जिनपर खूब बाण चलाए हों ऐसी शोभित होती थीं ।

**पृष्ठानुलग्नाः क्षितिपाङ्गनानां न्यवेदयन्षट्चरणाः क्वणन्तः ।**
**पुष्पापहारोत्थमिवापराधं भृङ्गारिणीगोत्रगुरोः स्मरस्य ॥५९॥**

अन्वयः

क्षितिपाङ्गनानां पृष्ठानुलग्नाः क्वणन्तः षट्चरणाः भृङ्गारिणीगोत्रगुरोः स्मरस्य पुष्पापहारोत्थम् अपराधम् इव न्यवेदयन् ।

व्याख्या

क्षितिपाङ्गनानां विक्रमाङ्कभूपकामिनीनां पृष्ठेषु पृष्ठभागेषु लग्ना संसक्ताः क्वणन्तः गुञ्जन्तः 'निक्वाणो निक्वणः क्वाणः क्वणः क्वणनमित्यपि' इत्यमरः । षट्चरणा भृङ्गा 'भृङ्गषट्पदभ्रमरालयः' इत्यमरः । भृङ्गारिणीनां विलासिनीनां गोत्रस्य वंशस्य गुरुस्तस्य भृङ्गारिणीगोत्रगुरोः स्मरस्य कामस्य पुष्पाणां कुसुमानामपहारः उच्चयस्तस्मादुत्तिष्ठतीति पुष्पापहारोत्थस्तमपराधं दोषमिव न्यवेदयन् व्यज्ञापयन् । अत्रोत्प्रेक्षालङ्कारः ।

भाषा

राजा विक्रमाङ्कदेव की अङ्गनाओं के पीछे लगे हुए गूँजने वाले भौंरे मानो विलासिनियों के कुलगुरु कामदेव के फूलों को तोड़ने से उत्पन्न अपराध को (उनसे) कह रहे थे ।

**विलासिनीनां कुसुमोत्थरेणु-करम्बितस्वेदजलप्लुतानाम् ।**
**स्मरोष्मणा हेममयं शरीरं किञ्चिद्द्रवीभूतमिवावभासे ॥६०॥**

अन्वयः

कुसुमोत्थरेणुकरम्बितस्वेदजलप्लुतानां विलासिनीनां हेममयं शरीरं स्मरोष्मणा किञ्चित् द्रवीभूतम् इव आवभासे ।

व्याख्या

कुसुमेभ्य उत्था उद्गता रेणवस्तैः करम्बितं व्याप्तं यत् स्वेदजलं तेन प्लुतास्तासां कुसुमोत्थरेणुकरम्बितस्वेदजलप्लुतानां विलासिनीनां कामिनीनां हेममयं सुवर्णमयं 'स्वर्णं सुवर्णं कनकं हिरण्यं हेम' इत्यमरः । शरीरं स्मरोष्मणा कामजसन्तापेन किञ्चित् द्रवीभूतमिव आवभासे विदिद्युते । अत्युष्मणा सुवर्णं द्रवीभूतं भवत्येव । अत्रोत्प्रेक्षालङ्कारः ।

भाषा

फूलों में से निकलने वाली धूलोंसे मिश्रित पसीने के जल से लथपथ अङ्गनाओंके सुवर्णमय शरीर मानो काम की आँचसे कुछ पिघल गए हों ऐसे शोभित होते थे।

काचित्क्षिपन्ती मधुपं विशन्तमितस्ततः पाणिसरोरुहेण ।
बाल्ये कृतं कन्दुकताडनेषु श्रमं मृगाक्षी बहु मन्यते स्म ॥६१॥

अन्वयः

इतः ततः विशन्तं मधुपं पाणिसरोरुहेण क्षिपन्ती काचित् मृगाक्षी बाल्ये कन्दुकताडनेषु कृतं श्रमं बहु मन्यते स्म।

व्याख्या

इतस्ततः उभयतः पार्श्वयोर्विशन्तं समापतन्तं मधुपं भृङ्गं 'मधुव्रतो मधुकरो मधुलिण्मधुपालिनः' इत्यमरः। पाणिसरोरुहेण हस्तकमलेन क्षिपन्ती काचिन्मृगाक्षी हरिणनयना बाल्ये कौमारावस्थायां कन्दुकस्य ताडनेषु आघातक्रीडासु कृतं सम्पादितं श्रमं चेष्टितं बहु अत्यन्तोपयोगि मन्यते स्म विचारितवती।

भाषा

इधर उधर से आ पड़ने वाले भौंरों को हाथ से मारने वाली कोई मृगनयनी बाल्यावस्था में गेंद खेलने में किये हुए अपने परिश्रम को सराहने लगी। अर्थात् बाल्यावस्था में गेंद खेलने में हाथ चलाने का अभ्यास हो जाने से भौंरों को मार भगाने में सुभीता होती थी।

क्षिप्तो मुखात्पट्चरणस्तरुण्या विवेश हस्ताम्बुजकोशमस्याः ।
तस्माद्विधूतो मुखमाजगाम लज्जा कुतः स्वार्थपरायणानाम् ॥६२॥

अन्वयः

अस्याः तरुण्याः मुखात् क्षिप्तः षट्चरणः हस्ताम्बुजकोशं विवेश तस्मात् विधूतः मुखम् आजगाम। स्वार्थपरायणानां लज्जा कुतः।

व्याख्या

अस्याः पुरोवर्तिन्याः तरुण्याः युवतेर्मुखात् वदनात् क्षिप्तः निरस्तः षट्चरणो भृङ्गो हस्ताम्बुजकोशं करकमलकोशं विवेश प्रविष्टवान्। तस्मात् करकमल-

कोशस्थानात् विधूतो निवारित पुन मुखमाजगाम। स्वार्थपरायणानां स्वार्थसंसिद्धिसक्तानां जन्तूनां लज्जा त्रपा 'मन्दाक्ष ह्रीस्त्रपा व्रीडा लज्जा सा' इत्यमरः। कुत. कस्माद्धेतो भवति न जायत इत्यर्थ। अत्रार्थान्तरन्यासोऽलङ्कार।

**भाषा**

इस युवती के मुख पर से भगाया हुआ भ्रमर उसकी हथेली में आ गया। वहाँ से भगाया जाने पर (फिर से) मुखपर आ गया। अपना स्वार्थ सिद्ध करने में लगे प्राणियों को लज्जा कहाँ।

**आहूयमाना इव हंसनादैर्विकृष्यमाणा इव कौतुकेन।**
**जग्मुस्ततः क्लान्तिनिवारणाय लीलासरस्तीरमरालनेत्राः ॥६३॥**

**अन्वयः**

ततः अरालनेत्राः क्लान्तिनिवारणाय हंसनादैः आहूयमानाः इव कौतुकेन विकृष्यमाणाः इव लीलासरस्तीरं जग्मुः।

**व्याख्या**

तत अराले कुटिले 'अराल' कुटिल सर्जरसे' इति विश्व। नेत्रे यासा ता अरालनेत्रा कामिन्य क्लान्तिनिवारणाय पुष्पावचयकरणजन्यश्रमजातग्लानिसमपनोदाय हंसनादै मरालशब्दै आहूयमाना इवाऽऽकार्यमाणा इव कौतुकेन कौतूहलेन 'कौतूहल कौतुकं च' इत्यमर। विकृष्यमाणा इव सह्रीयमाणा इव लीलासरस्तीर विलासतडागतट जग्मुर्गतवत्य। जलविहारार्थमित्यर्थ।

**भाषा**

इसके अनन्तर टेढ़ी नजर वाली अङ्गनाएँ मानो हंस के शब्दों से पुकारी गई हुईं और जलक्रीडा के कुतूहल से उस ओर खींची गई हुईं, क्रीडावापी के तट पर चलीं गईं।

**जानासि भारं कुचनिर्मितं चेद् किं लाघवं मध्यकृतं न वेत्सि।**
**इतीव तासां चरणाम्बुजानि मञ्जीरनादैरवदन्धरित्रीम् ॥६४॥**

**अन्वयः**

तासां चरणाम्बुजानि मञ्जीरनादैः कुचनिर्मितं भारं जानासि किं मध्यकृतं लाघवं न वेत्सि इति धरित्रीम् अवदन् इव।

### व्याख्या

तासां कामिनीनां चरणाम्बुजानि चरणकमलानि मञ्जीरनादैः नूपुरशब्दैः 'मञ्जीरो नूपुरोऽस्त्रियाम्' इत्यमरः। कुचनिर्मितं स्तनकृतं भारं जानासि वेत्सि चेद्यदि, तर्हि मध्यकृतं लाघवं मध्यभागजन्यं गुरुत्वाभावं न वेत्सि किमिति वस्तु धरीणीं भूमिम् 'धरा धरित्री धरणी' इत्यमरः। अवदन् इव आहुरिव। अत्रोत्प्रेक्षालङ्कारः।

### भाषा

उन अङ्गनाओं के चरण कमल, पंजेब के शब्दों से मानो पृथ्वी को कह रहे थे कि यदि स्तनों के बोझे को तू जानती है तो क्या मध्यभाग के हलकेपन को तू नहीं जानती है? अर्थात् उनके स्तन बड़े थे और कटिभाग पतला था।

**न राजकान्ताभिरदृश्यतोर्वी स्तनद्वयेनाधिकमुन्नतेन।**
**हंसास्तुलाकोटिनिनादकृष्टाः पुण्यैः पदन्यासपदं न जाताः॥६५॥**

### अन्वयः

राजकान्ताभिः अधिकम् उन्नतेन स्तनद्वयेन उर्वी न अदृश्यत तुलाकोटिनिनादकृष्टाः हंसा पुण्यैः पदन्यासपदं न जाताः।

### व्याख्या

राजकान्ताभिर्नृपकामिनीभिरधिकमत्यन्तमुन्नतेन तुङ्गेन 'उच्चप्रांशून्नतोदग्रोच्छ्रितास्तुङ्गेऽथ' इत्यमरः। स्तनद्वयेन कुचयुगलेन उर्वी पृथिवी नाऽदृश्यत न दृष्टा। तुलाकोटीनां नूपुराणां 'पादाङ्गदं तुलाकोटिर्मञ्जीरो नूपुरोऽस्त्रियाम्' इत्यमरः। निनादेन शब्देन कृष्टाः समाहूताः हंसाः मरालाः पुण्यैः सुकृतैः तासां पदन्यासस्य चरणनिधानस्य पदं स्थानं न जाता न बभूवुः। अतिशयोक्तिरलङ्कारः।

### भाषा

राजा विक्रमाङ्कदेव की कान्ताओं ने, उनके दोनों स्तन अधिक ऊँचे उठे हुए होने से जमीन को नहीं देखा अर्थात् अधिक ऊँचे उठे स्तनों की आड़ पड़ने से उन्हें जमीन नहीं दिखाई देती थी। पैंजेब के (घुंघरू के) शब्दों से आकर्षित हो, आए हुए हंस, सयोग से उनके पाँवतले कुचले नहीं गये।

प्रारेभिरे वीजनमंशुकान्तैर्वनस्थले तज्जघनस्थलानि ।
पादेषु पीडाकरमङ्गनानां पथः श्लथीकर्तुमिवार्कतापम् ॥६६॥

अन्वयः

वनस्थले तज्जघनस्थलानि अंशुकान्तैः वीजनम् अङ्गनानां पादेषु पीडाकरम् अर्कतापं पथः श्लथीकर्तुम् इव प्रारेभिरे ।

व्याख्या

वनस्थलेऽरण्यभूमौ तासां नायिकानां जघनस्थलानि नितम्बपूर्वभागाः 'जघनं स्यात् स्त्रियाः श्रोणिपुरोभागे' इति मेदिनी । अंशुकानामधोवस्त्राणाम् "वस्त्रं वसनमंशुकम्" इत्यमरः । अन्तैः प्रान्तभागैः वीजनं वायुसञ्चालनमङ्गनानां पादेषु चरणेषु पीडाकरं सन्तापजनकमर्कस्य सूर्यस्य तापं पथो मार्गात् श्लथीकर्तुं शिथिलीकर्तुमिव प्रारेभिरे प्रारम्भं चक्रुः ।

भाषा

जंगली भूमि पर उन नायिकाओं के जघनस्थलों ने, नीचे लटकी हुई साड़ी के किनारों से, मानो अङ्गनाओं के चरणों में पीड़ा देने वाली सूर्य की गर्मी को मार्ग से दूर कर देने के लिए हवा करना प्रारम्भ कर दिया । अर्थात् ऊपर उठे जघनस्थल के धक्कों से आगे की ओर चुनिया कर पहनी हुई साड़ी के किनारों के आगे पीछे होने से चरणों को हवा लगती थी ।

शश्वद्विलासव्यजनानुकारि-कर्णावतंसार्पितपल्लवानाम् ।
न स्वेदवारि क्षितिपाङ्गनानां गण्डस्थलीषु स्थितिमाससाद ॥६७॥

अन्वयः

शश्वद्विलासव्यजनानुकारिकर्णावतंसार्पितपल्लवानां क्षितिपाङ्गनानां गण्डस्थलीषु स्वेदवारि स्थितिं न आससाद ।

व्याख्या

शश्वन्निरन्तरं विलासव्यजनमनुकरोतीति शश्वद्विलासव्यजनानुकारी कर्णावतंसः कर्णभूषणरूपोऽर्पितः कर्णयोरुपरि दत्तः पल्लवः याभिस्तास्तासां क्षितिपस्य नृपस्याङ्गनानां कामिनीनां गण्डस्थलीषु कपोलप्रान्तेषु 'अधस्ताच्चिबुकं गण्डौ कपोलौ' इत्यमरः । स्वेदवारि घर्माम्भः 'घर्मो निदाघः स्वेदः स्यात्' इत्यमरः । स्थितिं निवासं नाऽऽससाद न प्राप । अत्र काव्यलिङ्गमलङ्कारः ।

भाषा

सुन्दर पखे का अनुकरण करने वाले, कर्णभूषण के रूप में निरन्तर धारण किये हुए कोमल पत्तों वाली राजा की स्त्रियों के गालों पर पसीना नहीं आ सका। अर्थात् कर्णभूषणरूप कोमल पत्ते पखे का काम करते थे।

मुखाग्रचुम्बीनि नितम्बिनीनां तासां विरेजुः कुचमण्डलानि।
श्रमाम्बुशान्त्यै हिमशीतलानां श्वासानिलानामिव सेवनाय ॥६८॥

अन्वयः

नितम्बिनीनां तासां कुचमण्डलानि श्रमाम्बुशान्त्यै हिमशीतलानां श्वासानिलानां सेवनाय इव मुखाग्रचुम्बीनि विरेजुः।

व्याख्या

नितम्बिनीनां प्रशस्तश्रोणियुतानां तासां नृपाङ्गनानां कुचमण्डलानि स्तनमण्डलानि श्रमाम्बु घर्मजाम्भः तस्य शान्त्यै विनाशाय दूरीकरणाय वा हिमवत्तुषारवच्छीतलानां शीतस्पर्शवतां 'तुषारस्तुहिनं हिमम्' इत्यमरः। श्वासानिलानां निश्वासवायूनां सेवनाय इव ग्रहणायेव मुखाग्रचुम्बीनि मुखाग्रपर्यन्तसमुन्नतानि विरेजुः शुशुभुः। अत्र फलोत्प्रेक्षालङ्कारः।

भाषा

बड़े २ नितम्बवाली राजा की स्त्रियों के स्तन मण्डल, मानों पसीने को दूर कर देने के लिए बरफ के ऐसे ठण्डे श्वास के वायु का सेवन करने के उद्देश से उन स्त्रियों की ठुड्डी तक उन्नत हो गए थे। अर्थात् उनके स्तन खूब ऊँचे उठे हुए थे।

हंसाः खमुड्डीय गताश्चुलुक्य-भूपालकान्तागतिचौर्यभाजः।
तदादिपुंसः श्रयितुं भयेन विमानहंसानिव पद्मयोनेः ॥६९॥

अन्वयः

चुलुक्यभूपालकान्तागतिचौर्यभाजः हंसाः भयेन तदादिपुंसः पद्मयोनेः विमानहंसान् श्रयितुम् इव खम् उड्डीय गताः।

व्याख्या

चुलुक्यभूपालस्य विक्रमाङ्कस्य कान्ताः, अङ्गनास्तासां गतिः गमनविलासः तस्याश्चौर्यं तमपहरणं तद्भजन्तीति चुलुक्यभूपालकान्तागतिचौर्यभाजः हंसाः

मराला भयेन गमनविलासापहरणापराधाद्बन्धनभीत्या स प्रसिद्धः आदिपुमान् इति तदादिपुमान् तस्य तदादिपुंसः पद्मयोनेः ब्रह्मणः 'धाताब्जयोनिर्द्रुहिणो विरिञ्चिः' इत्यमरः। विमानहंसान् विमानवाहकराजहंसान् श्रेष्ठसमीपे रक्षासम्भावन स्यादिति बुद्धया श्रयितुं शरणार्थमिव खमाकाशमुड्डीय पलाय्य गताः प्राप्ताः।

## भाषा

चुलुक्यदेश के राजा विक्रमाङ्कदेव की स्त्रियों की चलने की चाल को चुरा लेने वाले हंस, भय से मानो उस प्रसिद्ध आदि पुरुष ब्रह्मा के विमान के हंसों की शरण लेने के लिये आकाश में उड़कर भाग गए। अर्थात् बड़ों की शरण में जाने से रक्षा हो सकेगी इस उद्देश से वहाँ चले गए।

क्रीडासरस्तामरसावतंसमुद्वेलहेलाञ्चितपादचारः।
विवेश ताभिः सह भूमिपालः करेणुभिः सार्धमिव द्विपेन्द्रः ॥७०॥

## अन्वयः

उद्वेलहेलाञ्चितपादचारः भूमिपालः ताभिः सह द्विपेन्द्रः करेणुभिः सार्धम् इव तामरसावतंसं क्रीडासरः विवेश।

## व्याख्या

वेला सीमामुत्क्रान्तेति उद्वेला चासौ हेला क्रीडा तया अञ्चितः सहितः पादचारः पादैर्भ्रमणं यस्य सः उद्वेलहेलाञ्चितपादचारः भूमिपालः विक्रमाङ्कदेवः ताभिरङ्गनाभिः सह द्विपेन्द्रः गजेन्द्रः करेणुभिः करिणीभिः 'करेणुरिभ्यां स्त्रीनेभे' इत्यमरः। सार्धं साकं 'सार्धं तु साकं सत्रा समं सह' इत्यमरः। इव तामरसानि कमलान्येवावतंसो भूषणं 'पङ्केरुहं तामरसं' इत्यमरः। यस्य तत् क्रीडासरः लीलातडागं विवेश प्रविष्टवान्।

## भाषा

अत्यधिक खेलवाड़ से पाँव फेंकने वाले राजा विक्रमाङ्कदेव ने उन कामिनियों के साथ हथिनियों के साथ हाथी के समान कमलों से विभूषित क्रीडावापी में प्रवेश किया।

दत्तं सरोभ्यः फलमम्बुजानां सङ्गेन कान्तामुखतस्कराणाम्।
एषामकल्पन्त नृपाङ्गनाभिर्विलोचनानीव यदुत्पलानि ॥७१॥

### अन्वयः

कान्तामुखतस्कराणाम् अम्बुजानां सङ्गेन सरोभ्यः फलं दत्तम् । यत् नृपाङ्गनाभिः विलोचनानि इव एषाम् उत्पलानि अकृष्यन्त ।

### व्याख्या

कान्तानां नृपकामिनीनां मुखानां वदनानां (शोभायाः) तस्कराश्चौरास्तेषामम्बुजानां कमलानां सङ्गेन सहवासेन हेतुना सरोभ्यस्तडागेभ्यः 'पद्माकरस्तडागोऽस्त्री कासारः सरसी सरः' इत्यमरः। फलं परिणामः दत्तम् समर्पितम् । यत् यत् नृपाङ्गनाभिः विक्रमाङ्कदेवकामिनीभिः विलोचनानि नयनानीव एषां सरोवराणामुत्पलानि नीलकमलानि अकृष्यन्त हृतानि । तत्संसर्गो च पञ्चमः इति वचनात् ।

### भाषा

कान्ताओं के मुखों की शोभा को चुराने वाले चोर कमलों की सङ्गति से तलावों को अच्छी सजा मिली । क्यों कि राजाओं की स्त्रियों ने इन तलावों के नेत्रों के समान कमलों को निकाल कर खींच लिया ।

**विपर्ययस्तत्र बभूव कान्ता-बिम्बौष्ठरागाञ्जनपुञ्जसङ्गात् ।**
**रक्ताम्बुजत्वं दधुरुत्पलानि पद्मानि नीलोत्पलतामवापुः ॥७२॥**

### अन्वयः

तत्र कान्ताबिम्बौष्ठरागाञ्जनपुञ्जसङ्गात् विपर्ययः बभूव । उत्पलानि रक्ताम्बुजत्वं दधुः पद्मानि नीलोत्पलताम् अवापुः ।

### व्याख्या

तत्र सरसि कान्तानां कामिनीनां बिम्बोष्ठानां बिम्बसमरक्ताधराणां रागस्य रक्तवर्णस्याऽञ्जनस्य कृष्णाञ्जनस्य नेत्राञ्जनस्य यत्पुञ्ज समूहस्तस्य सङ्गात् सम्बन्धात् विपर्ययो वैपरीत्यं बभूव जातम्। उत्पलानि नीलकमलानि रक्ताम्बुजत्वं रक्तकमलत्वं दधुः प्रापुः रक्तवर्णपुञ्जस्याधररससक्तस्य जलसंसर्गेण द्रवीभूतस्य सम्बन्धात् नीलेन्दीवराणि रक्तत्वं दधुः । पद्मानि रक्तकमलानि नेत्राञ्जनस्य जलेन द्रवीभूतस्य संसर्गात् नीलोत्पलत्वं नीलेन्दीवरत्वमवापुः । अत्र तद्गुणालङ्कारः ।

### भाषा

उस तलाव में कामिनियों के बिम्ब के ऐसे लाल ओठों की लालिमा के और आंख में के काले अञ्जन के समूहों के संसर्ग से वैपरीत्य उत्पन्न हो गया। तालाब में के नीलकमल लाल तथा लाल कमल नीले हो गये। अर्थात् लाल ओठों के संसर्ग से नीलकमल लाल तथा अञ्जन के संसर्ग से लालकमल काले हो गये।

**विलासयुद्धेन नितम्बिनीनां सर्वाण्यभज्यन्त सरोरुहाणि।**
**प्रागेव पृथ्वीतिलके निषण्णा लक्ष्मीश्चिराद्बुद्धिमती बभूव ॥७३॥**

### अन्वयः

नितम्बिनीनां विलासयुद्धेन सर्वाणि सरोरुहाणि अभज्यन्त। प्राक् एव पृथ्वीतिलके निषण्णा लक्ष्मीः चिरात् बुद्धिमती बभूव।

### व्याख्या

नितम्बिनीनां प्रशस्तश्रोणिमतीनां कान्तानां विलासयुद्धेन केलिकलहेन सर्वाणि सकलानि सरोरुहाणि कमलानि अभज्यन्त भग्नानि पराजितानि जातानि प्राक् एव सर्वकमलविनाशात्पूर्वमेव पृथ्वीतिलके विक्रमाङ्कदेवे निषण्णा समासीना लक्ष्मीः चिरात् बहुकालपूर्वमेव बुद्धिमती बभूव साधुबुद्धिमती बभूव। लक्ष्म्या चिन्तितं यन्मया पूर्वमेव कमलासनं त्यक्त्वा राज्ञि आसनं गृहीतं तत् साधु कृतम्, यत इदानीं पद्मरूपासने विनाशं गते आसनाभावः स्यादिति भावः। अत्र समासोक्तिरलङ्कारः।

### भाषा

स्थूल नितम्बवाली कामिनियों के परस्पर जलक्रीडा रूपी झकझोर से समग्र कमल टूट गये। पहिले ही से पृथ्वी के भूषण विक्रमाङ्कदेव के पास आ रहने वाली लक्ष्मी बहुत पहिले ही सुबुद्धि वाली हो गई थी। अर्थात् लक्ष्मी ने पहिले ही यह जान कर की सब कमल नष्ट हो जाएँगे, जो कि मेरा आसन है, दूरदर्शिता से अपना आसन विक्रमाङ्कदेव में जमा लिया था।

**विधाय भूपालपुरन्ध्रिपाद-प्रक्षालनं वीचिकरैः सरस्या।**
**समुच्छलच्छीकरविभ्रमेण तदङ्घ्रिपानीयमवन्द्यतेव ॥७४॥**

अन्वयः

सरस्या वीचिकरैः भूपालपुरन्ध्रिपादप्रक्षालनं विधाय समुच्छलच्छीकरविभ्रमेण तदङ्घ्रिपानीयम् अवन्द्यत इव ।

व्याख्या

सरस्या कासारेण 'कासारः सरसी सरः' इत्यमरः । वीचयस्तरङ्गाः 'भङ्गस्तरङ्गऊर्मिर्वा स्त्रियां वीचिरथोर्मिषु, इत्यमरः । एव करा हस्तास्तैः भूपालस्य नृपस्य विक्रमाङ्कदेवस्य पुरन्ध्र्यः कान्तास्तासां पादानां चरणानां प्रक्षालनं विधाय कृत्वा समुच्छलन्तः ऊर्ध्वं गच्छन्तः शीकराः जलबिन्दवस्तेषां विभ्रमो विलासस्तेन समुच्छलच्छीकरविभ्रमेण तासां नृपाङ्गनानामङ्घ्रयः पादास्तेषां सम्बन्धिप्रक्षालनाच्च्युतं जलं श्रद्धया अवन्द्यत इव नमस्यतां सम्प्रापितमिव प्रतीयत इत्युत्प्रेक्षाऽलङ्कारः ।

भाषा

तालाब ने लहररूपी हाथों से राजा की स्त्रियों के पावों को धोकर उछलने वाली जल की बूँदों के विलास या शोभा से मानो उनके चरण जल को नमस्कार किया ।

किमप्यवज्ञातसरोरुहेभ्यः सरस्तदासां पदपल्लवेभ्यः ।
परीक्षणायेव निसर्गकान्तेरलक्तकं वीचिभिराचकर्ष ।।७५।।

अन्वयः

किम् अपि सरः वीचिभिः आसाम् अवज्ञातसरोरुहेभ्यः पदपल्लवेभ्यः तत् अलक्तकं निसर्गकान्तेः परीक्षणाय इव आचकर्ष ।

व्याख्या

किमपि अनिर्वचनीयशोभानिधानं सरः वीचिभिस्तरङ्गैः 'भङ्गस्तरङ्गऊर्मिर्वा स्त्रियां वीचिः' इत्यमरः । आसां विलासिनीनामवज्ञातान्यपमानितानि निजकान्त्या सरोरुहाणि कमलानि यैस्ते तेभ्यः अवज्ञातसरोरुहेभ्यः पदानि चरणानि एव पल्लवास्तेभ्यः तत् प्रसिद्धशोभास्पदमलक्तकं लाक्षारागं 'राक्षा लाक्षा जतु क्लीबे यावोऽलक्तो द्रुमामयः' इत्यमरः । पदेषु विलिप्तं निसर्गेण स्वभावेन प्रकृत्यैव कृत्रिमतां विहाय जाता या कान्तिस्तस्या निसर्गकान्तेः कामिनीचरणानां नैसर्गिककान्तिः वर्तते कृत्रिमा वेति परीक्षणाय सम्यग्ज्ञानार्थमिवाऽऽचकर्ष प्रक्षालनं चकार । अत्रोत्प्रेक्षाऽलङ्कारः ।

### भाषा

किसी तालाव ने अपनी लहरों से इन विलासिनी स्त्रियों के क
नीचा दिखाने वाले पादपल्लवों से उस अलते को मानो पावों की स्वा
कान्ति की परीक्षा करने के लिये धो लिया। अर्थात् जल में चिरका
रहने से उनके पावों में लगा अलता छूट गया।

सरःप्रवेशे नृपसुन्दरीणां पादेषु संरब्धशिलीमुखेषु ।
प्रागेव भिन्नः श्रमवारिलेशैरलक्तकः पादतलं मुमोच ॥७६॥

### अन्वयः

नृपसुन्दरीणां सरःप्रवेशे संरब्धशिलीमुखेषु पादेषु श्रमवारिले
प्राक् एव भिन्नः अलक्तकः पादतलं मुमोच।

### व्याख्या

नृपसुन्दरीणां विक्रमाङ्कदेवकामिनीनां सरस्सु प्रवेशे कृते सति संरब्धा कमलसौगन्ध्यादुद्भ्रान्ताः शिलीमुखाः भ्रमराः 'अलिबाणौ शिलीमुखौ' इत्यमरः। येषु ते तेषु संरब्धशिलीमुखेषु पादेषु चरणेषु लग्नः श्रमवारिलेशैः कमलसुगन्धलोभात्समागतभ्रमरनिवारणजन्यश्रमवशात्संजातस्वेदजलकणैः प्रागेव पूर्वमेव भिन्नः पादात्पृथग्भूतः विगतरागोऽलक्तको यावकरसः 'यावोऽलक्तो द्रुमामयः' इत्यमरः। पादतलं चरणतलं मुमोच परितत्याज।

### भाषा

राजा विक्रमाङ्कदेव की सुन्दरियों के तालाब में प्रवेश करने पर चरण कमल की सुगन्ध से उद्भ्रान्त भ्रमरों से युक्त पावों में, भ्रमरों को हटाने के श्रम से निकले हुए थोड़े प्रस्वेद से, पूर्व ही छूटे हुए अलते ने (रंग ने) पावों को छोड़ दिया। अर्थात् तालाब में जाने के पहिले ही उनके पावों से छूटा हुआ अलता (लाल रंग) पानी से बिलकुल छूट गया।

पद्मप्रभाहारिहिमैकधाम्नस्तुषारशैलादिदमाजगाम ।
चिक्षेप साक्षेपमितीव तासां पद्माकरः कुङ्कुममङ्गकेभ्यः ॥७७॥

### अन्वयः

पद्माकरः तासाम् अङ्गकेभ्यः कुङ्कुमं पद्मप्रभाहारिहिमैकधाम्नः तुषारशैलात् इदम् आजगाम इति साक्षेपम् इव चिक्षेप।

### व्याख्या

पद्मानां कमलानामाकरो निधिस्तडागः पद्माकरः तासां कामिनीनामङ्गा-न्यङ्गानीत्यङ्गकानि तेभ्यः शरीरावयवेभ्यः कुङ्कुमं केसरं 'अथ कुङ्कुमम् । काश्मीरजन्माग्निशिखं वरं' इत्यमरः । पद्मानां कमलानां प्रभायाः कान्तेर्हरिर विनाशकं यद्धिमं तस्यैकमद्वितीयं धाम स्थानं तस्मात् तुषा-रशैलात् हिमालयाभिधानात्पर्वतात् इदं कुङ्कुममागमत्, निर्गत्याऽगतमिति विचार्य, तुषारशैले वैरनिर्यातनासामर्थ्यात्तत्सम्बन्धिकुङ्कुमेषु एव वैरनिर्यातन-बुद्धया साक्षेपं सतिरस्कारं यथास्यात्तथा चिक्षेप दूरं चकार । धवलकान्तिमद्भ्यः शरीरावयवेभ्यो निःसृतं कुङ्कुमं धवलकान्तिमतस्तुषारशैलादेव समागतमिति धिया तं चिक्षेपेति भावः । अत्र प्रत्यनीकनामाऽलङ्कारः ।

### भाषा

कमलों के निधि उस तालाब ने, उन सुन्दरियों के अङ्ग प्रत्यङ्ग से छूटे हुए केसर को, कमलों की शोभा को नष्ट करने वाले बरफ के प्रमुख स्थान हिमालय पर्वत से यह आया है, ऐसा समझ कर, तिरस्कार के साथ उसे फेंक दिया। अर्थात् बरफ से कमल नष्ट हो जाते हैं इसलिये बरफ के प्रधान स्थान हिमालय से कमलाकर का बुरा मानना स्वाभाविक ही है। परन्तु उसका कुछ भी बिगाड़ सकने की शक्ति न होने से धवल कान्ति वाले सुन्दरियों के अङ्ग से निकले हुए केसर को धवल कान्ति वाले हिमालय पर्वत से आया हुआ समझ कमलाकर ने उसका तिरस्कार किया।

**मग्ना गभीरे पयसि प्रमादात् प्रविश्य देवेन विकृष्यमाणा ।**
**ससंभ्रमाभिः प्रतिकामिनीभिर्विलोकिता काचिदसूयिता च ॥७८॥**

### अन्वयः

प्रमादात् गभीरे पयसि प्रविश्य मग्ना काचित् देवेन विकृष्यमाणा ससंभ्रमाभिः प्रतिकामिनीभिः विलोकिता असूयिता च ।

### व्याख्या

प्रमादात् अनवधानात् 'प्रमादोऽनवधानता' इत्यमरः । गभीरे अगाधे पयसि जले प्रविश्य प्रवेशं लब्ध्वा मग्ना जले निमग्ना काचित् कामिनी देवेन विक्रमाङ्कदेवेन विकृष्यमाणा जलादहिःप्रदेशं प्राप्यमाणा सती संभ्रमेण सहिताभिः

ससम्भ्रमाभिराश्चर्यसमन्विताभिः प्रतिकामिनीभिः सपत्नीभिः विलोकिता परिदृष्टा असूयिता ईर्ष्यया 'अक्षान्तिरीर्ष्यासूया तु' इत्यमरः । व्यवहृता च ।

### भाषा

अनवधानता से गहरे पानी में जाकर डूबी हुई और विक्रमाङ्कदेव द्वारा खींच कर बाहर निकाली हुई किसी सुन्दरी को सौतों ने देखा और वे उस सुन्दरी से ईर्ष्या करने लगीं। अर्थात् यह सुन्दरी धन्य है, जिसके लिये परिश्रम कर स्वयं विक्रमाङ्कदेव ने इसे डूबने से बचाया, इस विचार से ईर्ष्या उत्पन्न हुई।

**आकृष्य लक्ष्मीं ध्रुवमुद्रसत्वं पद्मान्यनीयन्त मुखैस्तदीयैः ।**
**धूलीभृतानां वसतित्वमापुर्यदध्वगानामिव षट्पदानाम् ॥७६॥**

### अन्वयः

तदीयैः मुखैः पद्मानि लक्ष्मीम् आकृष्य ध्रुवम् उद्रसत्वम् अनीयन्त यत् धूलीभृतानाम् अध्वगानाम् इव षट्पदानां वसतित्वम् आपुः ।

### व्याख्या

तासां कामिनीनामिमानीति तदीयानि तैस्तदीयैर्मुखैर्वदनैः कर्तृभिः पद्मानि कमलानि लक्ष्मीं पद्मशोभामाकृष्य हठात् गृहीत्वा ध्रुवं निश्चयेन उद्गतोऽपसृतो रसो येभ्यस्ते उद्रसास्तेषां भाव उद्रसत्वं रसशून्यत्वममनोहरत्वमनीयन्त प्रापितानि यद्यस्मात्कारणात् धूलीभिः परागैः रजोभिश्च 'रेणुर्द्वयोः स्त्रियां धूलिः पांसुर्ना न द्वयो रजः' इत्यमरः । भृता युक्तास्तेषां धूलीभृतानामध्वगानां पथिकानामिव 'अध्वनीनोऽध्वगोऽध्वन्यः पान्थः पथिक इत्यपि' इत्यमरः । षट्पदानां भ्रमराणां वसतित्वं स्थानत्वमापुः प्रापुः । धूलिधूसरितानां पथिकानां मार्गे निवासाय निःशोभं धर्मशालात्वमेवाऽऽपुः ।

### भाषा

उन सुन्दरियों के मुखों ने कमलों की शोभा को निश्चय ही उनसे छीनकर उन्हें नीरस या असुन्दर बना दिया। इसलिये धूल से भरे यात्रियों के समान पराग से भरे भौंरों के ये कमल केवल निवासस्थान बन गए। अर्थात् ये कमल सराय के समान भ्रमररूपी यात्रियों के निवासस्थान मात्र रह गए।

**स्फुरत्प्रभाणां नृपवल्लभानां तासां पुरस्तात्सरसीरुहेषु ।**
**भृ[1]ङ्गप्रपामण्डपसंनिभेषु रेजे प्रपापालिकयेव लक्ष्म्या ॥८०॥**

अन्वयः

स्फुरत्प्रभाणां तासां नृपवल्लभानां पुरस्तात् भृङ्गप्रपामण्डपसंनिभेषु सरसीरुहेषु प्रपापालिकया इव लक्ष्म्या रेजे ।

व्याख्या

स्फुरन्ती देदीप्यमाना प्रभा कान्तिर्यासान्तास्तासां स्फुरत्प्रभाणां तासां प्रसिद्धसौन्दर्याणां नृपवल्लभानां राजकान्तानां पुरस्तादग्रे तुलनायामित्यर्थः । भृङ्गप्रपामण्डपसन्निभेषु भ्रमरपानीयशालिकातुल्येषु सरसीरुहेषु 'सारसं सरसीरुहम्' इत्यमरः । प्रपापालिकया पानीयशालाधिष्ठात्र्या 'प्रपा पानीयशालिका' इत्यमरः । इव लक्ष्म्या रेजे दीप्यते स्म ।

भाषा

चमकने वाली कान्ति से युक्त राजाओं की उन कामिनियों के आगे अर्थात् उनकी तुलना में, भौंरों के पौसरों के समान उन कमलों में मानों लक्ष्मी पानी पिलाने वाली के समान शोभित होती थी । अर्थात् लक्ष्मी के सदैव कमल पर रहने से वह कमलों में पानी पिलाने वाली के ऐसी शोभित होती थी ।

**सरः प्रविष्टेषु नितम्बिनीनां नितम्बबिम्बेषु शिलाघनेषु ।**
**तदीयलावण्यरसप्रवाह-सङ्गादिवोत्तुङ्गतरङ्गमासीत् ॥८१॥**

अन्वयः

नितम्बिनीनां शिलाघनेषु नितम्बबिम्बेषु प्रविष्टेषु (सत्सु) तदीयलावण्यरसप्रवाहसङ्गात् इव सरः उत्तुङ्गतरङ्गम् आसीत् ।

व्याख्या

नितम्बिनीनां कामिनीनां शिला इव घनानि सान्द्राणि तेषु नितम्बबिम्बेषु श्रोणिमण्डलेषु प्रविष्टेषु (सत्सु) तदीयलावण्यरसप्रवाहसङ्गात् कामिनीसम्बन्धिसौन्दर्यरसप्रवाहस्य सम्बन्धात् व सरस्तडाग उत्तुङ्गास्समुन्नतास्तरङ्गा ऊर्मयो 'भङ्गस्तरङ्ग ऊर्मिर्वा' इत्यमरः । यस्मिन्तत् उत्तुङ्गतरङ्गं आसीत् जातम् ।

---

[1] भृङ्गप्रपामण्डपसंनिभेष्विति पाठस्तु चिन्त्य ।

व्याख्या

क्षमापालस्य नृपस्य विक्रमाङ्कदेवस्य पुरन्ध्रिवर्गः कान्तासमूहस्तस्य निसर्गेण स्वभावेन 'स्वरूपं च स्वभावश्च निसर्गश्च' इत्यमरः। प्रकृत्यैव जातं यत्सौन्दर्यं तेन तिरस्कृता अपमानिता तस्या लक्ष्म्याः श्वासं प्रेङ्खितमुद्धतमिव परागचक्रं रजस्समूहः कमलानामुदरेभ्यो मध्यभागेभ्य उल्ललास सर्वत ऊर्ध्वं गच्छत् शुशुभे।

भाषा

राजा विक्रमाङ्कदेव की नारियों के स्वाभाविक सौन्दर्य से नीचा दिखाई जाने वाली लक्ष्मी के अपमान जनित निश्वासों से मानो उड़ा हुआ पराग का समूह कमलों के मध्य में से निकलता हुआ शोभित होता था।

स्तनद्वये निर्जितकुम्भिकुम्भे नृपावकीर्णा करयन्त्रधारा।
चारुभ्रुवः पञ्चशरप्रमुक्त–निशातनाराचतुलामधत्त ॥८४॥

अन्वयः

चारुभ्रुवः निर्जितकुम्भिकुम्भे स्तनद्वये नृपावकीर्णा करयन्त्रधारा पञ्चशरप्रयुक्तनिशातनाराचतुलाम् अधत्त।

व्याख्या

चारुणी सुन्दरे भ्रुवौ यस्यास्तस्या तस्याः चारुभ्रुवः सुभ्रुवोऽङ्गनायाः निर्जित स्वकीयशोभया स्वाकारेण वा तिरस्कृतं कुम्भिना हस्तिना कुम्भः शिरःपिण्डं 'कुम्भौ तु पिण्डौ शिरसः' इत्यमरः। येन तत्तस्मिन् निर्जितकुम्भिकुम्भे स्तनद्वये कुचयुगले नृपेणावकीर्णा क्षिप्ता करेण प्रयुक्ता जलयन्त्रस्य धारा पञ्चशरेण कामेन प्रयुक्ताः प्रेरिता निशातास्तीक्ष्णा नाराचा बाणविशेषाः 'प्रक्ष्वेडनास्तु नाराचा.' इत्यमरः। तेषां तुला साम्यमधत्त धृतवती। अत्रोपमालङ्कारः।

भाषा

सुन्दर भौंवो वाली राजा की कामिनिओं के, हाथी के दोनों गण्डस्थलों की शोभा को जीतने वाले दोनों स्तनों पर राजा विक्रमाङ्कदेव द्वारा हाथों से छोड़ी हुई पिचकारी, कामदेव द्वारा छोड़े हुए तीखे बाणों की समानता कर रही थी।

पानीयधारा नरनाथमुक्ता वामभ्रुवो वक्रितकन्धरायाः।
चूर्णं गताः कुण्डलरत्नकोटौ तत्रैव मुक्ताफलकान्तिमापुः ॥८५॥

### अन्वयः

वक्रितकन्धरायाः वामभ्रुवः कुण्डलरत्नकोटौ नरनाथमुक्ताः पानीयधाराः चूर्णं गताः तत्र एव मुक्ताफलकान्तिम् आपुः।

### व्याख्या

वक्रिता वक्रत्वं प्रापिता कन्धरा ग्रीवा 'अथ ग्रीवायां शिरोधिः कन्धरेत्यपि' इत्यमरः। यया सा तस्या वामे वक्रे भ्रुवौ यस्यास्सा तस्याः वामभ्रुवः कुण्डलरत्नानां कर्णावतंसमणीनां कोटौ अग्रभागे नरनाथेन नृपेण विक्रमाङ्कदेवेन मुक्ताः क्षिप्ताः पानीयधारा जलधाराश्चूर्णं गताः क्षोदं बिन्दुरूपत्वं प्राप्ताः कणशः कृता इत्यर्थः। तत्रैव कुण्डलरत्नेष्वेव मुक्ताफलानां कान्तिमापुः प्रापुः।

### भाषा

(मुख के छींटो को बचाने के लिये) अपने मुख को टेढ़ी गरदन कर पीछे की ओर करनेवाली टेढ़ी भौंहो वाली कामिनी के कुण्डलो के रत्नो के अग्रभाग में राजा विक्रमाङ्कदेव द्वारा छोड़ी हुई पानी की धाराएँ कणरूप में परिणत हो गईं और वहीं पर मोतियो की शोभा को प्राप्त हुईं।

**नरेन्द्रलीलाकरयन्त्रवारि लुलोठ देव्याः कुचकुम्भपीठे।**
**आश्चर्यमस्याः प्रतिवल्लभानामुत्पल्लवा मन्युलता बभूव ॥८६॥**

### अन्वयः

नरेन्द्रलीलाकरयन्त्रवारि देव्याः कुचकुम्भपीठे लुलोठ अस्याः प्रतिवल्लभानां मन्युलता उत्पल्लवा बभूव ( इति ) आश्चर्यम्।

### व्याख्या

नरेन्द्रस्य विक्रमाङ्कदेवस्य लीलया विलासेन युक्तं यत्करेण क्षिप्तं जलयन्त्रवत् (पिचकारी) वारि जलं देव्याश्चन्द्रलदेव्याः कुचकुम्भपीठे स्तनहस्तिशिरःपिण्डे महति स्तनमण्डले इत्यर्थः। लुलोठ पतितं, अस्याश्चन्द्रलेखायाः प्रतिवल्लभानां सपत्नीनां मन्युलता कोपवल्ली 'मन्युर्दैन्ये क्रतौ क्रुधि' 'वल्ली तु व्रततिर्लता' उभयत्रामरः। उत्पल्लवा उद्गतकिसलया. 'पल्लवोऽस्त्री किसलय' इत्यमरः। बभूव जाता (इति) आश्चर्यम्। स्वसपत्न्याः सौभाग्यं दृष्ट्वाऽन्याः सुन्दर्यः क्रोधयुक्ता जाता इति भावः। अन्यत्र जलसिञ्चनमन्यत्र च क्रोधलताया उत्पल्लवत्वमित्याश्चर्यकारणम्। असङ्गत्यलङ्कारः।

भाषा

राजा विक्रमाङ्कदेव के हाथो की पिचकारी का जल,चन्द्रलेखा के बडे २ स्तनमण्डलो पर पडा और इसके सौतो की क्रोधरूपी लता में नये-नये पत्ते निकलने लगे। यह एक आश्चर्य की बात है। अर्थात् चन्द्रलेखा के सौभाग्य को देखकर सौतो को ईर्ष्या से क्रोध आने लगा। जहाँ पानी सींचा जाता है वहीं लता में नये पत्ते उत्पन्न होते है, किन्तु कुचमण्डलो पर पानी सींचा जाने पर कामिनियो की क्रोधलता में नये पत्ते लगना एक आश्चर्य की बात है।

इत्युत्सवं भूतिलकोऽनुभूय लीलावगाहग्रहमुत्ससर्ज ।
निसर्गरम्येऽपि विचेष्टिते यदतिप्रसङ्गो रसभङ्गहेतुः ॥८७॥

अन्वयः

भूतिलकः इति उत्सवम् अनुभूय लीलावगाहग्रहम् उत्ससर्ज यत् निसर्गरम्ये विचेष्टिते अपि अतिप्रसङ्गः रसभङ्गहेतुः (भवति)।

व्याख्या

भुवः पृथिव्यास्तिलकोऽलङ्कारस्वरूपः विक्रमाङ्कदेव इति पूर्वोक्तमुत्सवं जलक्रीडानन्दमनुभूय लीलावगाहस्य क्रीडास्नानस्य ग्रह संलग्नतामुत्ससर्ज परित्यक्तवान् यत् यस्मात्कारणात् निसर्गेण स्वभावेनैव 'स्वरूपं च स्वभावश्च निसर्गश्च' इत्यमरः। रम्यं कान्तं तस्मिन् विचेष्टितेऽपि व्यापारेऽपि अतिप्रसङ्गः अतिशयो बाहुल्यं वा रसभङ्गहेतुः रसभङ्गस्य कारणं भवति। अति सर्वत्र वर्जयेदिति न्यायात्।

भाषा

पृथ्वीराज विक्रमाङ्कदेव ने उपर्युक्त प्रकार से जल क्रीडा का उत्सव मना कर जल क्रीडा का भाव छोड दिया अर्थात् जल क्रीडा समाप्त कर दी। क्योंकि प्रकृत्या रमणीय चेष्टाओ में (कार्यों में) भी अति करना निरसता का हेतु हो जाता है।

अनञ्जनश्यामललोचनानामकुङ्कुमालेपनपिञ्जराणाम् ।
स्नानावसाने तलिनोदरीणामकृत्रिमं मण्डनमाविरासीत् ॥८८॥

अन्वयः

अनञ्जनश्यामललोचनानाम् अकुङ्कुमालेपनपिञ्जराणां तलिनोदरीणां स्नानावसाने अकृत्रिमं मण्डनम् आविरासीत्।

व्याख्या

अनञ्जनश्यामललोचनानाम्, अञ्जनं विनैव कृष्णनेत्राणामकुङ्कुमालेपन-पिञ्जराणां कुङ्कुमालेपनमन्तरैव पिङ्गलवर्णाना तलिनोदरीणां कृशोदरीणां स्नानान्ते अकृत्रिम स्वाभाविक मण्डनमलङ्कार आविरासीत् प्रकटितम्बभूव। कृत्रिममण्डनाभावे तासामकृत्रिमं मण्डनमाविरासीत्। "किमिव हि मधुराणा मण्डनं नाकृतीनामिति" कालिदासः। अत्र विभावनालङ्कार।

भाषा

अञ्जन के बिना ही काले नेत्रवाली, बिना केसर के पीले (सुनहरे) रंगवाली कृश उदरवाली (पतली कमरवाली) कामिनिओ का स्नान कर लेने से स्वाभाविक सौन्दर्य प्रकट हुआ।

सरः सनाथानि दधत्पयांसि पयोधरालेपनचन्दनेन।
तत्तत्क्षणाद्बालमृगेक्षणानां दध्रे वियोगादिव पाण्डिमानम् ॥८९॥

अन्वयः

पयोधरालेपनचन्दनेन सनाथानि पयांसि दधत् तत् सरः बालमृगेक्षणानां वियोगात् इव तत्क्षणात् पाण्डिमानं दध्रे।

व्याख्या

पयोधरेषु स्तनेष्वालेपनस्य विलेपनस्य विलेपनसम्बन्धि चन्दनं तेन सनाथानि युक्तानि पयांसि जलानि दधत् बिभ्रत् सरः कासारः 'कासारः सरसी सरः' इत्यमरः। बालमृगेक्षणानां बालहरिणेक्षणानां वियोगाद्विरहादिव तत्क्षणात् पाण्डिमानं पीतत्वं दध्रे दधार। विरहावस्थायां शरीरं पीततां धारयत्येवेति भावः।

भाषा

कामिनिओ के स्तनों में लिपे चन्दन से युक्त जलवाला अर्थात् पीले जलवाला वह तालाब, हरिण के बच्चे के समान चञ्चल नेत्रवाली कामिनिओ के वियोग से मानो उसी क्षण तुरन्त पीला पड गया। अर्थात् जलक्रीडा कर जल में से बाहर निकलते ही उन कामिनिओ के वियोग से मानो तालाब पीला पड गया।

अथांशुकानां परिवर्तनेन तासां वपुर्मण्डनकर्मणा च।
निश्चित्य पञ्चेषुरकुण्ठभावं देवे पुनः कार्मुकमाचकर्ष ॥९०॥

अन्वयः

अथ पञ्चेषुः तासाम् अंशुकानां परिवर्तनेन वपुर्मण्डनकर्मणा च अकुण्ठभावं निश्चित्य पुनः देवे कार्मुकम् आचकर्ष ।

व्याख्या

अथ सरोजलाद्बहिरागमनानन्तरं पञ्चेषुः कामः तासां रमणीनामंशुकानां वस्त्राणां 'वस्त्रमाच्छादनं वासश्चेलं वसनमंशुकम्' इत्यमरः । परिवर्तनेनाऽऽर्द्र-वस्त्रं परित्यज्याऽन्यनूतनवस्त्रधारणेन वपुषः शरीरस्य मण्डनकर्मणा प्रसाधनका-र्येण कामोद्दीपकेन च अकुण्ठभावं राज्ञः आर्द्रमनोभिलाषे प्रयुक्तबाणस्य लक्ष्यभेदन निश्चित्यावधार्य पुनः देवे विक्रमाङ्कदेवे कार्मुकं धनुः 'धनुश्चापौधन्वशरासनको-दण्डकार्मुकम्' इत्यमरः । आचकर्ष आकृष्टवान् । विक्रमाङ्कदेवः पुनः स्त्रीणा-मपूर्वकान्तिनिरीक्षणात् कामवशंवदो जात इत्यर्थः ।

भाषा

जलक्रीडा करके तालाब के बाहर आने पर कामदेव ने, उन कामिनिओं के कपड़ा बदल लेने के कारण और अपने शरीर का शृङ्गार कर लेने के कारण राजा का मन पसीजने से चलाया हुआ बाण अवश्य ही लक्ष्यभेद करेगा यह निश्चय कर फिर से राजा विक्रमाङ्कदेव के प्रति अपना धनुष ताना। अर्थात् नये साज में सजी उन कामिनिओं के अनुपम सौन्दर्य को देखकर राजा विक्रमाङ्कदेव कामाभिभूत हो गया।

शोभन्ते स्म विलासकुन्तललताः पुष्पैरिवाम्भःकणै-
जाता मज्जनशीतला कुचतटी कन्दर्पधारागृहम् ।
आसीत्किञ्च नराधिपप्रणयिनीवर्गस्य नैसर्गिक-
च्छायाखण्डनमण्डनव्यपगमाद्गात्रेषु चित्रा लिपिः ॥६०॥

अन्वयः

पुष्पैः इव अम्भःकणैः विलासकुन्तललताः शोभन्ते स्म । मज्जन-शीतला कुचतटी कन्दर्पधारागृहं जाता । किञ्च नराधिपप्रणयिनीवर्गस्य नैसर्गिकच्छायाखण्डनमण्डनव्यपगमात् गात्रेषु चित्रा लिपिः आसीत् ।

व्याख्या

पुष्पैः कुसुमैरिवाऽम्भःकणैर्जलकणैर्विलासकुन्तललता मनोहारिकेशरूपवल्लयः शोभन्ते स्म विद्योतन्ते स्म । मज्जनेन जले स्नानेन शीतला शीतस्पर्शवती

कुचतटी स्तनतटी कन्दर्पस्य कामस्य धारागृहं जलयन्त्रगृहमिव शैत्यविशिष्टा जाता । किञ्च नराधिपस्य देवस्य प्रणयिन्यो विलासिन्यस्तासां वर्गस्य समूहस्य नैसर्गिकी स्वाभाविकी या छाया कान्तिस्तस्याः खण्डनानां दूरीकारकाणां मण्डनानामलङ्काराणां व्यपगमादपसारणात् यात्रेषु अवयवेषु चित्रा मनोहारिणी लिपि शोभाऽवयवविन्यास आसीत बभूव ।

## भाषा

फूल के समान (सुन्दर) दिखाई देने वाली पानी की बूंदों से उनकी मनोहर केशपाश रूपी लताएँ शोभित हो रही थी। स्नान करने से शीतल नई हुई उनकी स्तनतटी कामदेव के पर्वत पर से बहने वाले झरने से युक्त स्नान करने की कोठडी हो गई थी अर्थात शीतल थी। साथ ही साथ राजा विक्रमाङ्कदेव की प्यारियों के समूह के शरीरों में, स्वाभाविक कान्ति को ढकने वाले आभूषणों के न रहने से, अङ्ग प्रत्यङ्ग में एक विचित्र शोभा दिखाई देती थी।

इति श्री त्रिभुवनमल्लदेव विद्यापति-काश्मीरकभट्ट श्री बिल्हणविरचिते विक्रमाङ्कदेवचरिते महाकाव्ये दशमः सर्गः ।

नेत्राब्जाभ्रयुगाङ्कविक्रमशरत्कालेऽत्र दामोदरात्
भारद्वाजयुधोत्तमात्समुदितः श्री विश्वनाथः सुधीः ।
सर्गे रामकुबेरपण्डितवरात्सम्प्राप्तसाहाय्यकः
सर्गेऽस्मिन्दशमे स्वाकरुणया टीकाद्वयं निर्ममे ॥

ॐ शान्तिः शान्तिः शान्तिः ।

॥ श्रीः ॥

## महाकविश्रीबिल्हणविरचितं

# विक्रमाङ्कदेवचरितम्

---

## एकादशः सर्गः

स्नानशेषघुसृणारुणभासां स्पर्शनादिव नरेन्द्रवधूनाम् ।
प्राप रश्मिपटली दिनभर्तुः पाटलत्वमथ संघटमाना ॥१॥

### अन्वयः

अथ संघटमाना दिनभर्तुः रश्मिपटली स्नानशेषघुसृणारुणभासां नरेन्द्रवधूनां स्पर्शनात् इव पाटलत्वं प्राप ।

### व्याख्या

अथ नृपस्त्रीणां जलविहारानन्तरं संघटमाना सायङ्कालसामीप्येन सङ्कोचं भजमाना दिनभर्तुस्सूर्यस्य रश्मिपटली किरणसमूहः स्नानाज्जलावगाहनात् शेषं प्रक्षालनावशिष्टं यतः कुङ्कुममिश्रितचन्दनस्य कश्चिद्भागस्तु जले गतः, यद् घुसृणं कुङ्कुमरक्तचन्दनं, स्त्रीणां शरीरेष्ववलिप्तं तेनाऽरुणा रक्तवर्णा भासो यासां तास्तासां नरेन्द्रवधूनां स्पर्शनात् सर्वाङ्गसम्पर्कादिव पाटलत्वं रक्तत्वं प्राप सम्प्राप्ता । अस्मिन्सर्गे स्वागताच्छन्दः । तल्लक्षणं यथा—स्वागता रनभगै-र्गुरुणा च । अत्रोत्प्रेक्षालङ्कारः ।

### भाषा

राजा की स्त्रियो के जलविहार क्रीडा के अनन्तर (सायंकाल के समयमें) सकोच को प्राप्त होने वाले सूर्य के किरण समूह मानो स्नान करने के बाद भी कुछ अवशिष्ट केसर के चन्दन से लाल कान्तिवाली राजा की स्त्रियो के स्पर्श से लालिमा को प्राप्त हो गये थे ।

कण्टकैरिव विदारितपादः पद्मिनीपरिचितैरपराद्रेः ।
आरुरोह सरसीरुहबन्धुः स्कन्धमम्बुधितटीगमनाय ॥२॥

अन्वयः

सरसीरुहबन्धुः पद्मिनीपरिचितैः कण्टकैः विदारितपादः इव अम्बुधितटीगमनाय अपराद्रेः स्कन्धम् आरुरोह ।

व्याख्या

सरसीरुहाणां कमलानां बन्धुः विकासकर्ता सूर्यः सरसीरुहबन्धुः पद्मिनीषु कमलिनीषु परिचिता व्याप्तास्तैः पद्मिनीपरिचितैः कण्टकैः विदारिताः सव्रणीकृताः पादाः किरणाः, विदारितौ पादौ चरणौ च "पादा रश्म्यङ्घ्रितुर्यांशाः" इत्यमरः । यस्य स विदारितपाद इवाऽम्बुधितटीगमनाय पश्चिमसमुद्रतीरप्राप्त्यै अपराद्रेः पश्चिमाचलस्य स्कन्धं अंसं 'स्कन्धो भुजशिरोऽंसोऽस्त्री' इत्यमरः । आरुरोह । विदारितपादत्वात् पश्चिमाचलस्कन्धे स्वात्मानं स्थापयामासेति भावः ।

भाषा

कमलों का मित्र सूर्य, कमलिनियों में लगे हुए काटों के पाँव में गड जाने से (चलने में असमर्थ होकर) मानो पश्चिम समुद्र तट पर जाने के लिये पश्चिमी पर्वत की चोटी पर या कन्धे पर सवार हो गया । अर्थात् पाँव में काँटे गड जाने पर मनुष्य स्वयं पाँव से चलने में असमर्थ होकर किसी के कन्धे पर बैठकर अपनी यात्रा पूरी करता है । उसी प्रकार सूर्य, पश्चिम समुद्र में अस्त होने के लिये जाता हुआ पश्चिमाचल पर विदारितपाद होने से चढ गया ।

मज्जतः पयसि पश्चिमसिन्धोः स्निग्धमम्बरतलं परिरभ्य ।
भास्वतस्तुपवियुक्तमसृग्-स्रोदपाटलमलक्ष्यत धाम ॥३॥

अन्वयः

पश्चिमसिन्धोः पयसि मज्जतः भास्वतः धाम स्निग्धम् अम्बरतलं परिरभ्य तुपवियुक्तमसृग्स्रोदपाटलम् अलक्ष्यत ।

व्याख्या

पश्चिमसमुद्रस्य पयसि जले मज्जतोऽन्तर्गच्छतो भास्वतः सूर्यस्य धाम तेजो मण्डलं वा "धाम रश्मौ प्रभावे च तेजो मन्दिरजन्मसु" इति विश्वः । स्निग्धं

मनोहरं अम्बरतलं आकाशतलं परिरम्य समालिङ्ग्य तदुपरि पतित्वा तुषेण धान्यत्वचा "धान्यत्वचि पुमास्तुष." इत्यमरः। वियुक्ता रहिता मसूराः मसूरनामकधान्यविशेषाः तेषां क्षोदश्चूर्णं "चूर्णे क्षोदः समुत्पिञ्जपिञ्जलौ" इत्यमरः। वर्तुलाकारार्यमागस्तद्वत्पाटलमोपद्रक्तमलक्ष्यत दृष्टम्। भाविविरहजनितदुःखेन स्वप्रियमालिङ्ग्य दुःखाविर्भावाच्छरीरस्य विशेषतो मुखकान्तेः रक्तत्वं स्वाभाविकमेवेति भावः।

### भाषा

पश्चिम समुद्र में डूबने वाले सूर्य का तेज या मण्डल, स्वच्छ चिकने आकाश मण्डल का आलिङ्गन कर बिना छिलके के मसूर की दाल के समान लाल दिखाई देने लगा।

**प्रार्थनार्थमिव रत्नरुचीनां भानुरब्धिमगमद्गतकान्तिः।**
**सत्त्वमुन्नतपदात्पतितानां विद्यते न महतामपि नूनम् ॥४॥**

### अन्वयः

गतकान्तिः भानुः रत्नरुचीनां प्रार्थनार्थम् इव अब्धिम् अगमत्, उन्नतपदात् पतितानां महताम् अपि सत्त्वं नूनं न विद्यते।

### व्याख्या

गता समाप्तिं प्राप्ता कान्तिर्द्युतिः यस्य सः गतकान्तिः भानुस्सूर्यः रत्नानां रुचयो भासस्तासां प्रार्थना ग्रहणेच्छाप्रकटनं तदर्थमिव रत्नरुचिग्रहणं कर्तुमिव अब्धिं समुद्रमगमत् ययौ। उन्नतपदात् उच्चस्थानात् पतितानामधोगतानां महतामपि तेजोबलशालिनामपि सत्त्वं आत्मबलं प्रतिष्ठा वा नूनं निश्चयेन न विद्यते न भवति। अत्रार्थान्तरन्यासोऽलङ्कारः।

### भाषा

कान्तिहीन सूर्य मानो रत्नों की कान्ति माँगने के लिये पश्चिम समुद्र में चला गया। ऊँचे पद से गिरे हुए बड़े लोगों में भी निश्चय ही स्वाभिमान नहीं रह जाता।

**चञ्चुसम्पुटगृहीतमृणाल-ग्रन्थिसूत्रनिवहेन रथाङ्गः।**
**विप्रयोगभयतो दयितायाः कण्ठपाशमिव कर्तुमियेष ॥५॥**

## अन्वयः

रथाङ्गः विप्रयोगभयतः चञ्चुसम्पुटगृहीतमृणालग्रंथिसूत्रनिवहेन दयितायाः कण्ठपाशं कर्तुम् इव इयेष ।

## व्याख्या

रथाङ्गश्चक्रवाकः "कोकश्चक्रश्चक्रवाको रथाङ्गाह्वयनामकः" इत्यमरः । विप्रयोगभयतः स्वप्रियावियोगजन्यत्रासाद्धेतोः चञ्चुसम्पुटेन गृहीतं यन्मृणालस्य बिसस्य "मृणालं बिसमब्जादि" इत्यमरः । ग्रन्थिसूत्राणि वस्तुद्वयग्रन्थनकारकसूत्राणि तेषां निवहेन समूहेन "समूहो निवहव्यूहसन्दोहविसरव्रजाः" इत्यमरः । दयितायाः प्रियायाः कण्ठपाशं गलरज्जुं कर्तुमिव, यदि तस्य प्रिया रज्जुनियन्त्रिता भवेत्तदा तस्या अन्यत्र गमनं न स्यादित्यर्थमियेष आकाङ्क्षत ।

## अथवा

### अन्वयः

रथाङ्गः दयितायाः विप्रयोगभयतः चञ्चुसम्पुटगृहीतमृणालग्रंथिसूत्रनिवहेन कण्ठपाशं कर्तुम् इव इयेष ।

### व्याख्या

रथाङ्गश्चक्रवाको 'कोकश्चक्रश्चक्रवाको रथाङ्गाह्वयनामकः' इत्यमरः । दयितायाः स्वपत्न्याश्चक्रवाक्या रात्रौ विप्रयोगभयतो वियोगजन्यत्रासाद्धेतोश्चञ्चुसम्पुटेन गृहीतं मृणालमेव बिसमेव 'मृणाल बिसमब्जादि' इत्यमरः । ग्रन्थिसूत्रं ग्रथनसूत्रं तेषां निवहेन समूहेन 'समूहो निवहव्यूहसन्दोह विसरव्रजाः' इत्यमरः । कण्ठपाशमात्मघाताय कण्ठरज्जुं कर्तुमिव सम्पादयितुमियेषाऽऽकाङ्क्षत ।

### भाषा

चकवे ने रात्रि आने पर अपनी स्त्री चकवी के वियोग होनेके भय से अपनी चोंच में लिए हुए मृणाल के डोरो के समूह से चकवी को बांध रखने के लिए मानो कण्ठपाश बनाया हो ।

### अथवा

चकवे ने रात्रि आने पर अपनी स्त्री के वियोग जनित दुःख के भय से मानों चोंच में लिए हुए मृणाल रूपी गांठ बांधने की रस्सियों के समूह से अपने गले की फांसी लगाने की रस्सी बनाना चाहा ।

क्रन्दति स्म न विवेद मृणालीं चञ्चुसम्पुटगतां लुठति स्म ।
वल्लभाविरहहालहलेन व्याकुलः किमकरोन्न रथाङ्गः ॥६॥

अन्वयः

वल्लभाविरहहालहलेन व्याकुलः रथाङ्गः क्रन्दति स्म चञ्चुसम्पुटगतां मृणालीं न विवेद लुठति स्म किम् न अकरोत् ।

व्याख्या

वल्लभायाः प्रियाया विरहो वियोग एव हालाहलं विषं 'हालाहलं हालहलं वदन्त्यपि हलाहलम्' इति द्विरूपकोशः। तेन व्याकुलो विह्वलस्सन् रथाङ्गश्चक्रवाकः क्रन्दति स्म तारशब्दं कृत्वा रोदिति स्म चञ्चुसम्पुटे गतां निविष्टां मृणालीं न विवेद न ज्ञातवान्, लुठति स्म इतस्ततः शरीरं परिवर्तयति स्म । किमशान्तिकार्यं नाऽकरोत् न कृतवान् । सर्वं विषपानकरमिवाऽकरोदिति भावः । यथा विषपानकृद्रोदिति मुखस्थवस्तु न जानाति स्वशरीरमितस्ततः परिवर्तयति तथाऽन्याश्च पीडासूचिकाः क्रियाः करोति तथैवाऽयमपीत्यर्थः । अत्रार्थापत्तिरलङ्कारः ।

भाषा

अपनी स्त्री के विरह रूप विष से घबड़ाया हुआ चकवा रोता था, चोंच में पकड़ी हुई मृणाली को नहीं जानता था, और इधर उधर करवटें लेता था । कौन सा अशान्ति सूचक कार्य वह नहीं करता था अर्थात् सब प्रकार के क्लेश सूचक व्यवहार उसमें दिखाई पड़ते थे । अर्थात् विष खाया हुआ मनुष्य जैसे बेहोशी में रोता है, मुँह में दी हुई किसी वस्तु का ज्ञान नहीं रखता और करवटें बदला करता है तथा अन्य क्रियाएँ करता है वैसे ही यह चकवा भी करता था ।

दीर्घपादपशिखासु गिरीणां मस्तकेषु शिखरेषु गृहाणाम् ।
दग्धकालवशतः शतखण्डं धाम चण्डकिरणस्य बभूव ॥७॥

अन्वयः

चण्डकिरणस्य धाम दीर्घपादपशिखासु गिरीणां मस्तकेषु गृहाणां शिखरेषु दग्धकालवशतः शतखण्डं बभूव ।

### व्याख्या

चण्डाः प्रखराः किरणा यस्य स तस्य चण्डकिरणस्य सूर्यस्य धाम तेजो दीर्घा अत्युन्नता ये पादपा वृक्षास्तेषां "वृक्षो महीरुहः शाखी विटपी पादपस्तरुः" इत्यमरः। शिखासु अग्रभागेषु गिरीणां पर्वतानां मस्तकेषु शिखरेषु गृहाणां भवनानां शिखरेषु शृङ्गेषु "कूटोऽस्त्री शिखरं शृङ्गम्" इत्यमरः। दग्धकालवशतः दग्धः कालः सायङ्कालः यद्वा हतो दुष्टो यमराजस्तस्य वशतो हेतोः शतानि खण्डा-न्यवयवा यस्य सत् शतखण्डं बभूव। अत्र पदार्थहेतुकं काव्यलिङ्गमलङ्कारः।

### भाषा

प्रचण्ड किरण वाले सूर्य का तेज ऊँचे २ वृक्षों की चोटियों पर, पर्वतों के शिखरों पर तथा मकानों के ऊँचे भागों पर सायकाल होने से टुकड़ों में दीख पड़ता था। या दुष्ट यमराज के कारण सौ टुकड़े हो गया अर्थात् टुकड़े २ हो गया। अस्त काल में सूर्य की किरणें ऊँचे स्थानों पर ही दिखाई देती हैं।

**वासवस्तुरगरत्नममुष्मात् प्राप दास्यति ममापि कदाचित् ।**
**आशयेति जलराशिमयासीत् भानुरश्वपरिवर्तधियेव ॥८॥**

### अन्वयः

वासवः अमुष्मात् तुरगरत्नं प्राप कदाचित् मम अपि दास्यति इति आशया भानुः अश्वपरिवर्तधिया इव जलराशिम् अयासीत्।

### व्याख्या

वासव इन्द्रः "सुत्रामा गोत्रभिद्वज्री वासवो वृत्रहा वृषा" इत्यमरः। अमुष्मात् समुद्रात् तुरगरत्नमश्वेषु रत्नमुच्चैःश्रवसर्सतमश्वं प्राप कदाचित् सम्भवतः ममापि महामपि दास्यति इत्याशया भानुस्सूर्यः स्वकीयाश्वानां परिवर्तस्य निस्सारण-पूर्वकान्यग्रहणस्य धिया बुद्ध्या इव जलराशिं समुद्रमयासीत् गतवान्। अत्रो-त्प्रेक्षालङ्कारः।

### भाषा

इन्द्र ने समुद्र से ही घोड़ों में श्रेष्ठ उच्चैःश्रवा को पाया था शायद समुद्र मुझे भी दे, इस आशा से मानो सूर्य अपने पुराने घोड़ों को बदलने की इच्छा से समुद्र में चला गया।

**भानुमानपरदिग्वनितायाश्चुम्बति स्म मुखमुद्गतरागः ।**
**पद्मिनी किमु करोतु वराकी मीलिताम्बुरुहनेत्रपुटाभूत् ॥९॥**

अन्वयः

उद्गतरागः भानुमान् अपरदिग्वनितायाः मुखं चुम्बति स्म। वराकी पद्मिनी किमु करोतु मीलिताम्बुरुहनेत्रपुटा अभूत्।

व्याख्या

उद्गत उत्पन्नो रागः आरुण्यं प्रेम वा यस्य स उद्गतरागः भानुमान् सूर्यः परादिक् पश्चिमदिग् एव वनिताऽङ्गना तस्याः मुखं वदनं चुम्बति स्म। वराकी दीना पद्मिनी कमलिनी सूर्यस्य पत्युरन्यमार्गाविकासमीपगमनात् दुःखिता किमु करोतु केवलं मीलितानि सङ्कोचमापन्नानि अम्बुरुहाणि कमलानि एव नेत्रपुटानि यस्यास्ता अभूत्। अपरस्त्रीमुखचुम्बनदर्शनेन दुःखं माभूदिति हेतोस्स्वनयनमीलनमेव वरमिति चिन्तयति स्मेति भावः। अथवा पत्युः सपत्नीसंपर्कदर्शनाऽसहनतया नेत्रनिमीलनमकरोत्। अत्रैकदेशविवर्ति रूपकमलङ्कारः।

भाषा

लाल रंग का या प्रेम से भरा सूर्य पश्चिमदिशा रूपी दूसरी स्त्री का मुख चुम्बन करने लगा। अर्थात् पश्चिम दिशा की ओर चला गया। बिचारी पद्मिनी क्या करे। सौत का मुख चूमते हुए पति को न देखें, इससे, उसने अपने कमल रूपी नेत्रों को बन्द कर लिया।

वाजिनां गगनलङ्घनखेदच्छेदनाय मदिरामिव दातुम्।
कामुकः कमलिनीवनितानां वारुणीप्रभवमब्धिमयासीत् ॥१०॥

अन्वयः

कमलिनीवनितानां कामुकः वाजिनां गगनलङ्घनखेदच्छेदनाय मदिरां दातुम् इव वारुणीप्रभवम् अब्धिम् अयासीत्।

व्याख्या

कमलिन्यः पद्मिन्यो वनिताः स्त्रियस्तासां कामुकः प्रियः सूर्यः वाजिनामश्वानां "वाजिवाहार्वगन्धर्व" इत्यमरः। गगनस्य लङ्घनं पारगमनं तस्माद्यः खेदः क्लेशस्तस्य छेदनाय शमनाय मदिरां वाजिभ्यो मद्यं दातुमिव वारुण्या मदिरायाः "सुरा प्रत्यक् च वारुणी" इत्यमरः। प्रभवमुत्पत्तिस्थानमब्धिं समुद्रं "समुद्रोऽब्धिरकूपारः पारावारः सरित्पतिः" इत्यमरः। अयासीत् गतवान्। समुद्रमन्थनसमये वारुणी समुद्रात्समागतेति प्रसिद्धिः।

भाषा

कमलिनी रूपी स्त्रियों का कामुक सूर्य, आकाश को पार कर आए हुए घोड़ों का परिश्रम दूर करने के हेतु मानो शराब पिलाने के लिये शराब के उत्पत्ति स्थान समुद्र में चला गया। समुद्रमन्थन में समुद्र से शराब भी निकली थी।

सेवते स्म जलधौ प्रतिबिम्बं बिम्बपाटलमशीतमरीचेः ।
शेषकेलिशयनस्थितलक्ष्मी-वल्लभाभरणकौस्तुभलीलाम् ॥११॥

अन्वयः

अशीतमरीचेः बिम्बपाटलं प्रतिबिम्बं जलधौ शेषकेलिशयनस्थितलक्ष्मीवल्लभाभरणकौस्तुभलीलां सेवते स्म।

व्याख्या

अशीता उष्णा मरीचयः किरणा यस्य स तस्याशीतमरीचेस्सूर्यस्य बिम्बवत् बिम्बफलमिव पाटलं रक्तं प्रतिबिम्बं तस्य समुद्रजले पतिता रक्तच्छाया जलधौ समुद्रे शेषोऽहिराज एव केलिशयनं क्रीडाशय्यास्थलं तस्मिन् स्थिता विद्यमाना या लक्ष्मीस्तस्या वल्लभो नारायणस्तस्याऽऽभरणमलङ्कारस्वरूपो यः कौस्तुभो मणिस्तस्य लीलाया सदृशीं शोभां सेवते स्म तादृशीं शोभां दधौ। अत्र निदर्शनाऽलङ्कारः।

भाषा

उष्ण किरण वाले सूर्य का, बिम्बफल के ऐसा लाल प्रतिबिम्ब, समुद्र में शेषनाग रूपी सुख शय्या पर सोए हुए लक्ष्मी के पति भगवान् विष्णु के आभूषण रूप कौस्तुभमणि की शोभा को प्राप्त हुआ।

वाजिनामविशतां जलराशौ वारिवारणभयाद्दिनभर्ता ।
दातुमीक्षणपुटेष्विव मुद्रां द्राङ्निजातपपटं विचकर्ष ॥१२॥

अन्वयः

दिनभर्ता वारिवारणभयात् जलराशौ अविशतां वाजिनाम् ईक्षणपुटेषु मुद्रां दातुम् इव द्राक् निजातपपटं विचकर्ष।

### व्याख्या

दिनस्य भर्ता रक्षयिता दिनभर्ता सूर्यो वारिणो जलस्य वारणा गजास्तेषां भयात् वारिवारणभयात् जलगजकर्तृकाक्रमणजन्यभीतिवशात् जलराशौ समुद्रे-ऽधिशतां प्रवेशमनिच्छतां स्ववाजिनामश्वानामीक्षणपुटेषु नेत्रपुटेषु मुद्रां पिधानं दर्शनशक्तिराहित्यं दातुं समर्पयितुमिव द्राक् शीघ्र "द्राङ्मङ्क्षुसपदि द्रुते" इत्यमरः । निजातप एव पटो वस्त्रं त विचकर्षाऽऽकृष्टवान् ।

### भाषा

सूर्य ने, जल हाथियों के भय से समुद्र में न घुसने वाले घोड़ों की आँखों पर मानो पट्टा बाँधने के लिये अपने घाम रूपी वस्त्र को शीघ्र खींच लिया । घोड़े न भड़कें इसलिये उनकी आँखों पर पट्टे बाँधे जाते हैं ।

**भास्वति त्रिभुवनाङ्गणदीपे वेधसा प्रशमिते मरुतेव ।**
**धूमराजिरिव तत्प्रशमोत्था ध्वान्तसंततिरलक्ष्यत नीला ॥१३॥**

### अन्वयः

त्रिभुवनाङ्गणदीपे भास्वति मरुता इव वेधसा प्रशमिते ( सति ) तत्प्रशमोत्था धूमराजिः इव नीला ध्वान्तसन्ततिः अलक्ष्यत ।

### व्याख्या

त्रिभुवनमेवाङ्गणं अजिरं "अङ्गणं चत्वराजिरे" इत्यमरः । तस्य दीपे प्रकाशके भास्वति सूर्ये मरुता वायुना इव वेधसा ब्रह्मणा प्रशमिते निर्वापिते सति तस्य त्रैलोक्यदीपस्वरूपसूर्यस्य प्रशमेन शान्त्या उत्था समुद्गता धूमराजि-र्धूमसमूह इव नीला श्यामा ध्वान्तस्यान्धकारस्य "अन्धकारोऽस्त्रियां ध्वान्तम् तमिस्रं तिमिरं तमः" इत्यमरः । सन्ततिः समूहोऽलक्ष्यत अदृश्यत । अत्रोत्प्रेक्षा नामालङ्कारः ।

### भाषा

तीनों लोक रूपी आगन के दीप सूर्य के वायु के समान ब्रह्मा द्वारा बुता दिये जाने पर मानो सूर्य रूपी दीप के बुतने से पैदा भये हुये धूएँ के समूह के समान काले रंग का अन्धकार समूह दिखाई देने लगा ।

**रत्नराजिनिकरप्रकरेण प्राप्यमाण इव दीपकशङ्काम् ।**
**अम्बरादथ पपात पतङ्गस्तैलपात्रसदृशे जलराशौ ॥१४॥**

अन्वयः

अथ रत्नराजिनिकरप्रकरेण दीपकशङ्का प्राप्यमाणः इव पतङ्गः म्बरात् तैलपात्रसदृशे जलराशौ पपात ।

व्याख्या

अथानन्तरम् समुद्रस्थरत्नानां राजयः पंक्तयस्तासां निकरेण समूहेन दीप-काना शङ्का सम्भावनां प्राप्यमाणः प्राप्त इव पतङ्गः सूर्यः स एव शलभ "पतङ्गः पक्षिसूर्ययोः" इत्यमरः । अम्बरादाकाशात् "अम्बरं व्योम्नि वाससि" इत्यमरः । तैलपात्रेण तैलभाजनेन सदृशे समाने जलराशौ समुद्रे पपात वेगेन जगाम ।

भाषा

इसके अनन्तर मानो समुद्र स्थित रत्न-श्रेणियो के समूह के कारण दीये की शङ्का रखने वाला सूर्य या फतिङ्गा, आकाश से, तेल के पात्र के समान समुद्र में वेग से गिर गया ।

भानुवाहनखुरप्रहतानां वारिराशितटशुक्तिपुटानाम् ।
मौक्तिकैरिव कियद्भिरपि द्यौस्तारकैस्तिलकिता विरराज ॥१८॥

अन्वयः

भानुवाहनखुरप्रहतानां वारिराशितटशुक्तिपुटानां कियद्भिः मौक्तिकैः इव तारकैः तिलकिता द्यौः विरराज ।

व्याख्या

भानोस्सूर्यस्य वाहनानि वाजिनस्तेषां खुरैः पादतलन्यासैः प्रहतानां सताडि-तानां वारिराशेः जलराशेस्समुद्रस्य तटे वेलायां स्थितानां शुक्तिपुटानां कियद्भिः मौक्तिकैः मुक्ताभिरिव तारकैर्नक्षत्रैः "नक्षत्रमृक्षं भं तारा तारकाप्युडु वा स्त्रियाम्" इत्यमरः । तिलकिता तिलकसम्भूषिता शोभितेत्यर्थः, द्यौः नभः विरराज शुशुभे ।

भाषा

सूर्य के घोडो के खुरो से टूटे हुए, समुद्र के किनारे पर की सीपा के सम्पुटों में के कुछ मोतियों के समान तारा से तिलक धारण करने वाला अर्थात् सुन्दर आकाश शोभित होने लगा ।

पद्मकोटरकुटीरकबन्ध-त्रासविद्रुतमधुव्रतनीलम् ।
ध्वान्तमङ्कुशविहीनममाङ्क्षीद् व्योमसीमनि गतिं नयनानाम् ॥१६॥

अन्वयः

पद्मकोटरकुटीरकबन्धत्रासविद्रुतमधुव्रतनीलम् अङ्कुशविहीनं ध्वान्तं व्योमसीमनि नयनानां गतिम् अमाङ्क्षीत् ।

व्याख्या

पद्मानां कमलानां कोटरा मध्यस्थितावकाशाः "निष्कुहः कोटरं वा ना" इत्यमरः । एव कुटीरका अल्पकुट्यः तेषु बन्धाद्बन्धनाद् यः त्रासो भयं तेन विद्रुता पलायिता ये मधुव्रता भ्रमरा "मधुव्रतो मधुकरो मधुलिण्मधुपालिनः" इत्यमरः । तद्वत् नीलमङ्कुशविहीनं निर्भयं यथा स्यात्तथा सर्वत्र प्रसरणशीलं ध्वान्तमन्धकारः व्योमसीमनि आकाशमण्डले नयनानां नेत्राणां गतिं प्रसरणमभाङ्क्षीत् निरस्तवान् । सूर्यास्तेन घोरान्धकारप्रवृत्तिरिति भावः ।

भाषा

कमलो के मध्यस्थित खाली जमीन रूपी कुटिओ में बन्द हो जाने के भय से भागे हुए भौरो के समान काले रंग के, निडर होकर चारो ओर फैलने वाले अन्धकार ने, आकाशमण्डल में नयनो की गति को रोक दिया। अर्थात् सूर्यास्त हो जाने से अन्धकार से कुछ भी दिखाई नही पडता था।

नीलरत्नघटितेव समन्तात् पीडितेव निबिडाञ्जनपुञ्जैः ।
प्लावितेव जलराशितरङ्गैर्ध्वान्तराजिभिरभूद्भुवनश्रीः ॥१७॥

अन्वयः

भुवनश्रीः ध्वान्तराजिभिः समन्तात् नीलरत्नघटिता इव निबिडाञ्जनपुञ्जैः पीडिता इव जलराशितरङ्गैः प्लाविता इव अभूत् ।

व्याख्या

भुवनश्रीः सर्वलोकशोभा ध्वान्तराजिभिरन्धकारपरम्पराभिः समन्तात् सर्वदिक्षु नीलरत्नैर्नीलमणिभिर्घटिता रचितेव निबिडाञ्जनपुञ्जैर्घनाञ्जनसमूहैः पीडितेव सर्वत्र सञ्छादितेव जलराशितरङ्गैः समुद्रोर्मिभिः "भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रियां वीचिरथोर्मिषु" इत्यमरः । प्लावितेव व्याप्तेवाऽभूत् जाता । सर्वत्राऽन्धकारः प्रसृत इति भाव. । अत्रोत्प्रेक्षात्रयस्य संसृष्टिः ।

### भाषा

अन्धकार श्रेणियों से जगत भर की शोभा, मानो चारा और नीलमणियों से घटित होने के समान घने कज्जल के समूह से आच्छादित होने के समान और समुद्र की नीले रंग की लहरों से प्लावित होने के समान हो गई।

**चूर्णकुन्तलसटापरिपाट्या विप्रकीर्णमिव भालतलेषु ।**
**केशबन्धविभवैर्लटभानां पिण्डतामिव जगाम तमिस्रम् ॥१८॥**

### अन्वयः

लटभानां भालतलेषु चूर्णकुन्तलसटापरिपाट्या विप्रकीर्णम् इव तमिस्रं केशबन्धविभवैः पिण्डताम् इव जगाम ।

### व्याख्या

लटभानामङ्गनानां भालतलेषु मस्तकेषु विभृङ्खलाश्चूर्णकुन्तलसटा केशसमूहा तासां परिपाट्या छलेन विप्रकीर्णमितस्ततो विस्तृतमिव तमिस्रमन्धकारं केशबन्धानां संयतकेशानां धम्मिल्लानामित्यर्थं विभवैं रचनाभि बद्धकेशसाम्यात् पिण्डतां घनत्वं जगाम इव प्राप इव ।

### भाषा

सुन्दरियों के ललाटों पर पड़ी घुंघराले बालों की लटा के मिष से मानो चारों ओर बिखरा हुआ अन्धकार, केशों पर कंघी फेर कर उनका जूटा बाँध देने के समान मानो ठोस हो गया हो।

**सर्वनिह्नवविधौ कृतबुद्धेर्लोचनानि विफलानि विधाय ।**
**स्पर्शनेन्द्रियममुद्रितशक्ति प्रातिकूल्यमकरोत्तिमिरस्य ॥१९॥**

### अन्वयः

अमुद्रितशक्ति स्पर्शनेन्द्रियं लोचनानि विफलानि विधाय सर्वनिह्नवविधौ कृतबुद्धेः तिमिरस्य प्रातिकूल्यम् अकरोत् ।

### व्याख्या

अमुद्रिताऽप्रतिहता शक्तिस्सामर्थ्यं यस्य तत् अमुद्रितशक्ति अविलीनसामर्थ्यं स्पर्शनेन्द्रियं त्वगिन्द्रियं लोचनानि नयनानि विफलानि दर्शनशक्तिरहितानि विधाय कृत्वा सर्वेषां पदार्थानां निह्नवं अपह्नवोऽज्ञानं तस्य विधौ कृता बुद्धिर्येन

सः तस्य कृतबुद्धेस्तिमिरस्य प्रातिकूल्यं विरोधमकरोत् । स्पर्शेन्द्रियं स्वशक्तिपरिस्फूर्त्या सर्वपदार्थानां निह्नवाभावरूपं ज्ञानमेवाकरोदिति भावः ।

### भाषा

अविहत शक्ति वाले त्वगिन्द्रिय ने, आँखों को, देखने की शक्ति से वञ्चित बना कर सम्पूर्ण वस्तुओं को छिपा देने के लिये कृतप्रयत्न अन्धकार के विरुद्ध काम किया। अर्थात् अन्धकार के चारों ओर फैल जाने पर भी स्पर्श से वस्तुओं का ज्ञान होता ही था।

**कस्य न प्रतिहतं बत चक्षुर्ध्वान्तसन्ततिभिरुड्डमराभिः ।**
**केवलं मनसिजप्रहितानां नावधूतमभिसारवधूनाम् ॥२०॥**

### अन्वयः

उड्डमराभिः ध्वान्तसन्ततिभिः कस्य चक्षुः बत न प्रतिहतम् । केवलं मनसिजप्रहितानाम् अभिसारवधूनां चक्षुः न अवधूतम् ।

### व्याख्या

उड्डमराभिरुत्कटाभिः ध्वान्तानां सन्तमसानां 'ध्वान्तं संतमसं तमः' इत्यमरः । सन्ततयस्ताभिः कस्य प्राणिनः चक्षुर्नयनं बत इति खेदे, न प्रतिहतं न प्रतिबद्धम् । कस्य रूपग्राहकसामर्थ्यरहितत्वं न जातमपि तु सर्वस्यैवेति भावः । केवलं मनसिजेन कामेन प्रहितानां प्रेरितानामभिसारवधूनामभिसारिकाणां प्रियसङ्केतस्थानं प्रति गन्तुमनसां स्त्रीणामेव चक्षुर्नाऽवधूतं न तिरस्कृतमविलीनशक्तिजातमित्यर्थः ।

### भाषा

खेद की बात है कि, अत्यधिक अन्धकार के समूह से किसकी, आँख देखने की शक्ति से वञ्चित नहीं हुई। अर्थात् सभी के आँखों की देखने की शक्ति दूर हो गई। केवल कामदेव से प्रेरित अभिसारिकाओं की अन्धकार में देखने की शक्ति दूर न हुई। अर्थात् इतने अन्धकार में भी अभिसारिकाएँ अपने प्रिय के मिलने के सङ्केतस्थान में जाती ही थी।

**पांसुतल्पसुरतप्रवणानां विश्वलोचनपुटप्रतिबन्धे ।**
**कुत्र कुत्र न तिरस्करिणीत्वं ध्वान्तमण्डलमगाच्चपलानाम् ॥२१॥**

अन्वयः

ध्वान्तमण्डलं पांसुतल्पसुरतप्रवणानां चपलानां विश्वलोचनपुट-प्रतिबन्धे कुत्र कुत्र तिरस्करिणीत्वं न अगात् ।

व्याख्या

ध्वान्तमण्डलमन्धकारसमूहः पांसुरेव धूलिरेव तल्पं शय्या "तल्पं शय्याट्टदारेषु" इत्यमरः । तस्मिन् सुरतं रतिविलासस्तस्मिन्प्रवणास्तत्परास्तासां चपलानां चञ्चलचित्तानामभिसारिकाणां विश्वस्य संसारस्यप्राणिसमूहस्य लोचन-पुटस्य नयनपुटस्य प्रतिबन्धे पिधाने दर्शनाभावेत्यर्थः कुत्र कुत्र कस्मिन्कस्मिन् स्थाने तिरस्करणीत्वं जवनिकात्वं "प्रतिसीरा जवनिका स्यात्तिरस्करिणी च सा" इत्यमरः । न अगात् न प्राप्तवान् किन्तु सर्वत्रैवाभिसारेषु जवनिकात्वं प्राप्तवा-निति भावः ।

भाषा

अन्धकार समूह ने धूली की शय्या पर सुरतक्रीडा करने में प्रवीण चञ्चल अभिसारिकाओं के, विश्व के नेत्रों की देखने की शक्ति के प्रतिबन्धक रूप में किस-किस स्थान में पड़दे का काम नहीं किया । अर्थात् सर्वत्र परदे का काम किया ।

परिचमाचलविटङ्कनिपाते विद्रुता इव रुचस्तपनस्य ।
दीप्रदीपकिरणाः सृणिभङ्गीमारभन्त तिमिरद्विरदस्य ॥२२॥

अन्वयः

तपनस्य रुचः पश्चिमाचलविटङ्कनिपाते (सति) विद्रुता इव (जाताः) दीप्रदीपकिरणाः तिमिरद्विरदस्य सृणिभङ्गीम् आरभन्त ।

व्याख्या

तपनस्य सूर्यस्य रुचः किरणाः पश्चिमाचलस्यास्ताचलस्य विटङ्के शिखरे निपाते उच्चस्थानात्पर्वतशृङ्गात्प्रति निपतने सति विद्रुता इव अस्तव्यस्ततां गताः सर्वांगता इव जाताः । दीप्राः प्रकाशमानाः दीपानां किरणास्तु तिमिरद्विरदस्य तमोगजस्य सर्वतः निरोधार्थं सृणिभङ्गीमङ्कुशलीला "अङ्कुशोऽस्त्री सृणिः स्त्रियाम्" इत्यमरः । आरभन्त प्रारेभिरे । अत्र रूपकालङ्कारः ।

भाषा

पश्चिमाचल के शिखर पर गिरने से सूर्य के किरण लुढक कर दूर होगये अर्थात् अस्त-व्यस्त हो गये । तेज दीपों के किरणों ने अन्धकार रूपी हाथी के

स्वेच्छाचार में अङ्कुश का रूप धारण किया अर्थात् दीयों के कारण से अन्धकार के स्वेच्छानुसार फैलने में रुकावट हुई।

सूत्रिताभिसरणाः प्रणयिन्यः कान्तसङ्गममविघ्नमवापुः ।
फूत्कृतैः पथि निवारितदीपाश्चापलं जयति पञ्चशरस्य ॥२३॥

अन्वयः

सूत्रिताभिसरणाः पथि फूत्कृतैः निवारितदीपाः प्रणयिन्यः कान्तसंगमम् अविघ्नम् अवापुः। पञ्चशरस्य चापलं जयति।

व्याख्या

सूत्रितं प्रारब्धमभिसरणमभियानं प्रियम्प्रति याभिस्तास्सूत्रिताभिसरणाः पथि मार्गे फूत्कृतैः फूत्कारैः निवारिताः प्रशान्तिम्प्रापिताः दीपाः याभिस्ताः प्रणयिन्यो ऽभिसारिकाः कान्तैः प्रियैस्सह संगममविघ्नं निर्विघ्नं यथा स्यात्तथाऽवापुः प्रापुः। पञ्चशरस्य कामस्य चापल चञ्चलत्वं जयति निरन्तरं सर्वोत्कर्षेण राजतितराम्।

भाषा

अपने प्रिय के पास अभिसरण करने वाली, रास्ते में फूँककर दीया बुताने वाली अभिसारिकाओं का अपने प्रियों से मिलन निर्विघ्न सम्पन्न हुआ। कामदेव महाराज की स्फूर्ति की बलिहारी है अर्थात् कामाभिभूत होने पर स्त्रियों में जो स्वाभाविक शीघ्रता पूर्वक अपना कार्य सम्पादन करने की बुद्धि उत्पन्न हो जाती है वह प्रशंसनीय है।

रासभेन सहिता रजकस्त्री-रूपधारि विरचय्य शरीरम् ।
कापि वञ्चितवती जनबाधां कं विडम्बयति नो कुसुमेषुः ॥२४॥

अन्वयः

रासभेन सहिता का अपि रजकस्त्रीरूपधारि शरीरं विरचय्य जनबाधां वञ्चितवती। कुसुमेषुः कं न विडम्बयति।

व्याख्या

रासभेन गर्दभेन सहिता "रासभा गर्दभाः खराः" इत्यमरः। सङ्गता कापि अभिसारिका रजकस्य स्त्रियो रूपधारि रजकाङ्गनारूपधारकं शरीरं स्वीयस्वरूपं विरचय्य विधाय जनानां बाधां विघ्नं वञ्चितवती निवारितवती। जनसमूहो

रजकीं ज्ञात्वा मार्गं विहाय स्थितः। एतेन तस्याः शीघ्रं सङ्केतस्थानप्राप्तिरिति भावः। कुसुमेषुः कामः कं जनं न विडम्बयति स्वोच्चस्थानादधो न पातयति। अपि तु सर्वानेव विडंबयतीति भावः। अत्रार्थापत्तिरलङ्कारः।

### भाषा

गदहे को साथ ले, धोबिन का रूप धारण कर किसी अभिसारिका ने जन समूह को ठगा। कामदेव किसकी विडम्बना नहीं करता यानी सबकी विडम्बना करता है। अर्थात् धोबिन को आती देखकर भीड़ हट गई और रास्ता सफा होने से वह शीघ्र अपने पति के मिलने के स्थान पर पहुँच सकी। किन्तु कामासक्त होने से उसे धोबिन बनने की दुर्दशा भोगनी पड़ी।

**कापि मुख्यपदवीमधिरोप्य स्वां सखीं स्वकरधारितदीपा।**
**प्राणनाथरतिगेहमयासीदद्भुतो रतिपतेरुपदेशः ॥२५॥**

### अन्वयः

स्वकरधारितदीपा का अपि स्वां सखीं मुख्यपदवीम् अधिरोप्य प्राणनाथरतिगेहम् अयासीत् रतिपतेः उपदेशः अद्भुतः।

### व्याख्या

स्वकरे निजहस्ते धारितः संस्थापितः दीपो यया सा स्वकरधारितदीपा काप्यङ्गना स्वां निजां सखीं वयस्यां "आलिः सखी वयस्याऽथ" इत्यमरः। मुख्यपदवीं प्रधानपदमभिसारिकास्थानेऽधिरोप्य कृत्वा प्राणनाथस्य प्रियस्य रतिगेहं मिलनस्थानमयासीत् गतवती। अमुष्या विचित्रोपायस्य महत्त्वं समर्थयन्नाह—रतिपतेः कामस्य उपदेशः शिक्षा अद्भुतः विचित्रः। अत्रार्थान्तरन्यासो नामालङ्कारः।

### भाषा

अपने हाथ में दीपक धारण करने वाली कोई अभिसारिका अपनी सखी को अभिसारिका पद मुख्य स्थान देकर अपने प्राणनाथ के घर गई। कामदेव का उपदेश आश्चर्यजनक है। अर्थात् अपने दीया दिखाते हुए अपनी सखी के साथ जाने से लोगों को उसके अभिसारिका होने का सन्देह न होकर सखी के अभिसारिका होने का सन्देह हुआ। कामाभिभूत होने पर ही ऐसी ऐसी सूझें होती हैं।

दिग्वधूरथ पुरन्दरसेव्या पाकपाण्डुशरकाण्डविडम्बि ।
बिभ्रती मुखमवोचत गर्भे रोहिणीप्रणयिनः परिणामम् ॥२६॥

अन्वयः

अथ पाकपाण्डुशरकाण्डविडम्बि मुखं बिभ्रती पुरन्दरसेव्या दिग्वधूः गर्भे रोहिणीप्रणयिनः परिणामं अवोचत ।

व्याख्या

अथ सूर्यस्यास्तगमनानन्तरं पाकेन पूर्णपरिणामेन पाण्डुवर्णमीषत्पीतशुक्लवर्णं यच्छरकाण्डं तस्य विडम्बि तत्सदृशं मुखं बिभ्रती धारयन्ती, विधूदये सत्यग्रभागं बिभ्रती धारयन्तीत्यर्थः । पुरन्दरेणेन्द्रेण "वृद्धश्रवाः शुनासीरः पुरुहूतः पुरन्दरः" इत्यमरः । सेव्या सुमान्या दिग्वधूः पूर्वदिगेवाङ्गना गर्भेऽभ्यन्तरे पूर्वदिशो मध्यभागे कुक्षौ च रोहिण्याः प्रणयी स्नेही चन्द्रस्तस्य च परिणामं गर्भमुदयं चाऽवोचतेवाच । अत्र विशेषणसाम्यादप्रस्तुतार्थपरिस्फूर्त्या समासोक्तिरलङ्कारः ।

भाषा

सूर्य के अस्त हो जाने के बाद चन्द्रमा के उदय होने के समय, पके हुए श्वेत रेङ्ग की सरही के समान श्वेत मुख या अग्रभाग को रखने वाली, इन्द्र द्वारा सेवित (पूर्व दिशा के स्वामी इन्द्र हैं) पू ं दिशा रूपी स्त्री, अपने गर्भ में अर्थात् पूर्व दिशा में रोहिणी के प्रेमी चन्द्र रूपी बालक के गर्भफल या उदय को सूचित करने लगी । तात्पर्य यह है कि इन्द्र के संयोग से पूर्व दिशा रूपी स्त्री में चन्द्र रूपी गर्भ की स्थिति सूचित होती थी जिससे गर्भवती के समान पूर्व दिशा रूपी स्त्री का मुख सफेद पड़ गया था । अर्थात् पूर्व दिशा में चन्द्र की कान्ति से श्वेतता आगई थी ।

प्रौढकेतकपरागविपाण्डु-ज्योतिरत्र समये भ्रमति स्म ।
नाकनायकनिकेतचकोरी-पीतशेषमटवीमुदयाद्रेः ॥२७॥

अन्वयः

अत्र समये नाकनायकनिकेतचकोरीपीतशेषं प्रौढकेतकपरागविपाण्डुज्योतिः उदयाद्रेः अटवीं भ्रमति स्म ।

### व्याख्या

अथ समये प्राच्यां दिशि चन्द्रमण्डलोदयकाले नाकनायकस्य स्वर्गाधिपतेरिन्द्रस्य निकेतस्स्वर्गस्तस्य चकोर्यस्ताभिः पीताच्छेषमवशिष्टं प्रौढः परिपूर्णविस्थामापन्नः केतकतरोः परागो रजस्तद्वत्पाण्डु उज्ज्वलं ज्योतिर्ज्योत्स्ना उदयाद्रेरुदयाचलस्य अटवीमरण्यं "अटव्यरण्यं विपिनं गहनं काननं वनम्" इत्यमरः। भ्रमति स्म बभ्राम।

### भाषा

उस समय में पूर्व दिशा में इन्द्र के स्वर्ग की चकोरियों के पीने से बची हुई, परिपूर्णावस्था को प्राप्त केवड़े की धूली के समान सफेद चाँदनी उदयाचल के जंगल में फैल गई।

**पूर्वदिङ्मुखमशोभत किञ्चिन्निर्गतेन शिखरादुदयाद्रेः।**
**चारुचन्दनविलेपनपाण्डु-भ्रूपताकमिव शीतकरेण ॥२८॥**

### अन्वयः

पूर्वदिङ्मुखम् उदयाद्रेः शिखरात् किञ्चित् निर्गतेन शीतकरेण चारुचन्दनविलेपनपाण्डुभ्रूपताकम् इव अशोभत।

### व्याख्या

पूर्वदिशः प्राच्या दिशो मुखं वदनमग्रभागो वा उदयाद्रेरुदयाचलस्य शिखरात् शृङ्गात् "कूटोऽस्त्री शिखरं शृङ्गम्" इत्यमरः। किञ्चिन्निर्गतेन किञ्चित्प्रकटीभूतेन शीतकरेण चन्द्रेण चारुचन्दनस्य सुन्दरचन्दनस्य विलेपनेन पाण्डुर्भ्रूपताका यस्मिंस्तत् चारुचन्दनविलेपनपाण्डुभ्रूपताकमिवाऽशोभत शुशुभे। अत्रोत्प्रेक्षालङ्कारः।

### भाषा

पूर्व दिशा का मुख अर्थात् अग्रभाग उदयाचल से कुछ थोड़े से ऊपर उठे हुए चन्द्रमा के कारण से मानो सफेद चन्दन के लगाने से जिसका भौं रूपी झण्डा सफेद होगया हो ऐसा सुशोभित होता था।

**पाटलेन महसां पटलेन प्राच्यशैलभुवि बालमृगाङ्कः।**
**धातुभङ्गपृथुलस्थलधूली-केलिधूसरशरीर इवासीत् ॥२९॥**

अन्वयः

प्राच्यशैलभुवि बालमृगाङ्कः पाटलेन महसां पटलेन धातुशृङ्गपृथुलस्थलधूलीकेलिधूसरशरीरः इव आसीत् ।

व्याख्या

प्राच्यशैलभुवि उदयपर्वतस्य भूमौ बालमृगाङ्को बालेन्दुः पाटलेन रक्तेन महसां तेजसां पटलेन समूहेन धातोर्गैरिकधातो शृङ्गे शिखरे "कूटोऽस्त्री शिखरं शृङ्गं" इत्यमरः । पृथुला विशाला या स्थलस्य धूली रजस्तस्यां केलिः क्रीडा तया धूसरं शरीरं यस्य स धातुशृङ्गपृथुलस्थलधूलीकेलिधूसरशरीर इवाऽऽसीत् रराज । अत्रोत्प्रेक्षालङ्कारः ।

भाषा

पूर्वीय पर्वत की जमीन पर बालचन्द्र, लाल रंग के किरणों के समूह से मानो गैरिक आदि धातु के पर्वत की चोटी के विस्तृत जमीन की धूलि में खेलने से मटमैले शरीर वाला होगया था ।

पाटलांशुरगमत्सवितेति श्वेतभानुरपि तादृगुपागात् ।
वञ्चनार्थमिव पङ्करुहिण्यास्तां पुनश्छलयितुं न शशाक ॥३०॥

अन्वयः

पङ्करुहिण्याः वञ्चनार्थम् इव सविता पाटलांशुः अगमत् इति श्वेतभानुः अपि तादृक् उपागात् । पुनः तां छलयितुं न शशाक ।

व्याख्या

पङ्करुहिण्या कमलिन्या वञ्चनार्थमिव, अहमेव सूर्य इति ज्ञात्वा ता विकासं कुर्युः इति प्रतारणार्थमिव, सविता सूर्यः पाटला रक्तवर्णा अंशवो यस्य सः पाटलांशुः अगमत् जातः इति हेतोः श्वेतभानुः शुक्लकिरणश्चन्द्रोऽपि तादृक् रक्तवर्ण उपागात् आयातः । पुनस्तथापि तां कमलिनीं छलयितुं प्रतारयितुं न शशाक न समर्थोऽभवत् । अत्रोत्प्रेक्षालङ्कारः ।

भाषा

सूर्य लाल होगया इस लिये मानो कमलिनी को ठगने के लिये चन्द्रमा भी वैसा ही लाल होगया । परन्तु वह कमलिनी को ठग नहीं सका ।

तर्जितं तिमिरमिन्दुमयूखैः शैलदुर्गगहनानि विवेश ।
मानिनीजनमनांसि बभूवुश्चित्रमञ्जनमषीमलिनानि ॥३१॥

अन्वयः

इन्दुमयूखैः तर्जितं तिमिरं शैलदुर्गगहनानि विवेश मानिनीजनमनांसि अञ्जनमषीमलिनानि बभूवुः, इति चित्रम् ।

व्याख्या

इन्दुमयूखैश्चन्द्रकिरणैस्तर्जितं भर्त्सितं वा निवारितं तिमिरं तमः "अन्धकारोऽस्त्रियां ध्वान्तं तमिस्रं तिमिरं तमः" इत्यमरः। शैलदुर्गस्य पर्वतरूपदुर्गमस्थानस्य गहनानि वनानि "अटव्यरण्यं विपिनं गहनं काननं वनम्" इत्यमरः। विवेश प्रवेशं चकार मानिनीजनानां मानवतीनामङ्गनानां मनांसि चित्तानि, अञ्जनस्य मषी तद्वन्मलिनानि कृष्णवर्णानि यद्वा चन्द्रदर्शनान्मानस्य भङ्गः स्यादितिहेतोर्दुःखितानि बभूवुः इति चित्रमाश्चर्यम्। अत्र मालिन्यकारण-तमसादर्शनेऽपि मालिन्यात्कार्योत्पत्तेः विभावनालङ्कारः।

भाषा

चन्द्रमा के किरणों से डराया गया हुआ अन्धकार, पर्वत रूपी किले के दुष्प्रवेश्य स्थानों में या जंगलों में भाग गया। मानिनीओं के मन, अञ्जन की ऐसी काली स्याही के समान काले अर्थात् उदास होगए यह आश्चर्य है। मानिनीओं का मान चन्द्र को देखते ही कामातुर हो जाने से छूट जाता है इसलिये वे अब प्रिय को और विशेष न सता सकेंगी इस विचार से उदास हो गईं।

तत्क्षणाद्विषमशैलनिकुञ्ज-प्रान्तपुञ्जितमरच्यत सर्वम् ।
ध्वान्तचक्रमभितः प्रसरद्भिर्दुर्गशेषमिव चन्द्रमयूखैः ॥३२॥

अन्वयः

तत्क्षणात् सर्वं ध्वान्तचक्रं प्रसरद्भिः चन्द्रमयूखैः विषमशैलनिकुञ्जप्रान्तपुञ्जितं दुर्गशेषम् इव अरच्यत ।

व्याख्या

तत्क्षणात् सद्य एव सर्वं समस्तं ध्वान्तचक्रं तमस्समूहः प्रसरद्भिः विसारिभिश्चन्द्रमयूखैरिन्दुकिरणैर्विषमोऽगम्यः शैलनिकुञ्जः पर्वतकुञ्जः "निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे" इत्यमरः। तस्य प्रान्तेषु प्रान्तभागेषु पुञ्जित-

मेकत्रीभूत दुर्गे च स्नेप, आश्रयस्थान यस्य तत् दुर्गैस्व दुर्गस्थमिवाऽरच्यत कृतम् ।

### भाषा

शीघ्र ही चन्द्रमा के किरणो ने सम्पूर्ण अन्धकार मण्डल को अगम्य पर्वतो के कुञ्जो के प्रान्त भागो में खदेडकर मानो केवल किलो में ही अवशिष्ट हो ऐसा बना दिया। अर्थात् सब स्थानो से अन्धकार दूर होकर केवल पर्वतो के कुञ्जो में ही अवशिष्ट रह गया।

**नीलतालफलपंक्तिसनाथा प्राच्यशैलवनभूमिरराजत् ।**
**निम्नया शशिकरैरुपगूढा ध्वान्तमस्तकपरम्परयेव ॥३३॥**

### अन्वयः

नीलतालफलपंक्तिसनाथा प्राच्यशैलवनभूमिः शशिकरैः निम्नया ध्वान्तमस्तकपरम्परया उपगूढा इव अराजत् ।

### व्याख्या

नीला श्यामवर्णा या तालफलपंक्ति तालवृक्षाणा फलश्रेणिस्तया सनाथा युक्ता प्राच्यशैलस्य पूर्वशैलस्य वनभूमि शशिन चन्द्रस्य करै किरणै निम्नया नम्रीकृतयाऽध कृतया ध्वान्तस्य मस्तकाना शिरसा परम्परया श्रेण्या उपगूढा आलिङ्गिता इव अराजत् शोभा दधौ। चन्द्रकरैर्निरस्तोऽप्यन्धकार शिरोनमनाविना नयञ्चित्तालफलपंक्तिव्याजेन प्राच्यशैलवने स्थान लेभे इति भाव ।

### भाषा

काले रग के ताड के फलो की श्रेणियो से युक्त, पूर्वीय पर्वतो की वन की भूमि, मानो चन्द्रमा के किरणो के कारण नीचे किये हुए अन्धकार की मस्तक की श्रेणी से आलिङ्गित की गई हो, ऐसी शोभित होती थी।

अर्थात् चन्द्रमा से अपने किरणरूपी हाथो से अन्धकार के ताड के फल-रूपी मस्तको को नीचे कर दिये जाने पर अन्धकार ने मानो नतमस्तक होकर पूर्वीय शैल की वनभूमि की शरण ली।

**पारणोद्यतचकोरपुरन्ध्रि-क्षिप्तलोचनरुचामिव पुञ्जैः ।**
**पाटलं पटलमिन्दुरुचीनां रक्तकम्बलविडम्बि बभूव ॥३४॥**

अन्वयः

रुचीनां पाटलं पटलं पारणोद्यतचकोरपुरन्ध्रिक्षिप्तलोचनरुचां
र रक्तकम्बलविडम्बि बभूव ।

व्याख्या

रुचीनां चन्द्रकान्तीनां पाटलं रक्तं पटलं समूहः पारणायां सम्पूर्णदिन-
उपवासान्ते चन्द्रोदये किरणपाने उद्यताः समुत्सुकाश्चकोराणां पुरन्ध्रयो-
स्तासां क्षिप्ताः चन्द्रोपरि प्रहिताः लोचनरुचः स्वनयनकान्तयस्तासां
तिसमूहैरिव रक्तमरुणं यत्कम्बलं तस्य विडम्बि तत्समानं बभूव । अत्रो-
त्प्रेक्षालङ्कारः ।

भाषा

चादनी की लालिमा का समूह, चादनी लाकर पारण करने में लगी हुई
चकोरियों द्वारा डाली हुई नेत्रों की लाल कान्ति के समूह से मानो लाल कम्बल
के समान हो गई । अर्थात् उदित होने वाले चन्द्रमा की लाल चादनी मानों
चादनी लाकर पारण करने वाली चकोरियों के नेत्रों की लाल कांन्ति से लाल
कम्बल के समान दील पड़ती थी ।

क्षाल्यमान इव मानवतीनां दृग्भिरश्रुजलनिर्झरिणीभिः ।
त्यक्तवानुदयरागमशेषं पूर्वदिक्तिलकबिन्दुरिवेन्दुः ॥३५॥

अन्वयः

पूर्वदिक्तिलकबिन्दुः इव इन्दुः मानवतीनाम् अश्रुजलनिर्झरिणीभिः
दृग्भिः क्षाल्यमानः इव अशेषम् उदयरागं त्यक्तवान् ।

व्याख्या

पूर्वदिशः प्राचीरूपकामिन्याः मुखे तिलकबिन्दुः इवेन्दुः चन्द्रः मानवतीनां
मानिनीनामश्रुजलस्य बाष्पजलस्य निर्झरिण्यो नद्यः "कूलङ्कषानिर्झरिणी रोधोवक्रा
सरस्वती" इत्यमरः । ताभिर्दृग्भिर्नयनैः क्षाल्यमानो धौत इव अशेषं समग्रमुदय-
कालीनारुण्य त्यक्तवान् निरस्तवान् ।

भाषा

पूर्व दिशा रूपी कामिनी के मुख पर तिलक के समान शोभा देने वा
... मानिनीओं के आँसू रूपी जल की नदी स्वरूप नयनों

धोया जाकर सम्पूर्ण उदय काल की लालिमा को छोड़ दिया। अर्थात् चन्द्रमा को देखने से अब मान न रह सकेगा प्रत्युत पति सगम की इच्छा होगी इस भावना से दुःखी होकर उनके बहने वाले आँसू रूपी जल से मानो चन्द्रमा की उदयकाल की लालिमा धुल गई।

वल्लभेन जगतां निजधाम्ना जातगर्व इव रात्रिभुजङ्गः।
पादविन्यसननर्मविधायी निर्ममे कुमुदिनीं गतनिद्राम् ॥३६॥

अन्वयः

जगतां वल्लभेन निजधाम्ना जातगर्वः इव रात्रिभुजङ्गः पादविन्यसननर्मविधायी (सन्) कुमुदिनीं गतनिद्रां निर्ममे।

व्याख्या

जगतां लोकानां वल्लभेन प्रियेण निजधाम्ना स्वकिरणेन चन्द्रिकया वा जातगर्व इव समुत्पन्नाहंकार इव रात्रेर्भुजङ्गः पतिः रात्रिभुजङ्गः चन्द्रः पदानां चरणानां किरणानां वा विन्यसनं प्रक्षेपणं निक्षेपो वा स एव नर्मक्रीडा तद्विधायी तादृशक्रीडाकर्ता सन् कुमुदिनीं गतनिद्रां निद्रारहितां विकसितां निर्ममे कृतवान्। अत्र एकदेशविवर्ति रूपकमलङ्कारः।

भाषा

संसार की प्यारी, अपनी चाँदनी से अभिमानी बने हुए के समान रात्रि पति चन्द्रमा ने, अपनी किरणों को फैला कर नर्मक्रीडा करते हुए कुमुदिनी को विकसित कर दिया। अर्थात् जैसे अपने प्रिय कामुक की पाँव की आहट पा कर सुरत क्रीडा के भावी विचार से कामिनी सजग हो उठती है उसी प्रकार कुमुदिनी चन्द्रमा के किरणों के पड़ने से विकसित हो उठी।

रूप्यदर्पणतलप्रतिमल्ले लाञ्छनं तुहिनदीधितिबिम्बे।
शोभते स्म गगनप्रतिबिम्बच्छायमद्रिशिखरस्थितिभाजि ॥३७॥

अन्वयः

अद्रिशिखरस्थितिभाजि रूप्यदर्पणतलप्रतिमल्ले तुहिनदीधितिबिम्बे लाञ्छनं गगनप्रतिबिम्बच्छायं शोभते स्म।

व्याख्या

अद्रेः पूर्वाचलस्य शिखरं शृङ्गं "कूटोऽस्त्री शिखरं शृङ्गं" इत्यमरः। तस्मिन् स्थितिर्निवासस्तां भजतीति तस्मिन् अद्रिशिखरस्थितिभाजि रूप्यदर्पण-

अन्वयः

हिमदीधितिः अतिमात्रम् मांसलत्वम् अवाप्ते पिण्डदुग्धसदृशे निजधाम्नि मिश्रणार्थम् इव वार्धिजलानि उच्चैः आचकर्ष ।

व्याख्या

हिमाः शीतला दीधितयः करा यस्य स हिमदीधितिः इन्दुः अतिमात्रमत्यर्थं मांसलत्वं घनत्वमवाप्ते प्राप्ते पिण्डदुग्धसदृशे घनीभूतक्षीरसमाने निजधाम्नि स्वतेजसि चन्द्रिकायामित्यर्थः। मिश्रणार्थमिव वार्धिजलानि समुद्रजलानि उच्चैः उपरि आचकर्ष आकृष्टवान्। "पूर्णचन्द्रोदयाकाङ्क्षी दृष्टान्तोऽत्र महार्णवः" इति नयेन समुद्रजलं पूर्णचन्द्रोदये वेलामतिक्रम्य गच्छतीति प्रसिद्धिः।

भाषा

ठण्डी किरणवाले चन्द्रमा ने, अत्यधिक घन भई हुई, दूध के ठोस गोले के समान अपनी चन्द्रिका में मानो मिलाने के लिये अर्थात् मिलाकर पतली करने के लिये समुद्र के जल को ऊपर की ओर खींचा। अर्थात् पूर्णचन्द्र को देख कर समुद्र में बाढ़ आने लगी।

दत्तदिक्तटविपाटनशङ्कः शीतरश्मिकिरणामृतपूरः ।
मन्थशैलविशरारुशरीर-क्षीरनीरधिविलासमवाप ॥४०॥

अन्वयः

दत्तदिक्तटविपाटनशङ्कः शीतरश्मिकिरणामृतपूरः मन्थशैलविशरारुशरीरक्षीरनीरधिविलासम् अवाप ।

व्याख्या

दत्ता दिक्तटानां विपाटनस्य शङ्का येन स दत्तदिक्तटविपाटनशङ्कः शीतरश्मेश्चन्द्रस्य किरणामृतानां मयूखपीयूषाणां पूरः प्रवाहः शीतरश्मिकिरणामृतपूरः मन्थशैलेन मन्थराचलेन विशरारु विशीर्यमाणं शरीरं यस्य स एवम्भूतो यः क्षीरनीरधिर्दुग्धाब्धिस्तस्य विलासं सादृश्यमवाप प्राप्त.। निदर्शनालङ्कारः।

भाषा

दिशारूपी तट को तोड डालने की शङ्का उत्पन्न करने वाली चन्द्रमा के किरण या चाँदनी रूपी अमृत की बाढ़, मन्थराचल से मथे जाने से जर्जरित

शरीर वाले क्षीरसागर की शोभा को प्राप्त हुई। अर्थात् जिस प्रकार मन्दराचल से मथे जाने पर क्षीरसागर का दूध पतला होकर चारो ओर पृथ्वी पर फैलने लगा था उसी प्रकार चाँदनी चारो ओर फैल गई।

**केतकद्युतिनिभं भुवनान्तस्तन्महः प्रकृतिशीतलमिन्दोः।**
**कस्य नो वपुषि चन्दनलेपः कान्तितश्च गुणतश्च बभूव ॥४१॥**

अन्वयः

भुवनान्तः प्रकृतिशीतलं केतकद्युतिनिभम् इन्दोः तत् महः कस्य वपुषि कान्तितः गुणतः च चन्दनलेपः नो बभूव।

व्याख्या

भुवनस्य सर्वलोकस्याऽन्त. मध्ये भुवनान्त प्रकृत्या स्वभावेनैव शीतल प्रकृतिशीतल केतकद्युतिनिभं केतकोपुष्पद्रवसदृशमिन्दोश्चन्द्रस्य तन्महस्तत्प्रसिद्धं महस्तेज: "महस्तूत्सवतेजसो." इत्यमरः। चन्द्रिकेत्यर्थः। कस्य जनस्य वपुषि शरीरे कान्तित' धवलत्वशोभया गुणतो शैत्यगुणेन च चन्दनलेप. नो बभूव नासीत्। अपितु आसीदेव।

भाषा

जगत् भर में, स्वभाव से ही ठण्डी, द्रवीभूत केवडे के समान सफेद चन्द्रमा का वह तेज अर्थात् चन्द्रिका किसके शरीर में सफेद कान्ति से और शीतगुण से चन्दन का लेप न हुई अर्थात् चन्दन के लेप के समान न हुई। अर्थात् चान्दनी मे पडने से सब पदार्थ चन्दन से पुते हो ऐसे दिखाई पडते थे।

**क्षिप्यतां क्वचन चन्दनपाण्डुश्चन्द्रिकारसभरः कलशीभिः।**
**ऊचुरित्थमबलाः प्रियहीनाः पादयोरपि निपत्य सखीनाम् ॥४२॥**

अन्वयः

प्रियहीनाः अबलाः सखीनां पादयोः अपि निपत्य चन्दनपाण्डुः चन्द्रिकारसभरः कलशीभिः क्वचन क्षिप्यताम् इत्थम् ऊचुः।

व्याख्या

प्रियै· कान्तैर्हीना रहिता अबला· स्त्रियो विरहिण्य इत्यर्थ·। सखीनां वयस्यानां "आलिः सखी वयस्याऽथ" इत्यमरः। पादयोश्चरणयोरपि निपत्य पादयो· शिरसि निधाय चन्दनवत्पाण्डुरुज्ज्वलवर्णश्चन्द्रिकारसभर, ज्योत्स्ना-

रूपरसराशिः कलशीभिः घटैः ववचनाऽज्ञातप्रदेशे क्षिप्यतां निरस्यतामित्यमीदृशं बहु वचः ऊचुः कथयामासुः । प्रोषितभर्तृकाश्चन्द्रिकारसभरदर्शनेन विरहोद्दीपकत्वं मा भूदिति धिया स्वसखीनां पादयोः पतित्वाऽपि चन्द्रिकारसभरस्य कलशीभिरज्ञातप्रदेशे प्रक्षिप्य दूरीकरणं प्रार्थयन्तीति भावः ।

## भाषा

अपने पति की विरहावस्था में विद्यमान कामिनिओं ने सिर्फ मुख ही से नहीं किन्तु उनके पावों पड़कर भी चन्दन के ऐसे सफेद चाँदनी के रस समूह को गगरिओं में भरकर कहीं फेंक आओ, ऐसा कहा । अर्थात् चाँदनी से विरह पीड़ा बढ़ती थी इसलिये सखियों से इसे कहीं ऐसे ठिकाने फेंको जिसमें उनकी दृष्टि में न आकर इससे विरह पीड़ा न बढ़े, ऐसा विरहिणियों ने कहा ।

**कापि शीघ्रमवधीरितमाना मानिनी विचलिता प्रियधाम्नि ।**
**आगतेन मरुतापि पुरस्ताल्लाघवस्य परिहारममंस्त ॥४३॥**

### अन्वयः

का अपि शीघ्रम् अवधीरितमाना मानिनी प्रियधाम्नि प्रचलिता पुरस्तात् आगतेन मरुता अपि लाघवस्य परिहारम् अमंस्त ।

### व्याख्या

काऽपि का चित् शीघ्रं चन्द्रिकादर्शनकाल एव अवधीरितस्त्यक्तो मानः कोपो यया सा मानिनी मानयुता कामिनी प्रियस्य स्ववल्लभस्य धाम गृहं स्थानं वा तस्मिन् प्रचलिता मार्गस्थिता पुरस्तादग्रत आगतेन प्राप्तेन मरुता वायुनाऽपि लाघवस्य शीघ्रगतेः परिहारं विघ्नमिवाऽमंस्त निर्धारितवती । पुरतः समागतं वायुमपि प्रभुः समीपे शीघ्रगमने विघ्नमिव जानाति स्माऽन्येषां तु का कथेति भाव ।

## भाषा

कोई चन्द्रिका के किरणों से दूर होगए मानवाली, पति के स्थान पर जल्दी से पहुँचने की इच्छा से चली मानिनी, सामने से आए हुए पवन को भी पति के पास शीघ्रगमन में विघ्न समझती थी । अर्थात् वह सामने से रास्ते में आने वाले वायु को भी विघ्न समझती थी तो दूसरों के सम्बन्ध में कहना ही क्या है ।

इत्थमाप्तवति मन्मथबन्धौ तारकापरिवृढे जरठत्वम् ।
आदिदेश नृपतिः कृतभूपाः पानकेलिविषये हरिणाक्षीः ॥४४॥

अन्वयः

मन्मथबन्धौ तारकापरिवृढे इत्थं जरठत्वम् आप्तवति ( सति ) नृपतिः कृतभूपाः हरिणाक्षीः पानकेलिविषये आदिदेश ।

व्याख्या

मन्मथबन्धौ—कामसहायके तारकाणां नक्षत्राणां परिवृढोऽधिपस्तस्मिन् "अधिभूर्नायको नेता प्रभुः परिवृढोऽधिपः" इत्यमरः । तारकापरिवृढे चन्द्रे इत्थमेतादृशं जरठत्वं पूर्णत्वमाप्तवति सति नृपतिर्विक्रमाङ्कदेवः कृता भूषाऽलङ्कारो "भूषा तु स्यादलंक्रिया । अलङ्कारस्त्वाभरणं परिष्कारो विभूषणम्" इत्यमरः । याभिस्ताः कृतभूषा हरिणाक्षीर्मृगनयनाः ( कर्म ) पानकेलिविषये मद्यपानविलासार्थमादिदेशाऽऽज्ञप्तवान् ।

भाषा

कामदेव के मित्र, ताराओं के स्वामी, चन्द्रमा के इस प्रकार पूर्ण उदित हो जाने पर राजा विक्रमाङ्कदेव ने आभूषणों से सजी अर्थात् सर्व शृङ्गारों से सुसज्जित मृगनयनिओं को सुरापान की क्रीडा के लिये आज्ञा दी ।

अद्भुतास्त्रखुरली कुसुमेषोर्विभ्रमद्विरदबन्धनभूमिः ।
कुन्तलक्षितिपतिप्रमदानां पानकेलिरभसोऽथ जजृम्भे ॥४५॥

अन्वयः

अथ कुसुमेषोः अद्भुतास्त्रखुरली विभ्रमद्विरदबन्धनभूमिः कुन्तलक्षितिपतिप्रमदानाम् पानकेलिरभसः जजृम्भे ।

व्याख्या

अथानन्तरं कुसुमानि पुष्पाण्येवेषवो बाणा यस्य स तस्य कुसुमेषोः कामस्याद्भुतास्त्राणामाश्चर्यकारिशस्त्राणां खुरली शिक्षणभूमिरभ्यासो वा विभ्रमो विलास एव द्विरदो गजस्तस्य बन्धने तस्य भूमिः स्थानं कुन्तलक्षितिपतिप्रमदानां विक्रमाङ्कदेवकामिनीनां पानकेलिरभसः मद्यपानक्रीडाविलासः जजृम्भे उल्ललास सुरापानेन स्त्रीषु कटाक्षविक्षेपहावभावादिकं प्राचुर्येणोज्जृम्भत इति भावः

भाषा

इसके अनन्तर पुष्पवाण कामदेव के आश्चर्यकारक शस्त्रों की शिक्षा की भूमि, विलास रूपी हाथी के बाँधने का स्थान, कुन्तलदेश के राजा विक्रमाङ्कदेव की कामिनियों की सुरापान की क्रीडा प्रारम्भ हुई। अर्थात् वह सुरापान क्रीडा कामदेव की शस्त्रों की शिक्षास्वरूप और विभिन्न विलासों के स्थान रूप थी। अर्थात् सुरापान से स्त्रियों में कटाक्ष विक्षेप हावभावादि का प्राचुर्य होता है।

आलवालवलयस्थितिभाजां बन्धवः सरसरागलतानाम् ।
हेमपात्रनिवहप्रणयिन्यः पाटलाः शुशुभिरे मधुधाराः ॥४६॥

अन्वयः

आलवालवलयस्थितिभाजां सरसरागलतानां बन्धवः हेमपात्रप्रणयिन्यः पाटलाः मधुधाराः शुशुभिरे।

व्याख्या

आलवालवलये आलवालमण्डले "स्यादालवालमावालमावाप" इत्यमरः। स्थितिभाजा स्थितिमता सरसरागलता सार्द्रा रक्तवर्णवल्लयस्तासां बन्धव समाना हेमपात्राणा स्वर्णचषकाणा प्रणयिन्य तद्गता इत्यर्थ । पाटला रक्तवर्णा मधुधारा मद्यधारा शुशुभिरे। उपमालङ्कार ।

भाषा

थाले के घेरे में विद्यमान, पानी से युक्त लाल रंग की लताओं के समान सोने के प्यालों में पड़ने वाली लाल रंग की मद्य की धाराएँ शोभित होने लगी।

रत्नकेलिचषकेषु निविष्टं सीधु नव्यमसमायुधबन्धुः ।
राजदारपरिचुम्बनकेलित्रासजातमिव कम्पमुवाह ॥४७॥

अन्वयः

रत्नकेलिचषकेषु निविष्टम् असमायुधबन्धुः नव्यं सीधु राजदारपरिचुम्बनकेलित्रासजातम् इव कम्पम् उवाह।

व्याख्या

रत्नानां केलिचषका विलासमद्यभाजनानि "चषकोऽस्त्री पानपात्रम्" इत्यमरः। तेषु निविष्ट धृतमसमायुधस्य विषमशरस्य कामस्य बन्धु मित्रं नव्यं

अन्वयः

विशदेन मधुना पूरितेषु चषकेषु अन्तः निविष्टं यामिनीप्रियतम-प्रतिबिम्बं स्फाटिकोपलपिधानम् इव लक्ष्यते स्म ।

व्याख्या

विशदेन निर्मलेन मधुना मद्येन "मधु मद्ये पुष्परसे क्षौद्रेऽपि" इत्यमरः । पूरितेषु व्याप्तेषु चषकेषु मद्यपानपात्रेषु अन्तर्निविष्टं चषकाभ्यन्तरे प्रतिफलितं यामिनीनां रात्रीणां प्रियतमश्चन्द्रस्तस्य प्रतिबिम्बं छाया स्फटिकस्यायमिति स्फाटिकः स्फटिकसम्बन्धी उपलः प्रस्तरः "पाषाणप्रस्तरग्रावोपलाश्मानः शिला दृषत्" इत्यमरः । एव पिधानमाच्छादनं "अपिधानतिरोधानपिधानाच्छादनानि च" इत्यमरः । इव लक्ष्यते स्म दृश्यते स्म ।

भाषा

निर्मल शराब से भरे प्यालो में पड़ा, रात्रियो के स्वामी चन्द्रमा का प्रतिबिम्ब, स्फटिक के पत्थर के बने ढकने के समान दिखाई पड़ता था ।

पुष्पसौरभवशेन विलोलाः पङ्क्तयः शुशुभिरे भ्रमराणाम् ।
सीधुहेमकलशीषु विनिर्यद्-धूपधूमलतिकाकमनीयाः ॥५०॥

अन्वयः

पुष्पसौरभवशेन विलोलाः भ्रमराणां पङ्क्तयः सीधुहेमकलशीषु विनिर्यद्धूपधूमलतिकाकमनीयाः शुशुभिरे ।

व्याख्या

पुष्पाणां सौरभं सुगन्धस्तस्य वशेन तदायत्तत्वेन विलोलाश्चञ्चलाः भ्रमराणां भृङ्गाणां पङ्क्तयः श्रेणयः सीधु मद्यं तस्य हेमकलश्यस्सुवर्णघटिकास्तासु हेमकलशीषु विनिर्यद्विनिर्गच्छद् यो धूपसम्बन्धी धूम एव लतिका वल्लय इव रेखा इवेत्यर्थः । कमनीया रमणीया. शुशुभिरे रेजुः ।

भाषा

फूलो की सुगन्ध के कारण ( वहाँ आने वाली ) चञ्चल भौरो की श्रेणियाँ, शराब की सोने की कलसियो में से निकलने वाली धूप के धूएँ की लकीरो के समान सुन्दर, दिखाई पड़ती थी ।

ं ]

म्प्रणाममिव पाणिगतेभ्यः सम्मुखं विलुठिता चषकेभ्यः ।
आससाद मदिरा मदिराक्षी-पाटलाधरदलप्रणयित्वम् ॥५१॥

अन्वयः

सप्रणामम् इव पाणिगतेभ्यः चषकेभ्यः सम्मुखं विलुठिता मदिरा मदिराक्षीपाटलाधरदलप्रणयित्वम् आससाद ।

व्याख्या

प्रणामेन नमस्कारेण सहितं सप्रणामं यथास्यात्तथा पाणिगतेभ्यः करस्थि-तेभ्यः चषकेभ्यः पानपात्रेभ्यः सम्मुखं प्रत्यक्षं मुखाग्रे वा विलुठिता विलुण्ठिता "मदिरा" मद्यं मदिराक्ष्याः = मदविघूर्णितनयनायाः पाटलाधरदले रक्ताधरदले प्रणयित्वं स्नेहसम्बन्धमाससाद, प्रापेति भावः । यदा नायिका मद्यपानपात्रं हस्तयोर्धारयन्ति तदा समुत्प्रेक्ष्यते यन्नायिका मदिरा पाणिभ्यां प्रणामं कुर्वन्ति । अतएव मदिराऽपि प्रेमवशमागता चषके स्नेहं परित्यज्य नायिकाया रक्ताधरेण सह सम्बन्धं चकार । चषकेभ्य इत्यत्र पञ्चमी । अथवा मदिरा-धरयोः रक्तवर्णत्वात्तयोः सख्यम् जातं "समानशीलव्यसनेषु सख्यम्" इति नियमादिति भावः । उत्प्रेक्षालङ्कारः ।

भाषा

प्रणामपूर्वक दोनों हाथों से लिए हुए प्यालों से मुख के सामने लाई हुई शराब, मद से आँखों को इधर-उधर नचाने वाली कामिनिओं के ओठरूपी लाल पत्तों से मानो प्रेम करने लगी । अर्थात् ओठों के लाल रंग से शराब का लाल रंग मिल जाने से शराब ओठों से प्रेम करने लगी।

आननेषु मदिरा प्रविशन्ती दन्तकान्तिनिकरैः कृतसङ्गा ।
कामकीर्तिमिव कन्दलयन्ती दृश्यते स्म नृपतिप्रमदानाम् ॥५२॥

अन्वयः

नृपतिप्रमदानाम् आननेषु प्रविशन्ती दन्तकान्तिनिकरैः कृतसङ्गा ...दिरा कामकीर्तिं कन्दलयन्ती इव दृश्यते स्म ।

व्याख्या

...देवस्य प्रमदा कान्तास्तासाम् आननेषु मुखेषु "...

वदनं तुण्डमाननं लपनं मुखम्" इत्यमरः। प्रविशन्ती संगमं कुर्वाणा दन्तानां दशनानां, "रदना दशना दन्ता रदाः" इत्यमरः। कान्तिनिकराः प्रभासमूहास्तैः कृतस्सङ्गस्सम्बन्धो यया सा कृतसङ्गा मदिरा मद्यं कामस्य मदनस्य कीर्ति यशः कन्दलयन्ती पल्लवयन्ती इव दृश्यते स्म प्रतीयते स्म। दशनानां श्वेतत्वात् कीर्तेश्च श्वेतत्वादियमुत्प्रेक्षा।

भाषा

विक्रमाङ्कदेव की स्त्रियों के मुखों में प्रवेश करनेवाली, दाँतों की सफेद कान्ति से मिश्रित शराब, मानो कामदेव की श्वेत कीर्ति को फैलाती हुई दिखाई देती थी।

प्रान्तपाटलकपोलतलानि प्रस्खलद्भणितिविभ्रमभाञ्जि।
पार्थिवस्य मदनास्त्रमभूवन् नीलनीरजदृशां वदनानि ॥५३॥

अन्वयः

प्रान्तपाटलकपोलतलानि प्रस्खलद्भणितिविभ्रमभाञ्जि नीलनीरजदृशां वदनानि पार्थिवस्य मदनास्त्रम् अभूवन्।

व्याख्या

प्रान्ते प्रान्तभागे पाटलानि रक्तवर्णानि कपोलतलानि येषां तानि प्रान्तपाटलकपोलतलानि प्रस्खलन्त्या विघटमानायाः भणितेरुक्तेर्विभ्रमं विलासं भजन्तीति प्रस्खलद्भणितिविभ्रमभाञ्जि, मद्यपाने कृते सति मुखावक्षराणि सम्यङ् न निस्सरन्तीति भावः। नीलानि श्यामानि नीरजानि कमलानि इव दृशो नयनानि यासां तास्तासां नीलनीरजदृशां वदनानि मुखानि पार्थिवस्य राज्ञो विक्रमाङ्कदेवस्य मदनास्त्रं कामास्त्रमभूवन् जातानि।

भाषा

(शराब पीने से) गुलाबी गाल वाली, बोलने में लड़खड़ाने वाली, नीले कमल के ऐसी आँख वाली विक्रमाङ्कदेव की स्त्रियों के मुख, विक्रमाङ्कदेव के लिये कामदेव के अस्त्र बन गये। अर्थात् उनको देखकर वह कामुक कामासक्त हो जाते थे।

मन्मथः प्रविशति स्म सुरायां सा कुरङ्गकदृशां वदनेषु।
तानि चेतसि महीतिलकस्य क्ष्मापतेस्तदपि रागपयोधौ ॥५४॥

अन्वयः

मन्मथः सुरायां प्रविशति स्म, सा कुरङ्गकदृशां वदनेषु प्रविशति स्म, तानि महीतिलकस्य क्ष्मापतेः चेतसि प्रविशति स्म तत् अपि रागपयोधौ प्रविशति स्म।

व्याख्या

मन्मथः कामः सुरायां मदिरायां प्रविशति स्म प्रवेशं लेभे। सा सुरा कुरङ्गकदृशां मृगाक्षीणां वदनेषु मुखेषु प्रविशति स्म तानि नायिकावदनानि महीतिलकस्य पृथ्वीतिलकस्य भूम्यलङ्कारस्य क्ष्मापतेर्नृपस्य विक्रमाङ्कदेवस्य चेतसि मानसे प्रविशति स्म तदपि चेतोऽपि रागपयोधौ प्रेमसमुद्रे प्रविशति स्म। अत्र एकावल्यलङ्कारः।

भाषा

कामदेव ने शराब में प्रवेश किया। शराब मृगनयनिओं के मुखो में गई। कामिनिओं के मुख पृथ्वीभूषण राजा विक्रमाङ्कदेव के हृदय में जम गए और राजा विक्रमाङ्कदेव का मन प्रेम सागर में डूब गया।

चन्द्र किं पतसि मे मधुभाण्डे वीक्षसे न किमु कुन्तलनाथम्।
एष ते विरचयिष्यति कान्तां रोहिणीमलकपल्लवहीनाम् ॥५५॥

अन्वयः

हे चन्द्र मे मधुभाण्डे किं पतसि कुन्तलनाथं न वीक्षसे किमु। एषः ते कान्तां रोहिणीम् अलकपल्लवहीनां विरचयिष्यति।

व्याख्या

हे चन्द्र हे इन्दो मे मम मधुभाण्डे मद्यपात्रे "मधु मद्ये पुष्परसे क्षौद्रेऽपि" इत्यमरः। किं किमर्थं पतसि समाविश्य वर्तसे कुन्तलनाथ कुन्तलदेशाधिप केशस्वामिनं वा न वीक्षसे न पश्यसि किमु। एष विक्रमाङ्कदेवः कुन्तलाधिपस्ते तव कान्तां रोहिणीं नक्षत्ररूपां, तव वधकरणात् अलका केशास्तेषां पल्लवाः प्रान्तभागास्तैर्हीना रहितां तां पल्लवालङ्काररहितकेशां विरचयिष्यति विधास्यति। अथवा स तु कुन्तलाधिपः तव हननेन तव प्रियां रोहिणीं विधवां कृत्वा केशपल्लव रहितां करिष्यति। यस्य वस्तुनो योऽधिनायको भवति स तस्य वस्तु न्यूनत्वमत्यन्ताभावं च कर्तुं शक्नोतीति भावः।

भाषा

हे चन्द्रमा ! तुम मेरे शराब के प्याले में क्यो घुसे चले आरहे हो। क्या कुन्तलदेश के राजा विक्रमाङ्कदेव को या केशो के स्वामी को नहीं देखते हो। यह तुम्हारी प्यारी रोहिणी को बालो में शोभा के लिये खोसे जानेवाले कोमल पत्तो से रहित कर देगा या तुमको मारकर तुम्हारी प्यारी रोहिणी को विधवा बनाकर केश पल्लव से रहित कर देगा। क्योकि वह केशो का स्वामी होने से केश रहने देना या न रहने देना उसके हाथ की बात है।

**नास्मि रे कुमुदिनी मधुपात्रे सम्मुखः किमिति तिष्ठसि चन्द्र।**
**रोहिणीनयनकज्जलजातः किं त्रपां दिशति ते न कलङ्कः ॥५६॥**

अन्वयः

रे चन्द्र ! अहं कुमुदिनी न अस्मि। मधुपात्रे सम्मुखः किम् इति तिष्ठसि। रोहिणीनयनकज्जलजातः कलङ्कः ते त्रपां न दिशति किम्।

व्याख्या

रे चन्द्र हे इन्दो ! अहं कुमुदिनी नास्मि न भवामि। मधुपात्रे मद्यभाजने सम्मुखः मम समक्षं किमिति तिष्ठसि। रोहिण्याः नयनयोः कज्जलं तस्माज्जातः समुत्पन्न कलङ्को लाञ्छनं ते तव त्रपा लज्जां "मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जा" इत्यमरः। न दिशति न समुत्पादयति किम्। अन्यस्त्रीसहवासजन्यचिह्नमितरस्त्री द्रष्टुं न सहतेऽतोऽन्यसम्भोगप्रकाशकत्वात् लज्जा समुदेतीति भावः।

भाषा

अरे चन्द्र ! मै कुमुदिनी नहीं हूँ। क्या शराब के प्याले में आकर सामने खड़ा है ? क्या रोहिणी की आखो के कज्जल से उत्पन्न यह तेरा कलङ्क क्या तुझे लज्जित नही करता है। अर्थात् किसी स्त्री के संभोग के चिन्हो सहित किसी अन्य स्त्री के सामने जाना उस अन्य स्त्री के लिये क्रोध जनक और पुरुष के लिये लज्जा जनक है।

**त्वां निपीय मधुपात्रनिपण्णं वारुणीरसभरेण सहैव।**
**यामिनीरमण मानवतीनां संहरामि कुलकण्टकमद्य ॥५७॥**

अन्वयः

हे यामिनीरमण अद्य मधुपात्रनिषण्णं त्वां वारुणीरसभरेण सह एव निपीय मानवतीनां कुलकण्टकं संहरामि।

व्याख्या

हे यामिन्या रात्रेः "विभावरीतमस्विन्यौ रजनी यामिनी तमी" इत्यमरः। रमणः प्रियस्तत्सम्बुद्धौ हे चन्द्र! अद्याऽधुना मधुपात्रे निषण्णमुपविष्टं त्वा वारुणी सुरा "सुरा प्रत्यक् च वारुणी" इत्यमरः। एवं रसस्तस्य भरेण सहैव निपीय पीत्वा मानवतीनां मानिनीनां कुलकण्टकं कुलस्य कण्टकं दुःखदं संहरामि विनाशं करोमि। वियोगिनीनां चन्द्रः सर्वदा पीडक इति भावः।

भाषा

हे रात्रि के पति! चन्द्र! आज शराब के प्याले में बैठे हुए तुमको शराब के रस के लोवे के साथ ही पीकर मनिनियों के समुदाय के कण्टक रूप अर्थात् उनको पीडा देनेवाले तेरा मैं नाश कर देती हूँ।

**अस्ति दोषयुगलं द्विजराज त्वं यदि स्पृशसि मे मधुपात्रीम्।**
**अत्र नैष सहते तव राजा रोहिणी रुषमुपैति च तत्र ॥५८॥**

अन्वयः

हे द्विजराज यदि त्वं मे मधुपात्रीं स्पृशसि (तर्हि) दोषयुगलम् अस्ति। अत्र एषः राजा न सहते तत्र तव रोहिणी रुषम् उपैति।

व्याख्या

हे द्विजराज चन्द्र "द्विजराजः शशधरो नक्षत्रेशः क्षपाकरः" इत्यमरः। ब्राह्मणवर यदि त्वं मे मम मधुनो मद्यस्य पात्रीं पात्रं स्पृशसि (तर्हि) अस्मिन् विषये दोषयुगलं दूषणद्वयमस्ति। अत्र भूमौ एष राजा विक्रमाङ्कदेवो न सहते। ब्राह्मणस्य मद्यस्पर्शो निषिद्धः शास्त्रे इति हेतो राजा रुष्टो भविष्यतीति भावः। अयं प्रथमो दोषः। अपरञ्च तस्यामबलासम्बन्धावपि दोषस्य सम्भवः। तत्र आकाशे तव रोहिणी पत्नी रोषं क्रोधमुपैति प्राप्नोति। अन्यस्त्रीसम्बन्धे मदीपात्रद्वारा त्वां द्रष्टुं न सहिष्यत इत्यर्थः।

### भाषा

हे द्विजराज हे चन्द्र। अगर तुम हमारे मद्यपात्र को छूओगे तो इसमें दो दोष हैं। इस पृथ्वी पर यह राजा विक्रमाङ्कदेव, ब्राह्मण का मद्यसर्श शास्त्रों में निषिद्ध होने से या उसकी स्त्री से छेड़छाड़ करने से, तुम्हारा यह दोष सहन नहीं करेगा और आकाश में तुम्हारी स्त्री रोहिणी, दूसरी स्त्री के साथ शराब पीकर प्रेम दिखाने के कारण क्रुद्ध हो जाएगी।

यामिनीदयित कामपि कान्तां दुर्लभामभिलपन्ध्रुवमेपि।
तानवं किमपि तन्तुसमानं मानहीन विदितः परमार्थः ॥५९॥

### अन्वयः

हे यामिनीदयित काम् अपि दुर्लभां कान्ताम् अभिलपन् तन्तुसमानं किमपि तानवम् एपि ( इति ) ध्रुवम्। हे मानहीन परमार्थः विदितः।

### व्याख्या

यामिन्या रात्रेर्दयितः प्रियस्तत्सम्बोधने हे यामिनीदयित! हे रात्रिकान्त! कामपि अनिर्वचनीयसौन्दर्ययुक्ता दुर्लभा दुष्प्रापा कान्ता स्त्रियमभिलपन् वाञ्छन् तन्तुभिस्समानं तन्तुसमानं किमपि तानवं तनोर्भावस्तं कृशतामेषि प्राप्नोषि इति ध्रुवम् निश्चितम्। हे मान सम्मानो हीनः क्षुद्रो यस्य स मानहीनस्तत्सम्बोधने हे मानहीन! हे निर्लज्ज! परमार्थस्सारभूतोऽर्थो वस्तुसत्त्वमित्यर्थः। विदितो ज्ञात एव। न कोऽपि परस्त्रीलम्पटः सुखमेधत इति वस्तुतत्त्वम्।

### भाषा

हे रात्रिपति चन्द्र। किसी अलभ्य स्त्री की इच्छा रखने वाले तुम निश्चय ही धागे के ऐसी कृशता को प्राप्त होते जाते हो। अरे निर्लज्ज। इसका परिणाम तो प्रकट ही है। अर्थात् जो पर स्त्री लम्पट होता है उसका तेज नष्ट होकर उसका अध पतन निश्चित है।

क्षिप्यसे यदयमम्बरसीम्नः क्षारवारिधिजले हरिणाङ्क।
चापलस्य फलमेतदवश्यं कोऽन्यथा त्वयि हिमत्विषि खेदः ॥६०॥

अन्वयः

हे हरिणाङ्क! यत् अम्बरसीम्नः अयं (त्वम्) क्षारवारिधिजले क्षिप्यसे एतत् अवश्यं चापलस्य फलम् अन्यथा त्वयि हिमत्विषि कः खेदः।

व्याख्या

हे हरिणाङ्क हे मृगलाञ्छन! यत् अम्बरस्याऽऽकाशस्य सीमा तलं तस्मादम्बरसीम्न आकाशादित्यर्थः। अयं पुरोदृश्यमानः त्वं क्षारवारिधिः क्षारसमुद्रस्तस्य जलं तस्मिन् क्षारवारिधिजले क्षिप्यसे निरस्यसे। प्रातः दैवगत्येति भावः। एतदिदमवश्यं निश्चितमेव चापलस्य चाञ्चल्यस्य फलम्परिणामः। अन्यथा यदि तव चापलं न स्यात्तदा हिमत्विषि शीतकिरणे त्वयि भवति कः खेदः दुःखस्याऽवसरः।

भाषा

हे मृगलाञ्छन चन्द्र! चूँ कि आकाश मण्डल से यह तुम (प्रात काल दैवगति से) खारे समुद्र जल में डाल दिये जाते हो, यह अवश्य ही तुम्हारी चञ्चलता का ही फल है। नहीं तो, शीत किरण वाले अर्थात् सबको ठण्डक पहुँचाने वाले तुमको दुख का अवसर कैसे आ सकता है।

लम्पटं युवतिषु ध्रुवमिन्दो त्वां विदन्ति तरलं निजदाराः।
रे यदत्र चषकेऽपि निविष्टं तारकाः प्रतिमयानुसरन्ति ॥६१॥

अन्वयः

हे इन्दो, निजदाराः त्वां युवतिषु लम्पटं ध्रुवं तरलं विदन्ति। रे यत् अत्र चषके अपि निविष्टं (त्वाम्) तारकाः प्रतिमया अनुसरन्ति।

व्याख्या

हे इन्दो हे चन्द्र! निजदारा तव कान्तास्तारकाः त्वां भवन्तं युवतिषु तरुणीषु लम्पटमनुरक्तमतएव ध्रुवं निश्चितं तरलं चञ्चलं विदन्ति जानन्ति। रे हे चन्द्र यद्यस्मात् कारणात् चषकेऽपि मद्यपात्रेऽपि निविष्टं सम्प्रविष्टं त्वां भवन्तं तारकाः नक्षत्रस्वरूपाः कान्ताः प्रतिमया चषकगतेन स्वप्रतिबिम्बेन अनुसरन्ति अनुगच्छन्ति। स्वभावलम्पटं ज्ञात्वा ताः कोपं न कुर्वन्तीति भाव।

भाषा

हे चन्द्र ! तेरी स्त्रियां ताराएँ तुझे जवान स्त्रियों का लंपट समझ, अवश्य ही तुझे चञ्चल प्रकृति का समझती हैं। अरे इसी कारण से वे तेरी स्त्रियाँ ताराएँ इस मद्यपात्र में प्रविष्ट तेरा, अपने प्रतिबिम्ब द्वारा अनुसरण करती हैं। अर्थात् यदि उन्हें तेरे चञ्चल स्वभाव का परिचय न होता तो वे तेरे इस कुकर्म से क्रुद्ध होतीं और तेरा अनुसरण न करतीं।

कौमुदीरमण कापि दुराशां नूनमर्पितवती भवतोऽत्र ।
यद्विलङ्घ्य गगनं प्रतिरात्रि त्वं प्रयासि ककुभं वरुणस्य ॥६२॥

अन्वयः

हे कौमुदीरमण ! अत्र का अपि भवतः दुराशां नूनम् अर्पितवती यत् त्वं प्रतिरात्रि गगनं विलङ्घ्य वरुणस्य ककुभं प्रयासि।

व्याख्या

हे कौमुदीरमण, कौमुद्याः ज्योत्स्नायाः "चन्द्रिका कौमुदी ज्योत्स्ना" इत्यमरः। रमणः प्रियः कान्तः तत्सम्बोधने हे कौमुदीरमण ! अत्र नायिकासम्बन्ध्यनुराग-विषये कापि काचित् प्रियतमा भवतः तुभ्यं दुराशां दुःखप्रयोजिकामाशां नूनं निश्चयेनार्पितवती दत्तवती यद्यस्मात्कारणात् त्वं भवान् चन्द्रः प्रतिरात्रि सर्वस्या रात्रौ गगनमाकाशं विलङ्घ्य समुत्तीर्य वरुणस्य ककुभं प्रतीचीं दिशं "दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः" इत्यमरः। प्रयासि। स्त्रीलिङ्गेन नायिकामित्यर्थोऽपि बोध्यः। अत्र समासोक्तिरलङ्कारः।

भाषा

हे चन्द्रिका के पति चन्द्र ! प्रेम करने के विषय में किसी स्त्री ने तुम्हें अवश्य झूठी आशा दिलाई होगी। इसीलिये तुम हर रात में आकाश को लाँघ कर पश्चिम दिशा में जाते हो। अर्थात् पश्चिम दिशा रूपी स्त्री के पास जाते हो।

निर्मलं प्रियतमं हृदये मे किं करोषि कलुषं रजनीश ।
मुञ्च रत्नचषके मदिरां मे किं न वेत्सि निजमङ्ककलङ्कम् ॥६३॥

अन्वयः

हे रजनीश! मे हृदये निर्मलं प्रियतमं कलुषं किं करोषि मे रत्नचषके मदिरां मुञ्च निजम् अङ्ककलङ्कं किं न वेत्सि।

व्याख्या

हे रजनीश! रात्रिवल्लभ! मे मम हृदये विद्यमानं निर्मलं धवलं, यशसा चरित्रेण स्वरूपेण च, प्रियतमं विक्रमाङ्कदेवं कलुषं कलङ्कयुक्तं कृष्णतायुक्तं वा किं कथं करोषि। मद्ये तवमूर्त्तेः स्थितत्वान्मद्यपानद्वारा चन्द्रस्यकलङ्कस्य हृदयेऽपि गमनात् हृदयस्थविक्रमाङ्कदेवस्यापि त्वत्कलङ्कसम्बन्धात्कलङ्कित्वं स्यात् अत एव न कर्त्तव्यमिति भावः। मे मम रत्नचषके रत्ननिर्मितमद्यपात्रे मदिरां मद्यं मुञ्च परित्यज। निजं स्वकीयमङ्कस्थं चिह्नरूपं कलङ्कं लाञ्छनं कृष्णवर्णं किं न वेत्सि जानासि।

भाषा

हे रात्रि के स्वामि चन्द्र,! मेरे हृदयमें विद्यमान कीर्ति, चरित, तथा स्वरूप से धवल, मेरे प्रियतम को क्यों कलुषित करना चाहते हो। अर्थात् तुम्हारे ऐसे कलङ्की से युक्त मद्य का पान करने से हृदयस्थित मेरे प्रियतम की भी कलुषित होने की आशङ्का है। क्या तुम्हें अपने शरीर में के कलङ्क का ज्ञान नहीं है?

वायुनापि गमितस्तरलत्वं यत्प्रदीपनमनोन्नमनानि।
दर्शनोत्सुकतयेव विधत्से तद्वितीर्णसमयोऽसि कयापि॥६४॥

अन्वयः

(हे चन्द्र) वायुना अपि तरलत्वं गमितः (त्वम्) दर्शनोत्सुकतया इव यत् प्रदीपनमनोन्नमनानि विधत्से तत् कया अपि वितीर्णसमयः असि।

व्याख्या

हे चन्द्र! वायुना पवनेनाऽपि तरलत्वं मद्यपात्रे प्रतिबिम्बभावेन चञ्चलतां गमितः प्रापितः (त्वम्) दर्शनस्येष्टनायिकाया अवलोकनस्योत्सुकतया उत्कण्ठतया इव यत् प्रदीपनमनोन्नमनानि चोन्नमनान्युन्नतमुखत्वमधःकृताननत्वं च विधत्से करोषि, तत् कयाऽपि कयाचिन्नायिकया वितीर्णो दत्तस्समयः सङ्केतो यस्मै स वितीर्ण-

समयो गृहीतसङ्केतोऽसि। गृहीतसङ्केतस्य कामुकस्य समयप्रतीक्षायामेवमेव स्थितिर्भवतीति निरूपितम्।

भाषा

हे चन्द्र! इस मद्य के प्याले में हवा के झोंके से भी हिलने वाले तुम मानो किसी स्त्री से मिलने की उत्सुकता से दीपक के समान नीचे ऊपर मस्तक करते हो। इससे मालुम होता है कि तुम किसी नायिका से मिलने का समय स्थिर कर चुके हो।

किं गतेन बहुवल्लभभावं वञ्चिता प्रियतमेन वराकी।
द्यौरियं वसति नित्यममीलत्-तारकेव रजनीं यदशेषाम् ॥६५॥

अन्वयः

वराकी द्यौः बहुवल्लभभावं गतेन प्रियतमेन वञ्चिता किम् यत् इयं नित्यम् अमीलत्तारका इव अशेषां रजनीं वसति।

व्याख्या

वराकी दीना द्यौराकाशमाकाशरूपा नायिकेत्यर्थः। बहुवल्लभभावं लम्पटत्वं गतेन प्राप्तेन प्रियतमेन त्वया चन्द्रेण वञ्चिता प्रतारिता किम्? यद्यस्मात्कारणात् इयं द्यौ नित्यं सदा अमीलन्त्यः प्रकाशितास्तारकाः नक्षत्राणि यस्यां सा अथवा अमीलिता उद्घाटितास्तारकाः कनीनिकाः "तारकाऽक्ष्णः कनीनिका" इत्यमरः। यस्यास्सा अमीलत्तारका इवाऽशेषां सम्पूर्णां रजनीं रात्रिं वसति। द्यौरपि नायिकेव सकलरात्रिं यापयति प्रियवञ्चितत्वात् इति भावः।

भाषा

बिचारी द्यौ (आकाश रूपी नायिका) अनेक स्त्रियों से प्रेम करने वाले प्रियतम (चन्द्र) से ठगी गई है क्या? क्योंकि यह (आकाश रूपी नायिका) प्रकाशित ताराओं से युक्त या बिना पलक गिराए सदैव खुली पुतलियों से युक्त सम्पूर्ण रात बिताती है। अर्थात् जागती रहती है।

गण्डयोररुणिमा दृशि भावः कोऽपि च भ्रुकुटिविभ्रमहेतुः।
सुभ्रुवां दयितसान्त्वनवर्जे मानकार्यकरणाय मदोऽभूत् ॥६६॥

अन्वयः

सुभ्रुवां गण्डयोः अरुणिमा, दृशि कः अपि भ्रुकुटिविभ्रमहेतुः भावः, दयितसान्त्वनवर्जं मानकार्यकरणाय च मदः अभूत्।

व्याख्या

सुभ्रुवां कामिनीनां गण्डयोः कपोलयोः "अधस्ताच्चिबुकं गण्डकपोलौ" इत्यमरः। अरुणिमा रक्तत्वं, दृशि नेत्रे कोऽपि अनिर्वचनीयमहिमा भ्रुकुटिविभ्रमस्य भ्रुकुटिविलासस्य हेतुः कारणीभूतो भावश्चेष्टादिः, दयितस्य प्रियस्य प्रसादनाय सान्त्वनं शान्तिकारकवचनं तद् वर्जयित्वा दयितसान्त्वनवर्जं मान एव कार्यं फलं तस्य करणाय च मदः क्षीवत्वम् अभूत्। मद्यपानकृते सति कपोलयोर्लौलिमा दृष्टे भ्रुकुटिवैचित्र्यं प्रियप्रार्थनां तिरस्कृत्य च मानोद्रेको भवतीति भावः।

भाषा

अच्छी भौंवो वाली स्त्रियों के गाल पर लाली का, आँखों में कोई विलक्षण भौंवो के विलास की कारणीभूत चेष्टा का और पति द्वारा किये हुए अनुनय की कुछ भी परवाह न कर मान रूपी कार्य को सम्पादन करने का, नशा धारण हुआ। अर्थात् नशे से स्त्रियों के गाल लाल, भौंवों का विलक्षण विक्षेप और प्रिय की प्रार्थना की कुछ भी परवाह न कर मानवृद्धि हो गई।

इत्युदञ्चितविलासरसानामर्धकुड्मलितनेत्रयुगानाम् ।
जल्पितानि सरसानि स शृण्वन् सुभ्रुवां कमपि संमदमाप ॥६७॥

अन्वयः

सः इति उदञ्चितविलासरसानाम् अर्धकुड्मलितनेत्रयुगानां सुभ्रुवां सरसानि जल्पितानि शृण्वन् कम् अपि संमदम् आप।

व्याख्या

स विक्रमाङ्कदेव इत्युक्तप्रकारेण उदञ्चिताः प्रादुर्भूताः विलासरसा यासां तासां मद्यपानेन अर्धकुड्मलितं निमीलितं "कुड्मलो मुकुलोऽस्त्रियाम्" इत्यमरः। नेत्रयुगं यासां तासां सुभ्रुवां कामिनीनां सरसानि रसवन्ति जल्पितानि भाषितानि शृण्वन् कमपि संमदं हर्षं "मुत्प्रीतिः प्रमदो हर्षप्रमोदामोदसंमदाः" इत्यमरः। आप लेभे।

भाषा

राजा विक्रमाङ्कदेव ने, इस प्रकार शराब के नशे से उत्पन्न भए हुए आनन्द के रस में मग्न, अधखुली नेत्रोंवाली, अच्छी भौंवों वाली कामिनिओं की रसभरी बातों को सुनते हुए एक विलक्षण प्रकार का आनन्द प्राप्त किया।

**पानकेलिमनुभाव्य विभूतिं प्रेक्ष्य पक्ष्मलदृशां च मदोत्थाम् ।**
**तल्पसद्मनि जगाम स सार्धं कुन्तलेन्दुरथ चन्दलदेव्या ॥६८॥**

अन्वयः

अथ सः कुन्तलेन्दुः पानकेलिम् अनुभाव्य पक्ष्मलदृशां मदोत्थां विभूतिं च प्रेक्ष्य चन्दलदेव्या सार्धं तल्पसद्मनि जगाम।

व्याख्या

अथेत्यनन्तरं स कुन्तलेन्दुर्विक्रमाङ्कदेवः पानकेलिं मद्यपानक्रीडामनुभाव्य कारयित्वा पक्ष्मलदृशां प्रशस्तपक्ष्मयुक्तनयनानां कामिकानां मदेनोत्था मदोत्था मदजन्यां विभूतिं श्रियं च प्रेक्ष्य दृष्ट्वा चन्दलदेव्या राजमहिष्या सार्धं सह "सार्धं तु साकं सत्रा समं सह" इत्यमरः। तल्पं शय्या "तल्पं शय्याट्टदारेषु" इत्यमरः। तस्य सद्म स्थानं तस्मिन् तल्पसद्मनि केलिगृहे जगाम ययौ।

भाषा

इसके अनन्तर वह कुन्तलदेश का चन्द्र विक्रमाङ्कदेव मद्यपान की क्रीडा का अनुभव कराकर, नमीन बरौनी युक्त आँखो वाली कामिनिओं की मद्यपान जनित शोभा को देखकर चन्दलदेवी के साथ बिस्तरे वाले घर में अर्थात् बंगले में गया।

**आयुषे भवति यत्कुसुमेषोर्येन यौवनतरुः फलदायी ।**
**किं च रागजलधेरमृतं यत् तत्र तन्नृपतिराचरति स्म ॥६९॥**

अन्वयः

तत्र नृपतिः यत् कुसुमेषोः आयुषे भवति येन यौवनतरुः फलदायी किं च यत् रागजलधेः अमृतं तत् आचरति स्म।

### व्याख्या

तत्र केलिगृहे नृपतिर्विक्रमाङ्कदेवः यत् कृत्यं कुसुमेषोः कामस्य आयुषेऽभिवर्धनाय भवति, येन यौवनमेव तरुर्वृक्षः फलदायी फलप्रदः सफलः भवति किं च अन्यच्च यत् रागः प्रेमैव जलधिस्समुद्रः तस्य अमृतं सुधारूपं "पीयूषममृतं सुधा" इत्यमरः। तत् कृत्यमाचरति स्म सम्पादितवान्। विषयसम्भोगसुखमन्वभूदित्यर्थः।

### भाषा

उस बगले मे राजा विक्रमाङ्कदेव ने जो कुछ कामदेव की शक्ति को बढ़ाने में किया जाता है, जिससे यौवनरूपी वृक्ष सफल होता है और जो प्रेम-सागर का अमृत स्वरूप है, वह काम किया। अर्थात् रतिक्रीडा की।

**केलिधाम्नि न तयोः परिमातुं शक्यते स्म मुखविभ्रमलक्ष्मीः।**
**प्रीतिराविरभवत्तु समाना कामकार्मुकतुलातुलितेव ॥७०॥**

### अन्वयः

केलिधाम्नि तयोः मुखविभ्रमलक्ष्मीः परिमातुं न शक्यते स्म प्रीतिः तु कामकार्मुकतुलातुलिता इव समाना अभवत्।

### व्याख्या

केलिधाम्नि क्रीडागृहे तयोः विक्रमाङ्कदेवचन्दलदेव्योः मुखयोर्विभ्रमलक्ष्मीः विलासशोभा परिमातुं न शक्यते स्म परिच्छिन्ना न अभवत्, अपरिमिता जातेति भावः। परं च तयोः परस्परप्रीतिस्तु कामस्य कार्मुकं धनुरेव "धनुश्चापौ-धन्वशरासनकोदण्डकार्मुकम्" इत्यमरः। तुला तस्मिन्तुलिता इव समाना तुल्या अभवत्। तयोर्मुखश्रीः परिमातुं योग्या न किन्तु तयोः परस्परं प्रेम समानमिति भाव।

### भाषा

उस बगले में विक्रमाङ्कदेव और चन्दलदेवी के मुखो के विलास की शोभा परिमाण के बाहर थी परन्तु दोनो का परस्पर प्रेम कामदेव के धनुष रूपी तराजू में तौला हुआ होने के समान बराबर था।

**तौ परस्परविलोकनलीला-सान्द्रकौतुकरसौ परिचिन्त्य।**
**मुद्रितेक्षणपुटौ न मुहूर्तं निद्रयापि सकुतूहलयेव ॥७१॥**

अन्वयः

सकुतूहलया इव निद्रया तौ परस्परविलोकनलीलासान्द्रकौतुकरसौ परिचिन्त्य मुहूर्तम् अपि मुद्रितेक्षणपुटौ न ( कृतौ )।

व्याख्या

कुतूहलेन कौतुकेन सहिता सकुतूहला तया सकुतूहलया इव "कौतूहलं कौतुकञ्च कुतुकञ्चकुतूहलम्" इत्यमरः। निद्रया तौ परस्परस्य विक्रमचन्द्रलदेव्योर्यद्विलोकनं तस्य लीला तया सान्द्रः कौतुकरसो घनानन्दरसो ययोस्तौ परिचिन्त्य विचार्य मुहूर्तमपि क्षणमात्रमपि मुद्रिते निमीलिते ईक्षणपुटे नेत्रपुटे "लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी" इत्यमरः। ययोस्तौ मुद्रितेक्षणपुटौ न कृतौ।

भाषा

मानो कौतुकभरी निद्रा ने, एक दूसरे को देखने की लीला के अधिक आनन्द रस में डूबे हुए विक्रमाङ्कदेव और चन्द्रलेखा को, एक क्षण के लिए भी आखें मीज कर पडने वाले नहीं बनाया अर्थात् एक दूसरे का मुख देखने से आनन्द प्राप्त करने वाले विक्रमाङ्कदेव और चन्द्रलेखा को एक क्षण के लिये भी आखें मींज कर सोने की पारी न आई। अर्थात् वे जागते ही रहे।

ज्ञातुमद्भुतविलासनिधाने प्रेम्णि साम्यमिव जातगरिम्णि।
केलिधामनि तयोः शतवारं क्षिप्तवान्मनसि मानमनङ्गः ॥७२॥

अन्वयः

अनङ्गः अद्भुतविलासनिधाने जातगरिम्णि प्रेम्णि साम्यं ज्ञातुम् इव केलिधामनि तयोः मनसि मानं शतवारं क्षिप्तवान्।

व्याख्या

अनङ्गः कामोऽद्भुतस्याऽऽश्चर्यंकरस्य विलासस्य क्रीडायाः निधानं निधिभूतं तस्मिन् अद्भुतविलासनिधाने जातो गरिमा गुरुत्वं यस्मिन्तत्तस्मिन् प्रेम्णि साम्यं तुल्यप्रमाणत्वं ज्ञातुमिव केलिधामनि क्रीडागृहे तयोः दम्पत्योः मनसि मानसे मानं मानग्राहित्वं मानदण्डं वा शतवारं शतकृत्वः क्षिप्तवान् विन्यस्तवान्। माने मनसि गृहीते सति तस्य निराकरणाय स्नेहिना यत् कृत्यं पादयोः प्रणामादिकं समाश्रीयते तेनैव स्नेहस्य स्वरूपं विज्ञायते यदत्र न्यूनाधिक्यमधिकं वा वरीवर्तीति भावः।

भाषा

कामदेव ने, आश्चर्यकारी विलास के निधान, तथा खूब बढ़े हुए प्रेम में मानो समता की परीक्षा करने के लिये विक्रमाङ्कदेव और चन्द्रलेखा के मन में सैंकडो वार मानदण्ड (नापने का दण्डा) या मान अर्थात् क्रोधयुक्त स्वाभिमान का प्रयोग किया। अर्थात् समान प्रेम रहने पर मान उत्पन्न नहीं हो सकता। मान उत्पन्न होने पर भी प्रणामादि से सहज ही दूर किया जा सकता है। इसलिये मान का प्रयोग कर समान प्रेम की परीक्षा की।

अत्रान्तरे सरसजृम्भितभिन्नपङ्ज-
भाषाविशेषपरिपोषितचित्रभङ्गि ।
पीयूषपेशलसुभाषितभाषिणीभिः
प्रत्यूषमङ्गलमगीयत मागधीभिः ॥७३॥

अन्वयः

अत्रान्तरे पीयूषपेशलसुभाषितभाषिणीभिः मागधीभिः सरसजृम्भितभिन्नपङ्जभाषाविशेषपरिपोषितचित्रभङ्गि प्रत्यूषमङ्गलम् अगीयत।

व्याख्या

अत्रान्तरे अस्मिन्नवसरे पीयूषवदमृतवत्पेशलं चारु "चारौ दक्षे च पेशलः" इत्यमरः। यत्सुभाषितं तस्य भाषिण्यो वादिन्यस्ताभिः मागधीभिः वैतालिकस्त्रीभिः 'मागधी स्त्री कणायूथ्यो वात्स्यवन्मगधोद्भवे। पुंसि वैश्यात्क्षत्रियाजे शुक्लजीरकवन्दिनो" इति मेदिनी। गानकर्त्रीभिः सरसं रससहितं यथास्यात्तथा जृम्भितः उल्लसितो यो भिन्नषड्जः स्वच्छषड्जस्वरविशेषः तस्य भाषाविशेषेण परिपोषिता चित्रा आश्चर्यमयी भङ्गिर्विलासो यस्मिंस्तत् प्रत्यूषमङ्गलं प्रातःकालिकशुभकरं 'प्रत्यूषोऽहर्मुखं कल्यमुषः प्रत्यूषसी अपि" इत्यमरः। वाद्यम् अगीयत गीतम्। सदैव प्रत्यूषमङ्गलं समारेभेतेति भावः। वसन्ततिलकाच्छन्दः—उक्ता वसन्ततिलका तभजा जगौ गः।

भाषा

इसी बीच में, अमृत के समान सुन्दर सुभाषित गान वाली स्तुतिपाठिकाओं ने रस भरे, षड्ज (गरज) स्वर से उत्पन्न भाषा विशेष से पुष्ट आश्चर्यकारक विलास से भरा प्रातःकाल का मङ्गल गान प्रारम्भ कर दिया।

इयं व्रजति यामिनी त्यज नरेन्द्र निद्रारसं
　　दरिद्रति वियद्द्रुमे कुसुमकान्तयस्तारकाः ।
अयं च कुसुमायुधप्रियसुहृत्क्षणैः पञ्चपै-
　　र्भविष्यति पयोनिधेः पुलिनराजहंसः शशी ॥७४॥

अन्वयः

हे नरेन्द्र इयं यामिनी व्रजति, निद्रारसं त्यज, वियद्द्रुमे कुसुमकान्तयः तारकाः दरिद्रति। अयं कुसुमायुधप्रियसुहृत् शशी पञ्चपैः क्षणैः पयोनिधेः पुलिनराजहंसः भविष्यति च।

व्याख्या

हे नरेन्द्र राजन्! इयं यामिनी रात्रिः "विभावरीतमस्विन्यौ रजनी यामिनी तमी" इत्यमरः। व्रजति। अन्तं गच्छति। निद्रारसं निद्रासङ्गं त्यज दूरीकुरु। वियदेवाकाशमेव द्रुमो वृक्षः तस्मिन् वियद्द्रुमे कुसुमानां पुष्पाणामिव शुभ्रा धवला कान्तिः छविः यासां तास्तारकाः नक्षत्राणि "नक्षत्रमृक्षं भं तारा तारकाप्युडु वा स्त्रियाम्" इत्यमरः। दरिद्रति विरलीभवन्ति। अयं कुसुमायुधस्य कामस्य प्रियसुहृत् प्रियमित्रं शशी चन्द्रः पञ्च षट् वेति पञ्चपास्तैः क्षणैः पयोनिधेः पश्चिमसमुद्रस्य पुलिनराजहंसः पुलिनस्य तीरस्य "तोयोत्थितं तत्पुलिनं" इत्यमरः। राजहंसः मरालः कान्तिराहित्याच्छुभ्रः हंस इव भविष्यति च। अत्र पृथ्वीछन्दः—जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः।

भाषा

हे राजा! रात बीत गई है, निद्रासङ्ग को छोडो, आकाशरूपी वृक्ष में सफेद फूलों के ऐसी शोभा देने वाले नक्षत्र धीरे २ कम होते जाते हैं और यह कामदेव का प्यारा मित्र चन्द्रमा पाँच छ क्षणों में पश्चिम समुद्र के तट पर का राजहंस हो जाएगा अर्थात् सूर्योदय होने से चन्द्रमा की कान्ति दूर होकर वह सफेद रंग के राजहंस के समान दीख पडेगा।

वागुन्मीलति भिन्नपङ्जललिता लीलाशुकानामपि
　　क्रोडे दन्तकरण्डपाण्डुरतनोर्मग्ना विघोश्चन्द्रिका।
पूर्वाशामुखमण्डनत्वमचिराच्चण्डांशुराशास्यति
　　द्रागुन्मुद्रय देवि पङ्कजदलच्छायाञ्चले लोचने ॥७५॥

### अन्वयः

लीलाशुकानाम् अपि भिन्नपद्जललिता वाक् उन्मीलति। दन्त-करण्डपाण्डुरतनोः विधोः क्रोडे चन्द्रिका मग्ना। चण्डांशुः अचिरात् पूर्वाशामुखमण्डनत्वम् आयास्यति। हे देवि पङ्कजदलच्छायाञ्चले लोचने द्राक् उन्मुद्रय।

### व्याख्या

लीलाशुकानां विलासकीराणामपि भिन्नषड्जस्वरेण ललिता सुन्दरी वाक् उन्मीलति निस्सरति। दन्तकरण्डवत् करिदन्तनिर्मितभाण्डवत्पाण्डुरा तनुः शरीरं यस्य स. तस्य विधोश्चन्द्रस्य क्रोडे अङ्के "क्रोडः कोले शनौ क्रोडमङ्के" इति हैम.। चन्द्रिका चन्द्रस्य ज्योत्स्ना "चन्द्रिका कौमुदी ज्योत्स्ना" इत्यमरः। मग्ना संविष्टा। चण्डांशुर्दिनकरोऽचिरात् शीघ्रमेव पूर्वाशामुखस्य प्राचीमुखस्य मण्डनत्वमलङ्कारत्वमायास्यति प्राप्स्यति। हे देवि पङ्कजदलस्य कमलपत्रस्य छाया कान्तिः "छाया सूर्यप्रिया कान्ति. प्रतिबिम्बमनातप." इत्यमरः। अञ्चले प्रान्तभागे ययोस्ते पङ्कजदलच्छायाञ्चले लोचने नेत्रे द्राक् शीघ्रम् "स्ताग्झ-टित्यञ्जसाह्नाय द्राङ्मङ्क्षु सपदि द्रुते" इत्यमरः। उन्मुद्रय उद्घाटय। शार्दूल-विक्रीडितच्छन्द.—सूर्याश्वैर्यदि मः सजौ सततगा. शार्दूलविक्रीडितम्।

### भाषा

पालतू सुग्गो की भी स्वच्छ सरज स्वर में बोली सुनाई पड़ने लगी अर्थात् पालतू सुग्गे भी मीठी वाणी से बोलने लगे। हाथी दांत की बनी (गोल) डिबिया के समान श्वेत शरीरवाले चन्द्रमा की गोद में चांदनी प्रविष्ट हो गई अर्थात् चन्द्रमा की चांदनी चन्द्रमा में लीन हो गई। थोड़ी ही देर में सूर्य, पूर्वदिशा के अग्रभाग को सुशोभित करेगा। हे रानी! कमल के पत्ते की शोभा को अपने प्रान्तभाग से प्रकट करने वाले अपने दोनों नेत्रों को शीघ्र खोलो अर्थात् जागो।

ये वाल्लभ्यमनङ्गलेखलिखने याताः कुरङ्गीदृशाम्
ये वह्निप्रतिमल्लभल्लपदवीं पञ्चेषुणा लम्भिताः।
जाताः कान्तिविपर्ययादनवधेर्दीपाङ्कुरास्तेऽधुना
धूलीधूसरताम्रचूडतरुणीचूडावदापाण्डुराः ॥७६॥

### अन्वयः

ये कुरङ्गीदृशाम् अनङ्गलेखलिखने वाल्लभ्यं याताः, ये पञ्चेषुणा वह्निप्रतिमल्लभल्लपदवीं लङ्घिताः, ते दीपाङ्कुराः अनवधेः कान्तिविपर्यात् अधुना धूलीधूसरताम्रचूडतरुणीचूडावत् आपाण्डुराः ( जाताः )।

### व्याख्या

ये दीपाङ्कुराः कुरङ्गीदृशां मृगीदृशामङ्गनानामनङ्गस्य कामस्य ये लेखाः पत्राणि तेषां लिखने वाल्लभ्यं प्रियत्वं साहाय्यकारित्वं याताः प्राप्ताः। ये च पञ्च इषवो बाणा यस्य स तेन पञ्चेषुणा कामेन वह्नेः प्रतिमल्लाः सदृशा ये भल्ला विषाक्ता बाणास्तेषां पदवीं माहात्म्यं लङ्घिताः तेभ्योऽप्यधिका जाताः, विरहजनितदाहदशायां दीपानामप्युष्णत्वेन दाहजनकत्वमिति भावः। ते दीपाङ्कुरा अनवधे अवधिरहितत्वात् कान्तिविपर्ययाच्छोभारहितत्वात् अधुना इदानीं प्रातःकाले धूलीभिः रजोभिः धूसराः मलिनाः ताम्रचूडाः कुक्कुटाः "कृकवाकुस्ताम्रचूडः कुक्कुटश्चरणायुधः" इत्यमरः। तेषां तरुण्यः युवतयः तासां चूडाः मस्तकानि "शिखा चूडा केशपाशी" इत्यमरः। तद्वत् आपाण्डुराः शुभ्रा जाता निष्प्रभत्वमाप्ता इत्यर्थः। शार्दूलविक्रीडितं छन्दः।

### भाषा

जो दीपक के किरण, अपने प्रिय को प्रेमपत्र लिखने में सहायक होने से अत्यन्त प्रिय हो गये थे, जिनको कामदेव ने आग के समान विषैले बाणों की करतूत से भी अधिक प्रबल बना दिया था अर्थात् विरहज्वालाभिभूत विरहिणियों को जो दीपाङ्कुर अधिक तापदायी मालूम होते थे, वे अब धूल में लोटी हुई मुर्गी के मस्तक पर के रोवों के समान मटमैले दिखाई देते हैं अर्थात् तेजहीन हो गए हैं।

यः सैन्ये स्मरपार्थिवस्य विरहिप्रत्यर्थिनामग्रणी-
ज्योंत्स्नानिर्झरमुज्झति स्म जगतां सन्तापनिर्वापणम्।
सोऽयं तारकनायकः किमपरं शृङ्गारसञ्जीवनं
जातः पृष्ठपरागपाण्डुरजरत्कूष्माण्डपिण्डाकृतिः ॥७७॥

अन्वयः

यः स्मरपार्थिवस्य सैन्ये विरहिप्रत्यर्थिनां अग्रणीः यः जगतां तापनिर्वापणं ज्योत्स्नानिर्झरम् उज्झति स्म, सः अयं पृष्ठपरागपाण्डुरजरत्कूष्माण्डपिण्डाकृतिः तारकनायकः अपरं शृङ्गारसञ्जीवनं जातः किम् ।

व्याख्या

यः चन्द्रः स्मरः काम एव पार्थिवः राजा तस्य स्मरपार्थिवस्य सैन्ये सेनामध्ये विरहिणां स्वप्रियैः सह वियोगिनां ये प्रत्यर्थिनः शत्रवः "अभियातिपरारातिप्रत्यर्थिपरिपन्थिनः" इत्यमरः । तेषामग्रणीर्नेता यः चन्द्रः जगतां भुवनानां तापस्य निर्वापणं शमनं ज्योत्स्नायाः चन्द्रिकायाः निर्झरं प्रस्रवणम् "उत्सः प्रस्रवणं वारिप्रवाहो निर्झरो झरः" इत्यमरः । उज्झति स्म प्रवहति स्म । सोऽयम् पृष्ठे परागो धूलिः यस्य स अतएव पाण्डुरः श्वेतो जरंश्च प्राचीनश्च यः कूष्माण्डः तस्य पिण्डवत् शरीरवत् आकृतिर्यस्य सः तारकाणां नक्षत्राणां नायकः चन्द्रः अपरमन्यत् शृङ्गारस्य सञ्जीवनमुत्पादको जातः किम्, येनाऽधुनाऽपि शय्यां न जहासीति ध्वनिः । शार्दूलविक्रीडितं छन्दः ।

भाषा

जो चन्द्र राजा कामदेव की सेना में विरही जनों के शत्रुओं में प्रधान है, जो संसार के ताप को दूर कर देने वाली चाँदनी के प्रवाह को फैलाता है, वह पीठ पर की धूली से सफेद दिखाई देनेवाले पुराने सफेद कोहड़े की आकृति के समान आकृति रखनेवाला ताराओं का नायक चन्द्र, क्या शृङ्गाररस का दूसरा उत्पादक हो गया क्या ? अर्थात् शृङ्गार रस का उत्पादक तो कामदेव है परन्तु यह भी क्या दूसरा शृङ्गाररस का उत्पादक हो गया है जिससे अभी भी शय्या छोड़ने की इच्छा नहीं हो रही है ।

खण्डः क्षपासु कियतीष्वपि यः कृशाङ्गि
भङ्गीमनङ्गपरशोः सदृशीं बिभर्ति ।
सोऽयं निमज्जति जगन्नयनाभिरामः
श्यामावधूवदनचन्दनबिन्दुरिन्दुः ॥७८॥

अन्वयः

हे कृशाङ्गि कियतीषु क्षपासु अपि यः खण्डः अनङ्गपरशोः सदृशीं

भङ्गीं बिभर्ति । सः अयम् जगन्नयनाभिरामः श्यामावधूवदनचन्दनबिन्दुः इन्दुः निमज्जति ।

### व्याख्या

कृशानि तनूनि अङ्गानि अवयवाः "अङ्गं शरीरेऽवयवेऽप्रधानेऽप्" इत्यमरः । यस्यास्सा तत्सम्बोधने हे कृशाङ्गि कियतोऽप्यनेकासु क्षपासु रात्रिषु अपि यः खण्डोऽपूर्णकलः चन्द्रखण्डोऽनङ्गस्य कामस्य परशुस्तस्य सदृशीं समानां भङ्गीं रचनां शोभां बिभर्ति धारयति । सोऽयं जगतां लोकानां नयनानामभिरामसुन्दरः श्यामायाः रात्रेरेव वध्वाः यद्वा यौवनमध्यस्थायाः स्त्रियो "शीते सुखोष्णसर्वाङ्गी ग्रीष्मे या सुखशीतला । तप्तकाञ्चनवर्णाभा सा स्त्री श्यामेति कथ्यते ।" वदने मुखे चन्दनं तस्यबिन्दुस्तिलकमेवेन्दुश्चन्द्रः निमज्जति पश्चिमाब्धौ पतति । कामदेवस्य परशुधारणमप्रसिद्धमिति ख्यातिविरुद्धता नाम दोषः । वसन्ततिलकाच्छन्दः ।

### भाषा

हे कृश (सुडौल) शरीर वाली ! कितनी ही रात्रियों में जो अपूर्ण कला वाला चन्द्र कामदेव के परशु के समान शोभा प्रकट करता है अर्थात् टेढ़ा अर्धचन्द्राकार रहता है, वह संसार की आंखों को आनन्द देनेवाला रात्रिरूपी कामिनी के या सोलह वर्ष की युवती के मुख पर का चन्दन का टीका, यह चन्द्रमा पश्चिम समुद्र में डूब रहा है ।

सपदि परिजनस्त्रीविस्तृतोद्दामलज्जा-
क्रमनमितमुखीभिः खिद्यते खण्डिताभिः ।
घनमसृणविभूषाखण्डनोच्चण्डगण्ड-
स्थलविलुलितबाष्पोत्पीडमेणेक्षणाभिः ॥७२॥

### अन्वयः

परिजनस्त्रीविस्तृतोद्दामलज्जाक्रमनमितमुखीभिः खण्डिताभिः एणेक्षणाभिः सपदि घनमसृणविभूषाखण्डनोच्चण्डगण्डस्थलविलुलितबाष्पोत्पीडं खिद्यते ।

### व्याख्या

परिजनस्त्रियः, (प्रातः नायिकासंनिधौ सेवाकार्यविधानार्थमागताः), तासाम्

विस्तृता विशाला उद्‌गाढा घनीभूता या लज्जा परिजनस्त्रीणां पुरतः पत्युरनागमनात्स्वस्याः कृतार्थतारहित्यस्य ज्ञानेनोत्पन्ना नायिकाहृदि त्रपा तस्याः क्रम परम्परा तेन नमितानि अधोजातानि मुखानि यासां तास्ताभिः परिजनस्त्रीविस्तृतोद्गाढलज्जाक्रमनमितमुखीभिः खण्डिताभिः पतिवञ्चिताभिः रेणेक्षणाभिर्मृगनयनाभिः नायिकाभिः "ज्ञातेऽन्यासङ्गविकृते खण्डितेर्ष्याकषायिता"। "निद्राकषायमुकुलीकृतताम्रनेत्रो नारीनखव्रणविशेषविचित्रिताङ्गः। यस्याः कुतोऽपि गृहमेति पतिः प्रभाते सा खण्डितेति कथिता मुनिभिः पुराणैः।" इति खण्डिता लक्षणम्। सपदि तत्क्षणे घनास्सान्द्रा मसृणाः स्निग्धा "चिक्कणं मसृणं स्निग्धं" इत्यमरः। या विभूषा विभूषणानि तासां खण्डनेन त्रोटनेन, प्रियसङ्गमाभावात् अलङ्कारधारणस्य वैयर्थ्यादित्यर्थः। उच्चण्डानि असुन्दराणि गण्डस्थलानि कपोलस्थलानि तेषु विलुलिताः पतिता बाष्पोत्पीडा अश्रुसमूहा यस्मिन् कर्मणि तद्यथा स्यात्तथा खिद्यते दुःखं क्रियते। अत्र मालिनीच्छन्दः "ननमयययुतेयं मालिनी भोगिलोकैः"।

### भाषा

(प्रातःकाल होने पर) परिचारिका सखियों के आने पर (रात में पति के न आने से) अत्यधिक लज्जाक्रम से नीचे मुख लटकाने वाली, पति से वञ्चित वियोगिनी मृगनयनी (खण्डिता) अङ्गनाएँ, जल्दी से पहिने हुए ठोस और चिकने आभूषणों को उतार देने से बदसूरत दिखाने वाले गालों पर आंसुओं का प्रवाह बहाती हुई, दुःख भोगती हैं।

ये मानद्विरदाङ्कुशाः कुशलिनः कण्ठेषु ये रागिणां
सोल्लासेन विलासपाशपदवीं पञ्चेषुणा लम्भिताः।
पादास्ते घटमानकोकमिथुनक्रीडारहःसाक्षिणः
क्षोणीकान्त मृणालतन्तुतलिनास्ताम्यन्ति तारापतेः॥८०॥

### अन्वयः

हे क्षोणीकान्त ! ये कुशलिनः मानद्विरदाङ्कुशाः, ये सोल्लासेन पञ्चेषुणा रागिणां कण्ठेषु विलासपाशपदवीं लम्भिताः, ते मृणालतन्तुतलिनाः घटमानकोकमिथुनक्रीडारहस्साक्षिणः तारापतेः पादाः ताम्यन्ति।

## व्याख्या

क्षोण्याः पृथिव्याः "धरा धरित्री धरणी क्षोणिर्ज्या काश्यपी क्षितिः" इत्यमरः। कान्तः प्रियस्तत्सम्बोधने हे क्षोणीकान्त हे पृथ्वीवल्लभ। ये इन्दु-किरणाः कुशलिन उद्भटा मानः गर्व एव द्विरदो मत्तगजस्तस्य अङ्कुशाः कामिनीमानविध्वंसका इत्यर्थः। ये सोत्प्रासेन सगर्वेण पञ्चेषुणा कामेन रागिणां प्रेमवतां कण्ठेषु गलप्रदेशेषु विलासस्य रतिक्रीडायाः पाशो रज्जुस्तस्य पदवीं स्थानमथवा विलास आलिङ्गनं तस्य पाशस्तस्य पदवीं पाशत्वमित्यर्थः। लम्भिताः प्रापिताः, ते मृणालतन्तुवसलिना मृणालदोरकवत् कृशाः घटमानानि संगममाप्नुवन्ति कोकमिथुनानि चक्रवाकयुगलानि "कोकश्चक्रश्चक्रवाको रथाङ्गाह्वयनामकः" इत्यमरः। "स्त्रीपुंसौ मिथुनं द्वंद्वं युग्मं तु युगलं युगम्"। इत्यमरः। तेषां क्रीडारहसः क्रीडारहो वृत्तान्तस्तस्य साक्षिणो द्रष्टारः तारापतेः चन्द्रस्य पादाः किरणाः "पादा रश्म्यङ्घ्रितुर्यांशाः" इत्यमरः। ताम्यन्ति म्लायन्ति कान्तिराहित्यादित्यर्थः। शार्दूलविक्रीडितच्छन्दः।

## भाषा

हे पृथ्वीवल्लभ! जो चन्द्रमा के किरण कार्यनिपुण, मानरूपी हाथी के लिये अङ्कुश का काम करते थे अर्थात् जिनके स्पर्श से ही मान भङ्ग हो जाता था, जिनको अभिमान भरे कामदेव ने प्रेमियों के गलों में आलिङ्गन या रतिक्रीडा कराने के जाल की पदवी को प्राप्त कराया था वे डोरे के ऐसे सूक्ष्म, चकवा के जोडे के क्रीडारहस्य को देखने वाले, किरण मुरझा गए हैं अर्थात् तेज रहित हो गये हैं। चकवा का जोडा रातभर अलग रहता है। प्रात काल होने पर ही उसका संयोग होता है।

स्फुरति निरुपमोऽर्थस्तन्वते पाकमुद्रा-
परिचयमकवीनामप्यकाण्डे वचांसि।
सुकवितिलक वेला कापि सारस्वतीयं
क्षणमवहितचित्तः काव्यचिन्तां विधेहि॥८१॥

## अन्वयः

निरुपमः अर्थः स्फुरति, अकवीनाम् अपि वचांसि अकाण्डे पाकमुद्रापरिचयं तन्वते। हे सुकवितिलक! इयं का अपि सारस्वती वेला, क्षणम् अवहितचित्तः ( सन् ) काव्यचिन्तां विधेहि।

## व्याख्या

नास्ति उपमा सादृश्य यस्य स निरुपम अर्थ काव्यपदार्थ स्फुरति प्रतिभया प्रकटीभवति। अकवीनामपि काव्यकौशलहीनानामपि जनाना वचासि वचनानि अकाण्डे सहसैव, प्रात शान्तचित्तत्वात्, पाकस्य परिपूर्णताया मुद्रा स्वरूप तस्या परिचय सम्बन्ध तन्वते विस्तारयन्ति। हे सुकवीना तिलक भूषणरूप! इय कापि अनिर्वचनीया सरस्वत्या इयमिति सारस्वती वेला समय, क्षण मुहूर्तमात्रम् अवहित सावधान चित्त मनो यस्य स अवहितचित्त सन् काव्यस्य कवितानिर्माणस्य चिन्ता विचार विधेहि। मालिनीच्छन्द।

## भाषा

प्रात काल के समय, अनुपम काव्य रचना की स्फूर्ति होती है। जो कवि कहाने योग्य नहीं हैं उनकी भी कविताएँ इस समय परिपक्व होने का परिचय देने लगती है। हे कवियो के भूषण। यह सरस्वती का एक विशिष्ट समय है इसलिये थोडी देर के लिये ध्यानावस्थित चित्त होकर कवितारचना की ओर प्रवृत्त हो।

**केलिप्राङ्गणकुट्टिमेषु न पुनः क्रीडन्ति पृथ्वीभृतां**
**यद्गण्डस्थलदानदुर्दिनपयःपङ्केषु मग्नाः श्रियः।**
**उन्मीलत्क्रमशृङ्खलाकलकलप्रेङ्खोलखेलैः पदै-**
**रुत्तिष्ठन्ति परागपुञ्जशयनात्त्वत्कुञ्जराग्रेसराः ॥८२॥**

## अन्वयः

यद्गण्डस्थलदानदुर्दिनपयःपङ्केषु मग्नाः पृथ्वीभृतां श्रियः केलिप्राङ्गणकुट्टिमेषु न पुनः क्रीडन्ति (ते) त्वत्कुञ्जराग्रेसराः उन्मीलत्क्रमशृङ्खलाकलकलप्रेङ्खोलखेलैः पदैः परागपुञ्जशयनात् उत्तिष्ठन्ति।

## व्याख्या

येषां गजाना गण्डस्थलाना कपोलस्थलाना दान मदस्तस्य दुर्दिन वृष्टि "मेघच्छन्नेऽह्नि दुर्दिनम्" इत्यमर। तस्य पयो जल तस्य पङ्का कर्दमास्तेषु मग्ना पतिता पृथ्वीभृता विपक्षिणा राज्ञा श्रिय लक्ष्म्य केलिप्राङ्गणाना क्रीडा गृहाणां कुट्टिमा बद्धभूमयस्तेषु 'कुट्टिमोऽस्त्री निबद्धा भू" इति कोषान्तरम्। न पुन क्रीडन्ति विलास कुर्वन्ति, त्वया कुञ्जरसेनया निर्जिता राजानो गृह

परित्यज्य वनं गता न सुखमेधन्त इति भावः। ते त्वत्कुञ्जराणां गजानामग्रेसराः श्रेष्ठाः उन्मीलन्तः प्रादुर्भवन्तः क्रमा येषु ते शनैः शनैर्वर्धमाना ये शृङ्खलानां गजबन्धनानां कलकलाः शब्दास्तेषां प्रेङ्खोलखेलाश्चञ्चलसुन्दरक्रीडा येषु तैः पदैश्चरणैः परागाणां पुञ्जानि येषु तत् शयनं शय्यातल्पं तस्मादुत्तिष्ठन्ति शयनस्थानं कृत्वोत्तिष्ठन्ति। शार्दूलविक्रीडितञ्छन्दः।

### भाषा

आपके, गजसेना से विपक्षि राजाओं पर आक्रमण करने पर, जिन गजों के गण्डस्थलों से निकलने वाले मद की वृष्टि के जल के कीचड़ों में डूबी हुई विपक्षी राजाओं की राजलक्ष्मी फिर कभी भी क्रीडा के लिये बने हुए भवने के गच पर खेलती हुई न दिखाई पड़ी अर्थात् विपक्षी राजा राजपाट छोड़कर जंगल में भाग गये, उस, आपकी गजसेना के प्रधान हाथी, क्रम से प्रारम्भ होने वाले सिक्कड़ों के कलकल शब्द की चञ्चल तथा सुन्दर क्रीडा से युक्त पावों से धूल के ढेर रूपी शय्या से उठ रहे हैं।

ये कुण्ठीकृतवल्लभप्रणतयः शस्त्रैरनङ्गस्य ये
न प्राप्ताश्च निशीथिनीपतिकरैः शैथिल्यवीथीमपि।
ते निःशङ्कविटङ्कतालुतुमुलप्रोतप्लुतप्लावितै-
श्छिन्नाः कुक्कुटकूजितैर्मृगदृशां मानग्रहग्रन्थयः ॥८३॥

### अन्वयः

ये कुण्ठीकृतवल्लभप्रणतयः ये अनङ्गस्य शस्त्रैः निशीथिनीपतिकरैः शैथिल्यवीथीम् अपि न प्राप्ताः च ते मृगीदृशां मानग्रहग्रन्थयः निःशङ्कविटङ्कतालुतुमुलप्रोतप्लुतप्लावितैः कुक्कुटकूजितैः छिन्नाः।

### व्याख्या

ये मानग्रन्थयः कुण्ठीकृताः वैयर्थ्यमापादिताः वल्लभानां पतीनां प्रणतयो नमस्कारा यैस्ते कुण्ठीकृतवल्लभप्रणतयः, येऽनङ्गस्य कामस्य शस्त्रैरायुधीभूतैः निशीथिन्या रात्रेः पतिश्चन्द्रस्तस्य कराः किरणास्तैः शैथिल्यस्य वीथी मार्गस्तां नम्रतामपि च न प्राप्ताः नापादितास्ते मृगीदृशां मृगाक्षीणां मानग्रहस्य ग्रन्थयः मानस्य दुर्भेद्यग्रन्थयः निश्शङ्कं निर्भयं यथास्यात्तथा विटङ्के "कपोतपालिकायां तु विटङ्कं पुन्नपुंसकम्" इत्यमरः। खोपादौ काष्ठादिरचितपक्षिगृहे तालुस्थाने

मुखस्य, तुमुलमधिकं यथास्यात्तथा प्रोता अनुस्यूताः प्लुताः प्लुतस्वराः तैः प्लावितानि व्याप्तानि तैः कुक्कुटकूजितैः ताम्रचूडशब्दैः छिन्नाः निरस्ता.। कुक्कुटकूजितं श्रुत्वा स्त्रीणां मानभङ्गो जातः प्रातःकालो जात इति ज्ञानादिति भावः। शार्दूलविक्रीडितं छन्दः।

### भाषा

मानिनी के जिन मान की ग्रन्थियों ने पति के मान दूर कराने के लिये दिये हुए प्रणामों को व्यर्थ कर दिया, और जो कामदेव के शस्त्रभूत रात्रिपति चन्द्रमा के किरणों से भी ढीली होने के मार्ग पर नहीं आईं, वे मृगनयनिओं की मानग्रन्थियाँ, निर्भीक होकर मकानों की छत पर बने दर्बों में तालु के उच्चतम भाग में उत्पन्न प्लुतस्वर से युक्त मुर्गों के शब्दों से छिन्न भिन्न हो गईं। अर्थात् मुर्गों का शब्द सुनकर रात बीत गई है अब मान करते बैठने से रात व्यर्थ ही चली जाएगी ऐसा सोच कर मानिनिओं ने मान छोड दिया।

क्षिपति तिमिरभारं भैरवः कैरवाणा-
मुदयशिखरिलीलाशेखरोऽयं खरांशुः।
अपि चकितचकोरीपीतशेषेण धाम्ना
भवति विधुरकाण्डे तण्डुलक्षोदपाण्डुः ॥८४॥

### अन्वयः

उदयशिखरिलीलाशेखरः भैरवः अयं खरांशुः कैरवाणां तिमिरभारं क्षिपति। विधुः अपि अकाण्डे चकितचकोरीपीतशेषेण धाम्ना तण्डुलक्षोदपाण्डुः भवति।

### व्याख्या

उदयशिखरिणः उदयाचलस्य लीलाशेखरः विलासशिरोभूषणरूपो भैरवः भयानकः अयं प्रत्यक्षदृश्यः खरांशुः खरास्तीक्ष्णा अंशवो यस्य स खरांशुः सूर्यः कैरवाणां कुमुदानां तिमिरभारं तमोभारं क्षिपति दूरतः निवारयति। विधुः चन्द्रोऽपि अकाण्डेऽनवसरे चकिता आश्चर्यसम्भ्रान्ताश्चकोर्यस्ताभिः पीतमनन्तरं शेषमवशिष्टं पीताच्छेषमवशिष्टं तेन धाम्ना तेजसा स्वल्पतेजसेत्यर्थः। तण्डुलस्य क्षोदश्चूर्णं "चूर्णे क्षोदः समुत्पिञ्जपिञ्जलौ" इत्यमरः। तद्वत्पाण्डुः शुभ्रो भवति जायते। स्वप्रियायाः कुमुदिन्याः बलवता सूर्येण शत्रुदयेन प्रसादनार्थं

तमोभारदूरीकरणं दृष्ट्वाऽसामर्थ्याच्चन्द्रमसः पाण्डुत्वं जातमितिभावः। मालिनीच्छन्दः। समासोक्तिरलङ्कारः।

### भाषा

उदयाचल के मस्तक पर का सुन्दर आभूषण स्वरूप यह भयानक अर्थात् बलवान् सूर्य कुमुदिनिओं पर के अन्धकार को हटाकर दूर फेंकता है। चन्द्रमा भी स्वयं ही अचम्भे में पड़ी चकोरी द्वारा पीने से बची हुई थोड़ी चाँदनी से युक्त होने से चावल की पीठी के समान सफेद दिखाई देता है। अर्थात् अपनी प्यारी कुमुदिनी के अन्धकार रूपी दुःख को, सूर्य द्वारा, उसे प्रसन्न करने के लिए दूर करते हुए देखकर बलवान् सूर्य का कुछ भी बिगाड़ने की शक्ति न होने से चन्द्र सफेद पड़ गया है।

सम्यङ्मन्मथशासने स्थितवतामुत्साहदानोद्यताः
सान्द्रं मानवतीजनस्य मनसि व्यापारयन्तो भयम्।
कन्दर्पेण कृताकृतेक्षणविधौ यूनां नियुक्ता इव
भ्राम्यन्ति स्फुटिताब्जसौरभमुषः प्रत्यूषवेलानिलाः ॥८४॥

### अन्वयः

उत्साहदानोद्यताः, मानवतीजनस्य मनसि सान्द्रं भयं व्यापारयन्तः सम्यक् मन्मथशासने स्थितवतां यूनां कृताकृतेक्षणविधौ कन्दर्पेण नियुक्ताः इव स्फुटिताब्जसौरभमुषः प्रत्यूषवेलानिलाः भ्राम्यन्ति।

### व्याख्या

उत्साहस्य मनोग्लानिनिवारणद्वारा चित्तविकासस्य दाने प्रदाने उद्यताः समुद्युक्ता मानवतीजनस्य मानिनीनां मनसि सान्द्रं घनं भयं व्यापारयन्तस्समुत्पादयन्तः, द्रुतमेव मानखण्डनस्य जनिष्यमाणत्वात्, सम्यक् सर्वतो भावेन मन्मथस्य कामस्य शासने आज्ञायां स्थितवतां तदाज्ञापालनं कुर्वतां कामासक्तानामित्यर्थः। यूनां युवकजनानां कृतानि अकृतानि कामाज्ञोचितकर्माणि तेषामीक्षणविधौ निदर्शने परीक्षणकार्ये कन्दर्पेण कामेन नियुक्ता इव स्फुटितानि विकसितान्यब्जानि कमलानि तेषां सौरभं सुगन्धं मुष्णन्तीति स्फुटिताब्जसौरभमुषः प्रत्यूषवेलानिलाः प्रातःकालपवना भ्राम्यन्ति वहन्ति। शार्दूलविक्रीडितच्छन्दः।

### भाषा

उत्साह बढ़ानेवाले, मानिनिओं के मन में बड़ा भय उत्पन्न करनेवाले और कामदेव के शासन में पूर्णतया विद्यमान युवकजनों के द्वारा कामदेव की आज्ञा के अनुसार कौन-कौन काम किये गये और कौन नहीं किये गये इसका मानो निरीक्षण करने के लिए नियुक्त, खिले हुए कमल की सुगन्ध को चुरानेवाले अर्थात् कमल की सुगन्ध से सुगन्धित प्रातःकाल के वायु बहने लगे।

रेजे व्योमनि लङ्घितोभयतटा व्योमस्रवन्तीव या
या शैलेन्द्रशिलातलेष्वलभत श्रीखण्डपङ्कोपमाम् ।
देवस्यान्ध्रपुरन्ध्रिनेत्रवसतेर्लोकत्रयीकामुक-
क्रीडाकार्मणयोगचूर्णसदृशी निद्राति सा चन्द्रिका ।।८६।।

### अन्वयः

या व्योमनि लङ्घितोभयतटा व्योमस्रवन्ती इव रेजे। या शैलेन्द्रशिलातलेषु श्रीखण्डपङ्कोपमाम् अलभत। सा आन्ध्रपुरन्ध्रिनेत्रवसतेः देवस्य लोकत्रयीकामुकक्रीडाकार्मणयोगचूर्णसदृशी चन्द्रिका निद्राति।

### व्याख्या

या ज्योत्स्ना व्योमनि आकाशे लङ्घितमाक्रान्तमुभयतटं यया सा लङ्घितोभयतटा व्योम्न आकाशस्य स्रवन्ती नदी इव आकाशगङ्गा इव रेजे शुशुभे। या शैलेन्द्रस्य हिमालयस्य शिलातलानि पाषाणखण्डानि तेषु श्रीखण्डस्य चन्दनस्य पङ्कः तस्योपमा सादृश्यं तां चन्दनपङ्कतुल्यतामलभत प्राप्तवती। सा प्रसिद्धा आन्ध्रदेशस्य पुरन्ध्रीणां कान्तानां नेत्रेषु वसतिर्निवासो यस्य स तस्य देवस्य कामस्य लोकत्रय्यास्त्रिभुवनस्य कामुकानां विलासरसिकसमूहानां क्रीडा विलासः तस्याः कार्मणं वशीकरणं "वशक्रिया संवननं मूलकर्म तु कार्मणम्" इत्यमरः। तस्य योगचूर्णं भस्म तेन सदृशी समाना चन्द्रिका चन्द्रप्रभा निद्राति सम्प्रति न भाति। शार्दूलविक्रीडितं छन्दः।

### भाषा

जो चाँदनी, आकाश में अपने दोनों तटों को पार कर जानेवाली आकाश नदी (स्वर्गङ्गा) के समान शोभित हो रही थी, जो ऊँचे-ऊँचे पर्वतों की चट्टानों पर श्वेत चन्दन के पङ्क की उपमा को प्राप्त हुई थी, वह तैलङ्गदेश

की कामिनिओं के नेत्रों में बसने वाले कामदेव की, तीनों लोकों के विलासिजनों की क्रीडा को वशीकरण करने के लिए अभिमन्त्रित भस्म के समान चन्द्रिका, अब सो रही है अर्थात् अब शोभित नहीं हो रही है।

**निक्षिप्य गण्डफलकेष्विव खण्डिताना-**
**मात्मद्युतिं दधति पाण्डुरतां प्रदीपाः।**
**शुष्यन्ति चन्द्रमणयश्च मनस्विनीना-**
**मार्द्रत्वमीक्षणपुटेष्विव संनिवेश्य ॥८७॥**

### अन्वयः

प्रदीपाः खण्डितानां गण्डफलकेषु आत्मद्युतिं निक्षिप्य पाण्डुरतां दधति इव। चन्द्रमणयः च मनस्विनीनाम् ईक्षणपुटेषु आर्द्रत्वं संनिवेश्य शुष्यन्ति इव।

### व्याख्या

प्रदीपाः प्रकाशकारका दीपाः खण्डितानां नायिकानां "ज्ञातेऽन्यासङ्गविकृते खण्डितेर्ष्याकषायिता" इति खण्डितालक्षणम्। गण्डफलकेषु कपोलप्रदेशेषु आत्मद्युतिं निजकान्तिं निक्षिप्य प्रदाय पाण्डुरतां शुक्लभासुरत्वं दधति धारयन्ति इव। चन्द्रमणयश्च चन्द्रकान्तसंज्ञकमणयः मनस्विनीनां मानिनीनामीक्षणपुटेषु नेत्रपुटेष्वार्द्रत्वं संनिवेश्य संस्थाप्य शुष्यन्ति शुष्का भवन्ति इव। प्रातःकालस्य सत्त्वात् मानिनीनां स्वेच्छापूर्त्यभावात्ता रुदन्ति क्रोधञ्च कुर्वन्ति, चन्द्रमणयश्च चन्द्रिकाभावाज्जलं न स्रवन्ति, खण्डिता च क्रोधेन दीप्तकपोला भवतीत्यर्थः। उत्प्रेक्षालङ्कारः।

### भाषा

दीपक मानों अपनी चमक खण्डिता स्त्रियों के गालों पर छोड़कर पीले पड़ गए हैं और चन्द्रमणि मानो मानिनीओं की आंखों में अपना गीलापन छोड़कर सूखे हो गये हैं। अर्थात् प्रातःकाल होने से दीपक फीके पड़ जाते हैं और चन्द्रिका न रहने से चन्द्रमणि नहीं पसीजते। खण्डिता स्त्री के पति के रात भर घर न आने से क्रोध से गाल चमकने लगते हैं और मानिनी, रात भर मान में रहने से, रात बीत जाने से सुरतसुख के अभाव से दुःखी होकर पश्चात्ताप करती हुई आँसू बहाने लगती है।

त्यक्ताः शक्रमतङ्गजेन कथमप्याधोरणाद्बिभ्यता
संक्षोभादरुणेन वन्यकरिणां व्योमाङ्गणे पुञ्जिताः।
किञ्चिद्गर्जदरण्यमत्तमहिषव्याकीर्णकर्णज्वराः
पूर्वक्ष्माधरमुत्सृजन्ति तुरगाः कृच्छ्रेण तिग्मद्युतेः ॥८८॥

अन्वयः

आधोरणात् बिभ्यता शक्रमतङ्गजेन कथमपि त्यक्ताः अरुणेन वन्यकरिणां संक्षोभात् व्योमाङ्गणे पुञ्जिताः किञ्चिद्गर्जदरण्यमत्तमहिषव्याकीर्णकर्णज्वराः तिग्मद्युतेः तुरगाः कृच्छ्रेण पूर्वक्ष्माधरम् उत्सृजन्ति।

व्याख्या

आधोरणात् हस्तिपकात् "आधोरणा हस्तिपका हस्त्यारोहा निषादिनः इत्यमरः।" बिभ्यता भयं कुर्वता शक्रस्य इन्द्रस्य मतङ्गजेन हस्तिना "मतङ्गजो गजो नागः कुञ्जरो वारणः करी" इत्यमरः। ऐरावतेन कथमपि कृच्छ्रात् त्यक्ताः परित्यक्ता अरुणेन सूर्यसारथिना वन्यकरिणां वनभवहस्तिनां संक्षोभात् संघट्टनात् व्योमाङ्गणे आकाशप्रान्ते पुञ्जिताः एकत्रीकृताः किञ्चिद्गर्जद्भिर्गर्जनशब्दं कुर्वद्भिररण्यमत्तमहिषैर्वन्यैः मदान्धैर्महिषैर्व्याकीर्णास्समुत्पादिताः कर्णेषु ज्वरो येषां ते तिग्मद्युतेस्सूर्यस्य तुरगाः अश्वाः कृच्छ्रेण दुःखात् पूर्वक्ष्माधरं पूर्वाचलमुत्सृजन्ति परित्यजन्ति। शार्दूलविक्रीडितं छन्दः।

भाषा

पीलवान से डरने वाले इन्द्र के हाथी (पूर्व दिशा का स्वामी इन्द्र है) ऐरावत से किसी प्रकार छुटकारा पाने वाले, जंगली हाथियों से भयभीत होकर भड़कते रहने से सूर्य का रथ हाँकने वाले अरुण द्वारा आकाशरूपी आंगन में अर्थात् मैदान में किसी प्रकार समेटे हुए, गर्जना करने वाले जंगली भैंसों के शब्दों के कान में पड़ने से कुछ पीड़ित, सूर्य के घोड़े, उदयाचल को छोड़ मुश्किल से आगे बढ़ रहे हैं।

क्षिप्त्वा गुहासु तिमिरं विहितव्यलीकाः
पादान्वहन्ति गिरयस्तरणेः शिरोभिः।
तन्मस्तकेषु च किमप्यभयप्रदान-
हेतोरिवार्पितकरः प्रतिभाति भानुः ॥८९॥

अन्वयः

गुहासु तिमिरं क्षिप्त्वा विहितव्यलीकाः गिरयः शिरोभिः तरणेः पादान् वहन्ति । भानुः किम् अपि अभयप्रदानहेतोः तन्मस्तकेषु अर्पितकरः इव प्रतिभाति ।

व्याख्या

गुहासु कन्दरासु "दरी तु कन्दरो वा स्त्री देवखातबिले गुहा" इत्यमरः । तिमिरमन्धकारं क्षिप्त्वा विनिवेश्य विहितः कृतो व्यलीकोऽपराधो यैस्ते विहितव्यलीकाः गिरयः पर्वताः शिरोभिर्मस्तकैः शिखरैः तरणेस्सूर्यस्य पादान् किरणान् पक्षे चरणान् वहन्ति धारयन्ति, तमपराधक्षमापणार्थं प्रणमन्तीति भावः । भानुः सूर्यः किमपि कथमपि अभयस्य भीतिराहित्यस्य प्रदानं तस्य हेतोः कारणात् तस्य पर्वतस्य मस्तकेषु मूर्धसु अर्पिता दत्ताः कराः किरणाः पक्षे हस्ता येन सः अर्पितकर इव प्रतिभाति । कथमप्यपराधं विमृश्य मस्तकेषु स्वकरविन्यासं करोतीति भावः । वसन्ततिलकाच्छन्दः । समासोक्तिरलङ्कारः ।

भाषा

अपनी गुफाओं में अन्धकार को छिपाकर अर्थात् शरण देकर, अपराध करने वाली पहाड़ियाँ, अपनी चोटियों पर या अपने मस्तकों पर सूर्य के किरणों को या पादों को धारण करती हैं अर्थात् नमस्कार करती हैं । सूर्य भी किसी प्रकार उनको अभयप्रदान करने के हेतु मानो उनकी चोटियों या मस्तकों पर अपने किरण या हाथ को रखता हुआ मालुम पड़ रहा है ।

बाणाः श्वेतमयूखशाणकषणक्षुण्णाः क्षणात्कुण्ठतां
यातास्त्यक्तनयासु यासु निहिताः पञ्चापि पञ्चेषुणा ।
उत्तंसोत्पलपल्लवेऽपि पतिते दैवात्पुरः पादयोः
कण्ठाश्लेषकठोरकौतुकरसास्तिष्ठन्ति ताः कामिनाम् ॥६०॥

अन्वयः

पञ्चेषुणा निहिताः श्वेतमयूखशाणकषणक्षुण्णाः पञ्च अपि बाणाः त्यक्तनयासु यासु क्षणात् कुण्ठतां याताः ताः दैवात् पादयोः पुरः उत्तंसोत्पल्लवे पतिते अपि कामिनां कण्ठाश्लेषकठोरकौतुकरसाः (सत्यः) तिष्ठन्ति ।

### व्याख्या

पञ्च इषवो बाणा यस्य स तेन पञ्चेषुणा कामेन निहिताः प्रयुक्ताः श्वेता मयूखाः किरणा यस्य सः श्वेतमयूखश्चन्द्रः स एव शाणः कषणोपलं "शाणस्तु निकषः कषः" इत्यमरः। तस्मिन् कषणेन घर्षणेन क्षुण्णास्तीक्ष्णाः पञ्चापि कामदेवस्य सर्वेऽपि बाणाः शराः त्यक्तः दूरत उत्सृष्टो नयो नीतिमार्गो याभिस्तासु त्यक्तनयासु यासु मानवतीषु सङ्गात् तत्सङ्गमेव कुण्ठतां निरर्थकतां याताः प्राप्ताः ताः मानिन्यः दैवाद्दुर्दैवाद्भाग्यतादित्यर्थः। पादयोः चरणयोः पुरोऽग्रे उत्तंसरूपमाभूषणरूपः कामिना धारित इत्यर्थः। उत्पलपल्लवः कमलपत्रं तस्मिन् पतितेऽपि प्रणतिसमये कर्णादिस्थानात्पतितेऽपि कामिनां कामपीडितानां पतीनां कण्ठाश्लेषे कण्ठालिङ्गने कठोरो मानधारणे दृढः कौतुकस्य कुतूहलस्य रसः आस्वादो यासु ताः सत्यः तिष्ठन्ति। न केनापि प्रकारेण मानमुत्सृज्य कामिजनप्रियं कुर्वन्तीति भावः। शार्दूलविक्रीडितञ्छन्दः।

### भाषा

कामदेव के द्वारा चन्द्र रूपी सान पर चढ़ा कर तीखे कर छोड़े हुए पांचों ही बाण, नीतिमार्ग से च्युत जिन मानिनियों पर अपना कोई भी असर न कर सके, ऐसी मनिनियाँ, कामियों के मस्तक के आभूषण रूप कमल के पत्तों के उनके पावों के आगे पड़ने पर भी अर्थात् कामियों के प्रणाम करने पर भी दुर्दैव से उनको आलिङ्गन देने में न पिघलने वाले भावों से युक्त होकर बैठी ही रहीं।

नित्यं व्योम्नि गतागतैर्दिनपतेर्लोकस्य येषु ध्रुवं
भानुस्यन्दनविप्रकीर्णतुरगश्रान्तिः परिम्लायति।
निद्राच्छेदमुदाहरन्ति हरयस्ते मन्दुरामन्दिरा
लक्ष्मीमङ्गलदुन्दुभिप्रतिभटैः प्रत्यूषहेषारवैः ॥९१॥

### अन्वयः

येषु व्योम्नि दिनपतेः नित्यं गतागतैः लोकस्य भानुस्यन्दनविप्रकीर्णतुरगभ्रान्तिः ध्रुवं परिम्लायति। ते मन्दुरामन्दिराः हरयः लक्ष्मीमङ्गलदुन्दुभिप्रतिभटैः प्रत्यूषहेषारवैः निद्राच्छेदम् उदाहरन्ति।

### व्याख्या

येषु अश्वेषु विषये व्योम्नि आकाशे दिनपतेः सूर्यस्य नित्यमनवरतं गतानि चागतानि चेति गतागतानि तैः गमनागमनैः लोकस्य जनस्य भानोस्सूर्यस्य स्यन्दनो रथः "याने चक्रिणि युद्धार्थे शताङ्गः स्यन्दनो रथः" इत्यमरः। तस्माद्विप्रकीर्णाः परिभ्रष्टाः तुरगास्तेषां भ्रान्तिः ध्रुवं निश्चयेन परिम्लायति विनश्यति ते मन्दुरा वाजिशाला "वाजिशाला मन्दुरा" इत्यमरः। मन्दिरं निवासस्थानं येषां ते हरयोऽश्वाः लक्ष्मीकारको यो मङ्गलदुन्दुभिः तस्य प्रतिभटास्सदृशास्तैः प्रत्यूषे प्रातःकाले हेषारवाः अश्वशब्दास्तैर्निद्राच्छेदं नृपस्य निद्राभङ्गं उदाहरन्ति कुर्वन्ति सूचयन्तीति भावः। शार्दूलविक्रीडितं छन्दः।

### भाषा

आकाश में सूर्य के नित्य ही आने जाने से जिनके सम्बन्ध में सब लोगों का सूर्य के रथ से छूटकर भागे हुए घोडों का भ्रम निश्चय ही दूर हो गया है, अर्थात ये विशाल घोडे सूर्य के रथ से भागे न होकर राजा विक्रमाङ्कदेव के ही हैं, ऐसा सब का जिनके सम्बन्ध में निश्चय हो चुका है, वे ये अस्तबल में रहने वाले घोडे, लक्ष्मीकारक माङ्गलिक नगाडे के समान प्रातःकाल की हिनहिनाहट के शब्दों से (महाराज विक्रमाङ्कदेव की) निद्रा दूर करते हैं।

**रक्षःसंक्षयहेतुगोत्रजननाद्बन्धं विधाता च यः**
**पाथोधेः श्वशुरत्वमेति यमुनाताप्त्योः प्रसूत्या च यः।**
**जातः सोऽयमशेषविश्ववलभीरत्नप्रदीपाकृतिः**
**सद्यःसंभवडिम्भलोचनसुखग्राह्येण धाम्ना, रविः ॥९२॥**

### अन्वयः

यः रक्षःसंक्षयहेतुगोत्रजननात् (पाथोधेः) बन्धं विधाता च यः यमुनाताप्त्योः प्रसूत्या पाथोधेः श्वशुरत्वं एति, सः अयं रविः सद्यःसम्भवडिम्भलोचनसुखग्राह्येण धाम्ना अशेषविश्ववलभीरत्नप्रदीपाकृतिः जातः।

### व्याख्या

यः रक्षसां रावणादीनां संक्षयो विनाशस्तस्य हेतुः कारणभूतोऽन्वयः गोत्रं वंशस्सूर्यवंश इति प्रसिद्धस्तस्य जननात् उत्पत्तिकरणात् पाथोधेः समुद्रस्य बन्धं

सेतुबन्धं विधाता कर्ता च यः यमुनाताप्योः[1] यमुना तापी च द्वे नद्यौ तयोः प्रसूत्या सन्तत्या पाथोधेस्समुद्रस्य श्वशुरत्वञ्च एति प्राप्नोति, सोऽयं रविः सूर्यः सद्यस्तत्क्षणमेव सम्भवेन उत्पत्त्या डिम्भानां बालकानां "पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः" इत्यमरः। लोचनानां नयनानां सुखेन यथा स्यात्तथा ग्राह्यं दृश्यं तेन यद्वा सद्यः सम्भवेन डिम्भरूपो बालरूप अत एव लोचनैस्सुखं ग्राह्यं दृश्यं तेन धाम्ना तेजसा अशेषस्य सकलस्य विश्वस्य संसारस्य वलभ्यो गृहच्छदिप्रान्तभागाः "गोपानसी तु वलभी छादने वक्रदारुणि" इत्यमरः। तासु रत्नप्रदीपस्याऽऽकृतिरिवाऽऽकृतिर्यस्य स जातः। शार्दूलविक्रीडितं छन्दः।

## भाषा

जो, राक्षसो के नाश के कारणभूत वंश को उत्पन्न करने से अर्थात् सूर्यवंश को उत्पन्न करने से समुद्र को बांधने वाला है अर्थात् सेतुबन्ध की द्वारान्तर से रचना करनेवाला है, जो यमुना और तापी नदियो को उत्पन्न करने से (नदियों का पति समुद्र होने से) समुद्र का ससुर होता है, वह यह सूर्य तुरन्त पैदा भये हुवे बालकों के नेत्रों से सुख से देखने योग्य तेज रखने के कारण अथवा तुरन्त उदित होने से बालरूपता के कारण आँखो से देखने योग्य तेज रखने से सम्पूर्ण जगत् की छतों पर विद्यमान रत्नप्रदीप की शोभा के समान शोभा देने वाला हो गया है।

उत्थाय मन्युवशतश्चलितुं प्रवृत्ताः
कर्णं गते झटिति कुक्कुटकण्ठनादे।
किञ्चित्क्षुतादिनिभमात्रमुदीर्य नार्यः
प्राणेशकेलिशयनेषु पुनः पतन्ति ॥६३॥

### अन्वयः

कुक्कुटकण्ठनादे कर्णं गते (सति) मन्युवशतः झटिति उत्थाय चलितुं प्रवृत्ताः नार्यः किञ्चित्क्षुतादिनिभमात्रम् उदीर्य प्राणेशकेलिशयनेषु पुनः पतन्ति।

---

[1]. तापती छायया जाता सूर्यतनया सैव तापीति, यमुनासंज्ञया, जाता मार्तण्डपुत्रीति पौराणिकी कथाऽत्राऽनुसन्धेया।

## व्याख्या

कुक्कुटानां चरणायुधानां "कृकवाकुस्ताम्रचूडः कुक्कुटश्चरणायुधः" इत्यमरः। कण्ठनादे गलनिस्सृतशब्दे कर्णं गते श्रोत्रं प्राप्ते सति मन्युवशात् क्रोधवशतः "मन्युर्दैन्ये क्रतौ क्रुधि" इत्यमरः। झटिति शीघ्रमुत्थाय शय्यां परित्यज्य चलितुं गन्तुं प्रवृत्ता उद्युक्ता नार्यः कान्ताः किंचित्क्षुतादिनिभमात्रम् किंचिच्छिक्कादिव्याजमात्रमुदीर्योक्त्वा कथयित्वेत्यर्थः। प्राणेशकेलिशयनेषु प्राणेशस्य पत्युः केलिशयनेषु क्रीडाशय्यासु पुनः पतन्ति समागच्छन्ति। वसन्ततिलकाच्छन्दः।

## भाषा

मुर्गें के (प्रातः कालीन) शब्द के सुनाई पड़ने पर, (पति से अलग होना पड़ रहा है) इस क्रोध से, जल्दी से उठकर जाती हुई कामिनियां, कुछ छींक आदि अपशकुन सूचक बात का बहाना करके अर्थात् किसी अपशकुन मात्र का नामोल्लेख करके पति की क्रीडाशय्याओं पर फिर से लेट जाती हैं।

यः श्रीकण्ठललाटलोचनशिखिप्लुष्टस्य चेतोभुवः
श्रीखण्डद्रवपाण्डुरेण महसा धारागृहत्वं गतः।
अस्तक्ष्माधरमस्तके स भगवानालक्ष्यते चन्द्रमाः
क्षौद्रासङ्गपिशङ्गमाहिषदधिच्छायावदातच्छविः ॥६४॥

## अन्वयः

यः श्रीकण्ठललाटलोचनशिखिप्लुष्टस्य चेतोभुवः श्रीखण्डद्रवपाण्डुरेण महसा धारागृहत्वं गतः सः चन्द्रमाः अस्तक्ष्माधरमस्तके क्षौद्रासङ्गपिशङ्गमाहिषदधिच्छायावदातच्छविः आलक्ष्यते।

## व्याख्या

यश्चन्द्रः श्रीकण्ठः शिवस्तस्य ललाटे भाले यल्लोचनं तृतीयनयनं तस्मिन् स्थितो यः शिखी वह्निस्तेन "शिखिनौ वह्निबर्हिणौ" इत्यमरः। प्लुष्टस्य दग्धस्य चेतोभुवः मदनस्य श्रीखण्डस्य श्वेतचन्दनस्य द्रवः रसस्तद्वत्पाण्डुरं शुभ्रं तेन महसा तेजसा धारागृहत्वं जलधारापतनयन्त्रस्वरूपं गतः प्राप्तः स भगवान् चन्द्रमा अस्तक्ष्माधरमस्तकेऽस्ताचलमूर्ध्नि क्षौद्रस्य माक्षिकस्य मधुनः "मधु क्षौद्रं माक्षिकादि" इत्यमरः। आसङ्ग आसक्तिस्सम्बन्धस्तद्-

पिशङ्गं पिङ्गलवर्णं यन्माहिषं दधि तद्वच्छुभ्रं छत्रमातपत्रं तस्यावदाता गौरा "अवदातः सितो गौरोऽवलक्षो धवलोऽर्जुनः" इत्यमरः। छविरिव छविः कान्तिर्यस्य स आलक्ष्यते दृश्यते। ईषत्पिङ्गल-शुक्लवर्णातपत्रमिवास्ताचलनृपस्य मूर्ध्नि चन्द्रः प्रतीयत इति भावः। शार्दूलविक्रीडितं छन्दः।

### भाषा

जो, महादेव के ललाट पर के नेत्र की अग्नि से जले हुए कामदेव के लिये, श्वेतचन्दन के पानी के समान श्वेत चाँदनी से फुवारे का काम करता था, वह चन्द्रमा, अस्ताचल रूपी राजा के मस्तक पर थोड़ा से मिले कुछ पीले भैंस के दही के समान सफेद छत्र की श्वेत कान्ति के समान कान्ति वाला दिखाई देता है। अर्थात् अस्ताचल राजा के मस्तक पर चन्द्रमा कुछ पीले श्वेत छत्र के ऐसा दीख पड़ता है।

**नरपतिभिरलङ्घ्यशासनोऽसौ शिरसि मनोभवशासनं दधानः।**
**वचनमिति निशम्य मागधीनां भुजमुपधानपदाचकर्ष देव्याः ॥९४॥**

### अन्वयः

नरपतिभिः अलङ्घ्यशासनः शिरसि मनोभवशासनं दधानः असौ मागधीनाम् इति वचनं निशम्य देव्याः उपधानपदात् भुजम् आचकर्ष।

### व्याख्या

नरपतिभिः राजभिः अलङ्घ्यम् दुर्निवार्यं शासनमादेशो यस्य सः शिरसि स्वमूर्ध्नि मनोभवस्य कामस्य शासनमाज्ञां दधानो धारयन् कामाभिभूत इत्यर्थः। असौ विक्रमाङ्कदेवः मागधीनां वैतालिकाङ्गनानामिति पूर्वोक्तं वचनं वाक्यं निशम्य श्रुत्वा देव्याः विक्रमाङ्कराजमहिष्याः चन्द्रलेखाया उपधानमुपबर्हस्तस्य "उपधानं तूपबर्हः" इत्यमरः। पदात् स्थानात् भुजं स्वबाहुमुपधानरूपेण देव्याः शिरोऽध स्थितमाचकर्ष समाकृष्टवान्।

### भाषा

राजमण्डल के द्वारा जिसकी आज्ञा का कभी भी उल्लङ्घन नहीं होता था किन्तु स्वयं जो कामदेव की आज्ञा को शिरोधार्य करता था उस राजा विक्रमाङ्कदेव ने इस प्रकार स्तुतिपाठिकाओं के पूर्वोक्त वचन सुनकर चन्द्रल-

देवी की तकिया का काम करनेवाले अर्थात् उसके सिर के नीचे रक्खे हुए अपने हाथ को खींच लिया अर्थात् जागकर उठने की तयारी की।

इति श्री त्रिभुवनमल्लदेव—विद्यापति—काश्मीरकभट्ट श्री बिल्हणविरचिते विक्रमाङ्कदेवचरिते महाकाव्ये एकादश सर्ग ।

नेत्राब्जाभ्रयुगाङ्कविक्रमशरत्कालेऽत्र दामोदरात्
भारद्वाजबुधोत्तमात्समुदित श्री विश्वनाथः सुधीः।
चक्रे रामकुबेरपण्डितवरात्सम्प्राप्तसाहाय्यकः
सर्गे रुद्रमिते रमाकरुणया टीकाद्वयं निर्मलम्॥

ॐ शान्ति शान्ति शान्ति ।

॥ श्री ॥

महाकविश्रीबिल्हणविरचितं

# विक्रमाङ्कदेवचरितम्

## द्वादशः सर्गः

दिनानि तत्र क्षणवद्बहूनि नीत्वा विलासैः कुसुमास्त्रमित्रैः ।
ग्रीष्मप्रवेशे सह पक्ष्मलाक्ष्या देवोऽथ कल्याणसमीपगोऽभूत् ॥१॥

अन्वयः

अथ देवः पक्ष्मलाक्ष्या सह, तत्र कुसुमास्त्रमित्रैः विलासैः बहूनि दिनानि क्षणवत् नीत्वा ग्रीष्मप्रवेशे सति कल्याणसमीपगः अभूत् ।

व्याख्या

अथ जलक्रीडादिविहारानन्तरं देवो विक्रमाङ्कदेवः पक्ष्मले प्रशस्तरोमयुक्ते अक्षिणी नेत्रे "लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी" इत्यमरः । यस्यास्सा पक्ष्मलाक्षी तया चन्दलदेव्या सह तत्र करहाटराजधान्या स्थानेषु कुसुमास्त्रस्य कामस्य मित्राणि समुद्दीपकानि तैः कुसुमास्त्रमित्रैः विलासैः रतिक्रीडादिभिः बहूनि दिनानि दिवसान् क्षणवत् अल्पकालतुल्यानि नीत्वा अतिवाह्य ग्रीष्मप्रवेशे जाते सति कल्याणनाम्नः पुरस्य समीपं गच्छतीति कल्याणसमीपगः अभूत् जातः । अस्मिन् सर्गे "उपजाति" छन्दः । "अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः" इति लक्षणात् । क्वचिदिन्द्रवज्रोपेन्द्रवज्रे च ।

भाषा

जलक्रीडादि विहार के अनन्तर राजा विक्रमाङ्कदेव, करहाटराजधानी के स्थानों में रहकर नवीन बरौनी से युक्त नेत्रोंवाली चन्दलदेवी के साथ बहुत काल तक जो काल एक क्षण के समान अनुभूत हुआ अर्थात् एक क्षण

के समान शीघ्रता से बीत गया, कामसमुद्दीपक रत्यादि विभिन्न क्रीडाओं को कर, ग्रीष्म ऋतु के लगते ही कल्याणपुर के पास आ गया।

अस्मिन्क्षणे कुन्तलपार्थिवस्य प्रवेशमाकर्ण्य पुराङ्गनानाम्।
आसन्विलासव्रतदीक्षितानां स्मरोपदिष्टानि विचेष्टितानि ॥२॥

अन्वयः

अस्मिन् क्षणे कुन्तलपार्थिवस्य प्रवेशम् आकर्ण्य विलासव्रतदीक्षितानां पुराङ्गनानां स्मरोपदिष्टानि विचेष्टितानि आसन्।

व्याख्या

अस्मिन् क्षणे कल्याणपुरप्रवेशावसरे कुन्तलपार्थिवस्य विक्रमाङ्कदेवस्य प्रवेशं कल्याणपुरे प्रवेशं आकर्ण्य श्रुत्वा विलासव्रते रतिसम्बन्धिकार्ये दीक्षितानां तत्पराणां पुराङ्गनानां स्मरेण कामेनोपदिष्टानि शिक्षितानि विचेष्टितानि व्यापारा आसन् बभूवुः। ताः कामासक्ता जाता इति भावः।

भाषा

कल्याणपुर में प्रवेश के समय राजा विक्रमाङ्कदेव का आगमन सुनकर, रति सम्बन्धि कार्यों में प्रवीण, नागरियों के, कामदेव के द्वारा शिक्षित अनेक व्यापार होने लगे। अर्थात् वे कामासक्त हो गईं।

विस्रस्तरत्नाङ्कुरकोटिभिन्नमुदञ्चितं वामपदं दधाना।
बभार कापि व्रतमेकपादमाराधनायेव नरेश्वरस्य ॥३॥

अन्वयः

का अपि उदञ्चितं विस्रस्तरत्नाङ्कुरकोटिभिन्नं वामपदं दधाना नरेश्वरस्य आराधनाय एकपादं व्रतं बभार इव।

व्याख्या

का अपि काचिन्नायिका उदञ्चितं विक्रमाङ्कदेवशोभानिरीक्षणाय तत्र गन्तुं समुत्थापितं विस्रस्ता परिभ्रष्टा पतिता या रत्नाङ्कुरकोटि रत्नजटितालङ्काराग्रभागः तद्भिन्न तद्विद्ध वामपदं दक्षिणेतरपदं दधाना उपरि धारयन्ती, भूमौ

निक्षेपणं न कुर्वाणेत्यर्थः । नरेश्वरस्य विक्रमाङ्कदेवस्य आराधनाय प्रसादनाय एकपादं व्रतं एकपादमुत्थाप्य तपश्चरणव्रतं बभार इव धृतवती इव ।

### भाषा

कोई स्त्री, विक्रमाङ्कदेव की शोभा देखने के लिये वहाँ आने के लिये ऊपर उठाये हुए और ऊपर से गिरे हुए, जडाउ अलङ्कारों के नोक से चुटीले, बायें पैर को ऊपर ही टांगे हुए अर्थात् जमीन पर न रखती हुई, मानो विक्रमाङ्कदेव की प्रसन्नता के लिये एक पैर पर खड़े रहने वाली तपस्या करने लगी ।

कीर्णाश्रु कर्णोत्पलरेणुनैकमन्यत्सहासं नयनं वहन्ती ।
सङ्कीर्णभावाभिनयप्रगल्भा रराज कापि स्मरनर्तकीव ॥४॥

### अन्वयः

का अपि कर्णोत्पलरेणुना कीर्णाश्रु एकं नयनं सहासम् अन्यत् (नयनं) वहन्ती संकीर्णभावाभिनयप्रगल्भा स्मरनर्तकी इव रराज ।

### व्याख्या

काऽपि अङ्गना कर्णयोरुत्पले अलङ्करणार्थं विन्यस्ते कमले तयो रेणुना परागेण कीर्णानि व्याप्तानि अश्रूणि यस्मिंस्तत् कीर्णाश्रु एकं नयनं लोचनं सहासं प्रफुल्लमन्यत् नयनं वहन्ती धारयन्ती सङ्कीर्णानां भावानामश्रुहास्यानुभावव्यञ्जयदुःखहर्षादीनां भावानामभिनये चेष्टया प्रदर्शनेऽभिव्यञ्जने वा प्रगल्भा निपुणा स्मरस्य कामस्य नर्तकी नटी "नर्तकीलासिके समे" इत्यमरः । स्मरनर्तकी इव रराज शुशुभे ।

### भाषा

कोई सङ्कीर्ण भावों को अर्थात् हार्दिक सुख हर्षादि भावों को प्रकट करने में कुशल कामिनी आभूषण रूप में कान पर धारण किये हुए कमल की धूलि के एक आंख में पड जाने से उस आंख को सिकुडाकर उससे आंसू गिराती हुई और दूसरी आंख को फैलाकर ताकती हुई, मानो कामदेव की नर्तकी की शोभा को प्राप्त हो रही थी ।

गवाक्षरन्ध्रैरवलोकयन्ती लक्षीकृता कापि मनोभवेन ।
किमप्यनङ्गस्य नितान्तचण्ड-कोदण्डपाण्डित्यमुदाजहार ॥५॥

### अन्वयः

गवाक्षरन्ध्रैः अवलोकयन्ती मनोभवेन लक्षीकृता का अपि किम् अपि अनङ्गस्य नितान्तचण्डकोदण्डपाण्डित्यम् उदाजहार।

### व्याख्या

गवाक्षाणां गृहोर्ध्वभागभित्तिस्थितानां वातायनानां "वातायनं गवाक्षोऽथ" इत्यमरः। रन्ध्रैः छिद्रैरवलोकयन्ती पश्यन्ती मनोभवेन कामेन लक्षीकृता बाणविषयीकृता का अपि नायिका किमपि अनिर्वचनीयम् अनङ्गस्य कामस्य नितान्तचण्डमतिभयङ्करं कोदण्ड "धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम्" इत्यमरः। तस्य पाण्डित्यं धनुर्विद्यानैपुण्यम् उदाजहार प्रकटितवती। स्वाकारेङ्गिताविभी राजानं कामासक्तं कर्तुमैच्छदिति भावः।

### भाषा

झरोखों के छेदों में देखने वाली, कामदेव के बाणों से घायल भई हुई कोई नायिका, आकार व इङ्गित से कामदेव के अत्यन्त प्रचण्ड धनुर्विद्या की अवर्णनीय निपुणता को प्रकट करने लगी। अर्थात् राजा को कामासक्त बनाने की चेष्टा करने लगी।

वाराङ्गना कुङ्कुमपाटलाङ्गी सलीलमुत्तम्भितबाहुवल्लिः।
रागप्रवाहे गहने निमग्ना काचित्करालम्बमयाचतेव ॥६॥

### अन्वयः

कुङ्कुमपाटलाङ्गी सलीलम् उत्तम्भितबाहुवल्लिः काचित् वराङ्गना गहने रागप्रवाहे निमग्ना (सती) करालम्बम् अयाचत इव।

### व्याख्या

कुङ्कुमेन केसरेण पाटलानि अरुणानि "श्वेतरक्तस्तुपाटल." इत्यमरः। अङ्गानि यस्यास्सा कुङ्कुमपाटलाङ्गी लीलया सहितं सलीलं सविलासम् उत्तम्भिता ऊर्ध्वीकृता बाहुवल्लिः भुजलता "वल्ली तु व्रततिर्लता" इत्यमरः। यया सा उत्तम्भितबाहुवल्लिः काचित् वराङ्गना श्रेष्ठनायिका गहने गभीरे रागप्रवाहे प्रेमसमुद्रप्रवाहे निमग्ना पतिता (सती) करयोर्हस्तयोरालम्बम् उपरि निस्सारणार्थं करसाहाय्यम् अयाचत इव इयेष इव। अत्रोत्प्रेक्षालङ्कारः।

भाषा :

- केसर लगाने से लाल शरीर वाली, और विलास से ऊपर की ओर अपनी बाहुलता को उठानेवाली कोई नायिका, मानो गहरे, प्रेमरूपी समुद्र के प्रवाह में डूबती हुई, खींचकर ऊपर निकालने के लिये हाथों का सहारा माग रही हो।

वीराग्रणीरेष नृपः स्थितोऽग्रे शूरोऽसि चेदत्र विधेहि शौर्यम् ।
अपास्पदं स्त्रीषु विकत्थनेति काचिद्गिरा मन्मथमुन्ममाथ ॥७॥

अन्वयः

काचित् एषः वीराग्रणीः नृपः अग्रे स्थितः (त्वम्) शूरः असि चेत् अत्र शौर्यं विधेहि। स्त्रीषु विकत्थना अपास्पदम् इति गिरा मन्मथम् उन्ममाथ।

व्याख्या

काचिद्रमणी, एष वीराणां शूराणामग्रणीर्नायकः नृपो विक्रमाङ्कदेवोऽग्रे पुरतः स्थितः। (त्वम्) शूरो वीरोऽसि भवसि चेद् यदि तर्हि अत्र राजनि विक्रमाङ्कदेवे शौर्यं वीरतां विधेहि प्रदर्शय। स्त्रीषु कान्तासु विकत्थना शौर्यप्रदर्शनं अपास्पदं लज्जाकारि 'मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जा साऽपत्रपाऽन्यतः" इत्यमरः। इति गिरा वाचा मन्मथं कामं "मदनो मन्मथो मारः प्रद्युम्नो मीनकेतनः। कन्दर्पो दर्पकोऽनङ्गः कामः पञ्चशरः स्मरः" इत्यमरः। उन्ममाथ भर्त्सितवती।

भाषा

कोई सुन्दरी, यह बहादुरों का सरदार राजा विक्रमाङ्कदेव तुम्हारे सामने हैं, तुम यदि बहादुर हो तो इस राजा विक्रमाङ्कदेव पर अपनी बहादुरी दिखाओ, स्त्रियों पर वीरता दिखलाना तो लज्जाकारक है, इस प्रकार की बातों से कामदेव को फटकारने लगी।

नरेन्द्रलीलातपवारणस्य नेत्राञ्चलोत्थेन समीरणेन ।
निवार्यमाणश्रमवारिलेशा कृतार्थमात्मानममन्यतान्या ॥८॥

### अन्वयः

अन्या नरेन्द्रलीलातपवारणस्य नेत्राञ्चलोत्थेन समीरणेन निवार्यमाणश्रमवारिलेशा (सती) आत्मानं कृतार्थम् अमन्यत ।

### व्याख्या

अन्या काचिदङ्गना नरेन्द्रस्य विक्रमाङ्कदेवस्य यल्लीलायाः विलासस्य सम्बन्धि यदातपवारणं छत्रं "हैमं छत्रं त्वातपत्रं राज्ञस्तु नृपलक्ष्म तत्" इत्यमरः । तस्य नेत्राञ्चलानि वस्त्रप्रान्तभागाः "स्याज्जटांशुकयोर्नेत्र" इत्यमरः । तथा "नेत्रं मथिगुणे वस्त्रभेदे मूले द्रुमस्य च । रथे चक्षुषि नद्यां तु नेत्री नेतरि वाच्यवत्" इति मेदिनी । तेभ्य उत्थ उद्गतस्तेन समीरणेन वायुना "समीरमारुतमरुज्जगत्प्राणसमीरणाः" इत्यमरः । निवार्यमाणाः दूरीक्रियमाणाः श्रमः नृपकान्तिसन्दर्शने ससंभ्रमगमनप्रयासजन्या परिश्रान्तिस्तस्मात्तेन वा समुत्पन्नाः वारिलेशाः स्वेदजलबिन्दवो यस्यास्सा निवार्यमाणश्रमवारिलेशा सती आत्मानं स्वं कृतार्थं कृतकृत्यं अमन्यत मेने ज्ञातवती । गवाक्षे गजारूढस्य नृपस्य राजच्छत्रवस्त्रवीजितत्वात्स्वस्य धन्यत्वमिति भावः ।

### भाषा

दूसरी कोई नारी, राजा विक्रमाङ्कदेव के सुन्दर छत्र की झालर से उत्पन्न वायु से, दौड़ कर राजा की शोभा देखने के लिये जाने से भए हुए परिश्रम से उत्पन्न अपने पसीने के कणों को दूर करती हुई अपने को कृतार्थ समझने लगी। अर्थात् राजा के हाथी पर बैठे रहने से उनके छत्र के झालर की हवा झरोखे में से आकर लगती थी ।

स्तम्बेरमारूढमगूढभावा निरीक्ष्य कापि क्षितिपं मृगाक्षी ।
मन्ये समानप्रतिपत्तिहेतोः कन्दर्पमत्तद्विपमारुरोह ॥९॥

### अन्वयः

का अपि मृगाक्षी क्षितिपं स्तम्बेरमारूढं निरीक्ष्य अगूढभावा ( सती ) समानप्रतिपत्तिहेतोः कन्दर्पमत्तद्विपम् आरुरोह ( इत्यहम् ) मन्ये ।

### व्याख्या

कापि मृगाक्षी हरिणनयना क्षितिपं नृपं विक्रमाङ्कदेवं स्तम्बेरमारूढं गजस-

निविष्टं "मतङ्गजो गजो नागः कुञ्जरो वारणः करी । इभः स्तम्बेरमः पद्मी" इत्यमरः । निरीक्ष्य दृष्ट्वा अगूढा. प्रकटीभूताः भावाः कामविलासचेष्टाः यस्यास्सा अगूढभावा सती स्वाशयं व्यञ्जयन्ती समानप्रतिपत्ति- समानसम्भावना नृपसदृशगौरवादिस्तस्या. हेतोः कारणात् समानप्रतिपत्तिहेतोः विक्रमाङ्कदेवप्रति-ष्ठासादृश्यप्राप्त्यर्थम् कन्दर्पः काम एव मत्तद्विपो मदान्धो गजः "दन्ती दन्तावलो हस्ती द्विरदोऽनेकपो द्विप." इत्यमर. । तमारुरोह समारूढवती इत्यहं मन्ये । नृपलावण्यदर्शनात्कापि नायिका अतिकामान्धा बभूवेत्यर्थः । लोके महापुरु-षस्याऽऽदरप्रदर्शनार्थं तदनुरूपवेषभूषादिक सन्धार्यमाणः कामपि शोभामावहति । अत्र काव्यलिङ्गोत्प्रेक्षयोः सङ्करः ।

### भाषा

कोई हरिण के नेत्रो के समान नेत्र वाली, राजा विक्रमाङ्कदेव को हाथी पर बैठा हुआ देख कर, अन्त करण के अभिप्राय को न छिपा सकनेवाली विक्रमाङ्कदेव की प्रतिष्ठा की समानता करने के हेतु कामदेवरूपी मदोन्मत्त हाथी पर सवार हो गई, ऐसा मैं समझता हूँ । अर्थात् पूर्णतया कामासक्त हो गई ।

निरादरं वीक्ष्य नृपं मृगाक्ष्या लीलानमत्कन्धरया कयापि ।
हृदि स्थितः कार्मुककर्पणार्थमयाच्यतेव प्रसभं मनोभूः ॥१०॥

### अन्वयः

लीलानमत्कन्धरया कया अपि मृगाक्ष्या नृपं निरादरं वीक्ष्य हृदि स्थितः मनोभूः कार्मुककर्पणार्थं प्रसभम् अयाच्यत इव ।

### व्याख्या

लीलया विलासेन नमन्ती नम्रीभवन्ती कन्धरा ग्रीवा "कण्ठो गलोऽथ ग्रीवायां शिरोधिः कन्धरेत्यपि" इत्यमरः । यस्यास्सा तया लीलानमत्कन्धरया कामवशा-त्स्वाङ्गासक्तकन्धरया कयाऽपि मृगाक्ष्या हरिणनयनया नृप विक्रमाङ्कदेवं निरादर स्वां प्रति समादररहित वीक्ष्य दृष्ट्वा हृदि स्वान्ते स्थितो वर्तमानो मनोभूः कामः कार्मुकस्य धनुष "धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम्" इत्यमर । कर्ष-णार्थं नृपोपरि प्रहाराय कोटाद्बहिर्निस्सारणार्थं प्रसभं हठात् "प्रसभं तु बला-त्कारो हठोऽथ स्खलितं छलम्" इत्यमरः । अयाच्यत इव प्रार्थितोऽभवदिव ।

भाषा

कामविलास से जिसके कन्धे नीचे की ओर झुक गये थे ऐसी मृगनयनी ने राजा को अपने प्रति अनादर युक्त देखकर मानो अपने हृदय में विद्यमान कामदेव को धनुष तानने के लिये अधिक प्रार्थना की। अर्थात् राजा बहुत धीर है तो क्या कामदेव इसको अपना धनुष चलाकर मेरे वश में ला सकता है।

वाचालकाञ्चीमणिकिङ्किणीकमुच्चैः क्वणत्कङ्कणमुच्चलन्ती ।
आलोकिता कापि नरेश्वरेण वैदग्ध्यगर्वोद्धुरकन्धराभूत् ॥११॥

अन्वयः

वाचालकाञ्चीमणिकिङ्किणीकम् उच्चैः क्वणत्कङ्कणम् उच्चलन्ती नरेश्वरेण आलोकिता का अपि वैदग्ध्यगर्वोद्धुरकन्धरा अभूत्।

व्याख्या

वाचाला मुखरीभूता काञ्च्या रशनाया "स्त्रीकट्यां मेखला काञ्ची सप्तकी रशना तथा" इत्यमरः। मणिकिङ्किण्यः मणिनिर्मितक्षुद्रघण्टिका "हंसकः पादकटकः किङ्किणी क्षुद्रघण्टिका" इत्यमरः। यस्मिन्कर्मणि तत् वाचालकाञ्चीमणिकिङ्किणीकं यथा स्यात्तथा उच्चैस्तारस्वरेण क्वणन्ति स्वनन्ति कङ्कणानि यस्मिन्कर्मणि तत् उच्चैः क्वणत्कङ्कणं यथा स्यात्तथा उच्चलन्ती ससंभ्रमं झटित्युत्थाय सचलन्ती नरेश्वरेण विक्रमाङ्कदेवेनाऽऽलोकिता दृष्टा काऽपि नायिका वैदग्ध्यस्य नृपाकर्षणचातुर्यकलाया यो गर्वोऽहङ्कारस्तेनोद्धुरा समुन्नता कन्धरा ग्रीवा यस्यास्सा वैदग्ध्यगर्वोद्धुरकन्धराऽभूत्। अहङ्कृतस्य मस्तकमुच्चैर्धारयतीति दृश्यते।

भाषा

करधनी में मणि के घुघुरुओं से शब्द उत्पन्न करती हुई अर्थात् घुघुरुओं को बजाती हुई और जोर से कगनों से शब्द करती हुई, वेग से चलने वाली किसी स्त्री ने, राजा के द्वारा देखी जाने पर, अपने चातुर्य के गर्व से अपनी गर्दन ऊंची कर ली। अभिमानी सदैव अपनी गर्दन ऊंची कर ही चलता है।

ताडीदलेन श्रवणान्निपत्य श्वासानिलैरुल्लसतातिदूरम् ।
अदत्त वैदग्ध्यविवादहेतोर्वराङ्गनानामिव पत्रमेका ॥१२॥

अन्वयः

एका श्रवणात् निपत्य श्वासानिलैः अतिदूरम् उल्लसता ताडीदलेन वैदग्ध्यविवादहेतोः वराङ्गनानां पत्रम् अदत्त इव ।

व्याख्या

एका काचित् श्रवणात् कर्णप्रदेशात् निपत्य निर्गत्या श्वासानिलैः जनः सम्मर्दप्रवृद्धश्वासवायुभिः अतिदूरम् उल्लसता समुत्पतता ताडीदलेन तालपत्रेण वैदग्ध्यस्य चातुर्यकलाया विवादः, कस्याः पार्श्वे कियदधिकं चातुर्यमस्तीति निर्णयार्थं जायमानो विवादो वाक्प्रतिवादस्तस्य हेतोः वराङ्गनानां श्रेष्ठकामिनीनां कृते पत्रं वादयुद्धाह्वानपत्रम् अदत्त इव ददाविवेत्युत्प्रेक्षालङ्कारः ।

भाषा

किसी स्त्री ने कान पर से गिरे हुए और भीड़ के उच्छ्वासों से बहुत दूर जाकर गिरे हुए ताडपत्र से मानो चतुराई किसमें कितनी है इस सम्बन्ध में विवाद करने के हेतु से अन्य स्त्रियों को (चैलेंज) पत्र भेजा हो ।

गतेषु मन्दत्वमयं रुषा मे बद्धो नितम्बः सुतरां विधाता ।
इतीव काञ्चीवलयं विमुच्य त्वरावती कापि पुरः प्रतस्थे ॥१३॥

अन्वयः

का अपि गतेषु मन्दत्वं विधाता अयं मे सुतरां बद्धः नितम्बः, इति इव रुषा काञ्चीवलयं विमुच्य त्वरावती सती पुरः प्रतस्थे ।

व्याख्या

काऽपि नायिका गतेषु गमनेषु मन्दत्वम् शिथिलतां विधाता कर्ता अयं मे मम सुतरामत्यन्तं बद्ध नितम्ब स्त्रिय कटिपश्चाद्भागः "पश्चान्नितम्बस्त्रीकट्याः क्लीबे [illegible] जघनं पुरः" इत्यमरः । इतीव रुषा कोपेन "कोपक्रोधामर्षरोषप्रतिघारुट्क्रुधौ स्त्रियौ" इत्यमरः । काञ्चीवलयं रशनामण्डलं विमुच्य त्यक्त्वा त्वरावती शीघ्रगामिनी सती पुरोऽग्रे प्रतस्थे चचाल ।

भाषा

मेरी चाल में धीमापन लाने वाला यह मेरा दृढ़ता से बँधा हुआ नितम्ब है अर्थात् यह बँधा होने से ही मेरी गति को रोकता है, मानो इस क्रोध से कोई स्त्री करधनी को उतार कर जल्दी से आगे बढ़ी ।

काचिन्नितम्बार्पितवामहस्ता दोर्लेखया कुञ्चितया नताङ्गी ।
क्षमापतौ मार्गणमोक्षदक्षमकल्पयच्चापमिव स्मरस्य ॥१४॥

अन्वयः

नितम्बार्पितवामहस्ता काचित् नताङ्गी कुञ्चितया दोर्लेखया क्षमापतौ मार्गणमोक्षदक्षं स्मरस्य चापम् इव अकल्पयत् ।

व्याख्या

नितम्बे कटिप्रदेशेऽर्पितो धृतो वामहस्तो यया सा नितम्बार्पितवामहस्ता काचित् नताङ्गी अवनतशरीरा कुञ्चितया वक्रया दोर्लेखया दक्षिणभुजलतया "भुजबाहू प्रवेष्टो दोः" इत्यमरः । क्षमायाः पृथिव्याः "क्षमा तितिक्षा पृथ्वी च योग्ये शक्ते हिते क्षमम्" इति धरणिः । पतिस्स्वामी क्षमापतिस्तस्मिन् क्षमापतौ नृपे विक्रमाङ्कदेवे मार्गणानां शराणां मोक्षे दक्षः मार्गणमोक्षदक्षस्तं स्मरस्य कामस्य चापं धनुरिव अकल्पयत् विरचितवती ।

भाषा

नितम्ब पर बायाँ हाथ रखनेवाली नताङ्गी किसी स्त्री ने दक्षिण भुजा रूपी लता को टेढ़ी कर मानो विक्रमाङ्कदेव पर बाण बरसाने में समर्थ कामदेव के धनुष की रचना की । अर्थात् बायाँ हाथ आधे धनुष की लकड़ी का और पञ्जे पर से मुड़ा हुआ दक्षिण हाथ आधी धनुष की लकड़ी का काम करता था । नाच में ऐसे ढङ्ग से खड़े होने से स्त्रियों में आकर्षता बढ़ जाती है ।

औत्सुक्यतः कापि जवाद्व्रजन्ती लीलामरालैरनुगम्यमाना ।
अन्यायभीत्येव नृपं विलोक्य विलासिनी हंसगतिं मुमोच ॥१५॥

अन्वयः

औत्सुक्यतः जवात् व्रजन्ती का अपि विलासिनी लीलामरालैः अनुगम्यमाना नृपं विलोक्य अन्यायभीत्या हंसगतिं मुमोच इव ।

व्याख्या

औत्सुक्यतः नृपदर्शनोत्कण्ठावशात् जवात् वेगात् 'तरस्वी त्वरितो वेगी प्रजवी जवनो जवः' इत्यमरः । चौरस्त्रीवत् व्रजन्ती धावन्ती कापि विलासिनी गतिविलासवती लीलामरालैः विलासगमनकारिहंसैः अपहृतवस्तुस्वामिवत् अनुगम्य-

माना, वस्तुतस्तु परिचयादेव हंसैरनुगम्यमाना, नृपं विलोक्य अन्यायभीत्या इव चौर्यकर्मभयात् हंसगतिं मुमोच इव तत्याज इव । अत्रोत्प््रेक्षालङ्कारः ।

### भाषा

राजा विक्रमाङ्कदेव को देखने की उत्कण्ठा से वेग से चलने वाली किसी स्त्री ने, जिसके पीछे पालतू हंस चले आ रहे थे, राजा को देख मानो हंस की गति को चुराने के अन्याय के भय से हंसगति को छोड़ दिया। अर्थात् हंस के समान गमन करने वाली स्त्री ने हंसगति को चुराकर भागने वाले के समान अपने पीछे अपनी गति को उससे पुनः छीन लेने के उद्देश्य से पीछा करने वाले हंसों के पीछे २ आते रहने पर राजा को देख कर अन्याय करने के भय से मानो हंसगति को छोड़ दिया हो।

**पार्श्वस्थितामालपति क्षितीन्दौ देवीमनङ्गोत्सववैजयन्तीम् ।**
**व्यावर्तितः कोपनया कयापि सस्पर्धमर्धप्रहितः कटाक्षः ॥१६॥**

### अन्वयः

अनङ्गोत्सववैजयन्तीं पार्श्वस्थितां देवीम् आलपति क्षितीन्दौ कोपनया कया अपि सस्पर्धम् अर्धप्रहितः कटाक्षः व्यावर्तितः ।

### व्याख्या

अनङ्गस्य कामस्य उत्सव आनन्दोत्सवस्तस्य वैजयन्ती पताका 'पताका वैजयन्ती स्यात्केतनं ध्वजमस्त्रियाम्' इत्यमरः । ताम् पार्श्वे समीपे स्थिता तां देवीं चन्द्रलेखाम् आलपति भाषमाणे क्षितीन्दौ नृपे कोपनया ईर्ष्यया कोपयुक्तया कयाऽपि भामिन्या सस्पर्धं स्पर्धासहितं यथा स्यात्तथा अर्धप्रहितः कटाक्षः नृपोपरि प्रेषितः कटाक्षार्धभागः व्यावर्तितः पुनरावर्तितः ।

### भाषा

कामोत्सव की पताका रूपिणी, पास में बैठी हुई चन्द्रलेखा से बातें करने वाले विक्रमाङ्कदेव पर, चन्द्रलेखा के सौभाग्य की ईर्ष्या से क्रुद्ध होकर अधखुली आंखों से नजर डालकर फिर उसे हटा लिया। अर्थात् चन्द्रलेखा से यह घनिष्ठ प्रेम रखता है अब इसको क्या देखना।

**नृपान्तिकप्राप्तिकृतोपकारे मार्गेऽवकीर्णैः पदयावकाङ्कैः ।**
**प्रविश्य कापि मृगायताक्षी पूजामिवाम्भोजदलैश्चकार ॥१७॥**

अन्वयः

मृगायताक्षी का अपि नृपान्तिकप्राप्तिकृतोपकारे मार्गे अवकीर्णैः पद्यावकाङ्कैः प्रतिक्षणम् अम्भोजदलैः पूजा चकार इव ।

व्याख्या

मृगस्यायते विशाले अक्षिणी नयने इवाक्षिणी यस्यास्सा मृगायताक्षी कापि अङ्गना नृपस्य विक्रमस्यान्तिकप्राप्तौ कृत उपकारो येन स तस्मिन्मार्गे अवकीर्णे इतस्ततो विक्षिप्तैः पद्यावकाङ्कैः चरणालक्तकरसचिह्नैः "कलङ्काङ्कौ लाञ्छनं च चिह्नं लक्ष्म च लक्षणम् इत्यमरः ।" प्रतिक्षणं क्षणे क्षणे अम्भोजदलैः कमलपत्रैः पूजा पूजनं चकार इव । अत्र पद्यावकाङ्केषु कमलपत्रत्वोत्प्रेक्षणा दुत्प्रेक्षालङ्कारः ।

भाषा

। हरिण के समान बड़ी २ आँखों वाली किसी स्त्री ने, राजा के समीप पहुँचा देने का उपकार करने वाले रास्ते पर उभरे हुए अपने पाव के अलते के दागों से मानो उस मार्ग का कमल के पत्तों से क्षण २ में पूजन किया हो । अर्थात् लाल रंग के दाग मानों लाल कमल के पत्ते ही थे ।

लीलावलत्कण्ठमकुण्ठभावा निरीक्षिता कापि नरेश्वरेण ।
मुमोह पुष्पायुधभिल्लभल्ल—भिन्ना कुरङ्गीव कुरङ्गकाक्षी ॥१८॥

अन्वयः

अकुण्ठभावा का अपि कुरङ्गकाक्षी नरेश्वरेण लीलावलत्कण्ठं (यथा स्यात्तथा) निरीक्षिता पुष्पायुधभिल्लभल्लभिन्ना कुरङ्गी इव मुमोह ।

व्याख्या

अकुण्ठः अप्रतिहतो भावः कामाभिलाषो यस्यास्सा अकुण्ठभावा कापि कुरङ्गकाक्षी मृगनयना 'मृगे कुरङ्गवातायुहरिणाजिनयोनयः' इत्यमरः । नरेश्वरेण विक्रमाङ्कदेवेन लीलया विलासेन 'स्त्रीणां विलासविब्वोकविभ्रमाललितं तथा । हेलालीलेत्यमी भावाः' इत्यमरः । वलन् वक्रीभवन् कण्ठो यस्मिन्कर्मणि तद्यथा स्यात्तथा निरीक्षिता दृष्टा सती पुष्पायुधः कामः एव भिल्लो वनेचरस्तस्य भल्ला विषदिग्धमुखा 'बाणास्तैर्भिन्ना विद्धा कुरङ्गी मृगी इव मुमोह मुग्धा बभूव मूर्च्छां प्राप । रूपकोपमयोः संसृष्टिरलङ्कारः ।

भाषा

कामाभिलाष से युक्त कोई मृगनयनी, राजा विक्रमाङ्कदेव के द्वारा लीला से गर्दन घुमाकर देखी जाने पर कामदेवरूपी भिल्ल के जहर मे बुझे बाणों से आहत मृगी के समान बेहोश हो गई।

सविभ्रमभ्रूलतिकानुवेलमुद्वेललावण्यरसोत्तरङ्गा।
अनङ्गमारूढमपाङ्गरङ्गे वराङ्गना नर्तयति स्म काचित् ॥१९॥

अन्वयः

सविभ्रमभ्रूलतिका उद्वेललावण्यरसोत्तरङ्गा काचित् वराङ्गना अपाङ्गरङ्गे आरूढम् अनङ्गम् अनुवेलं नर्तयति स्म।

व्याख्या

विभ्रमेण विलासेन 'स्त्रीणां विलासविब्बोकविभ्रमा ललितं तथा' इत्यमरः। सहिता भ्रूलतिका भ्रूलता यस्याः सा सविभ्रमभ्रूलतिका उद्वेलो निर्मर्यादो यो लावण्यरसस्तेनोत्तरङ्गा उद्गततरङ्गा चञ्चला काचिद्वराङ्गना नायिका अपाङ्ग-मेव नेत्रप्रान्तमेव रङ्गो नाट्यभूमिस्तस्मिन् 'अपाङ्गौ नेत्रयोरन्तौ' 'कटाक्षोऽपाङ्ग-दर्शने' इत्यमरः। आरूढं सन्निविष्टम् अनङ्गं काममनुवेलं मुहुर्नर्तयति स्म नर्तनं कारयति स्म। सा ऽभिलाषं दर्शयतीति भाव। अत्र पर्यायोक्तालङ्कारः।

भाषा

विलास से भरी भौंहो वाली, निर्मर्याद सौन्दर्य रस की लहर से चञ्चल कोई नायिका, नेत्रों के प्रान्त भागों में विद्यमान कामदेव को क्षण क्षण में नचाती थी। अर्थात् कामासक्त अतएव चढ़ी भौंहों वाली, अत्यधिक सौन्दर्य रस से चञ्चल कोई कामिनी, तिरछी नजरों के बाणों को बरसाकर दर्शकों को कामाभिभूत करती थी।

जृम्भासमास्फोटकराङ्गुलीकमसर्वदोर्वेणिकया कयाचित्।
निरीक्ष्य राजानमजातरागमतर्ज्यतेवातिरुषा मनोभूः ॥२०॥

असर्वदोर्वेणिकया कयाचित् अजातरागं राजानं जृम्भासमास्फोट-कराङ्गुलीकं निरीक्ष्य अतिरुषा मनोभूः अतर्ज्यत इव।

अन्वयः

अलर्वदोर्वेणिकया अलवें लम्बे दोर्वेण्यौ बाहुलते वेणी च यस्यास्तया विशाल-भुजवेणीयुतया कयाचित् कामिन्या न जात उत्पन्नो रागः प्रेम यस्य स तम् अजातरागं राजानं विक्रमाङ्कदेवं जृम्भया समास्फोटो यासु तादृश्यः कराङ्गुल्यो यस्मिन्कर्मणि तथया स्यात्तथा निरीक्ष्य दृष्ट्वा अतितरां कोपेन मनोभूः कामो-ऽतर्ज्यत इव भर्त्सित इव ।

भाषा

लम्बे हाथों व चोटी वाली किसी स्त्री ने अपने प्रति प्रेम न उत्पन्न भये हुए राजा विक्रमाङ्कदेव को जम्हाई लेकर हाथ की अगुलियों को बजाते हुए देख कर मानो अत्यधिक क्रोध से कामदेव की भर्त्सना की । अर्थात् कामदेव ने उसके स्वरूप पर विक्रमाङ्कदेव को आकर्षित नहीं कराया इसलिये मानो क्रुद्ध होकर कामदेव को फटकारने लगी ।

**शोणाश्मवातायनसीम्नि कापि स्थिता शरच्चन्द्रमरीचिगौरी ।**
**आत्मानमिद्धार्चिषि कामवह्नौ क्षीराहुतीभूतमिवाचचक्षे ॥२१॥**

अन्वयः

शोणाश्मवातायनसीम्नि स्थिता शरच्चन्द्रमरीचिगौरी का अपि इद्धार्चिषि कामवह्नौ आत्मानं क्षीराहुतीभूतम् इव आचचक्षे ।

व्याख्या

शोणाश्मनां रक्तपाषाणानां "पाषाणप्रस्तरग्रावोपलाश्मानः शिला दृषत्" इत्यमरः । "वातायनं गवाक्षोऽथ" । इत्यमरः । वातायनं गवाक्षस्तस्य सीम्नि प्रान्ते स्थिता आसीना शरच्चन्द्रमरीचिवद् शरत्कालचन्द्रिकासमाना गौरी शुक्लवर्णा का अप्यङ्गना कामिनीद्धं प्रदीप्तमर्चिर्ज्वाला "वह्नेर्द्वयोर्ज्वालकीलावर्चिर्हेतिः शिखास्त्रियाम्" इत्यमरः । यस्य स तस्मिन्कामवह्नौ मदनाग्नौ आत्मानं स्वशरीरं क्षीरस्य दुग्धस्याऽऽहुतीभूतमिव आचचक्षे कथयामास । अत्र रक्तस्य पाषाणस्योपरि वह्नित्वसम्भावनं शरीरे च दुग्धाहुतीसम्भावना । उत्प्रेक्षा-लङ्कारः ।

भाषा

लाल रंग के पत्थर के झरोखे के बगल में बैठी हुई, शारदीय चन्द्रमा के किरणों के समान गौरवर्ण, कोई कामिनी, प्रदीप्त ज्वाला से युक्त कामाग्नि में मानो अपने शरीर को दूध की आहुति स्वरूप प्रकट कर रही है। अर्थात् लालरंग के पत्थर मानो आग है उससे सटा हुआ उसका गौरवर्ण का शरीर मानो दूध की आहुति है।

**अभ्यागते कुन्तलभूमिपाले विधातुमातिथ्यमिवोत्थितेन ।**
**काचिन्नियुक्ता मकरध्वजेन दीर्घां कटाक्षस्रजमाततान ॥२२॥**

अन्वयः

अभ्यागते कुन्तलभूमिपाले आतिथ्यं विधातुम् उत्थितेन इव मकरध्वजेन नियुक्ता काचित् दीर्घां कटाक्षस्रजम् आततान।

व्याख्या

अभ्यागते प्राघुणिक इव समागते कुन्तलदेशभूमिपाले विक्रमाङ्कदेवे आतिथ्यम् अतिथिसत्कारम् "क्रमादातिथ्यातिथेये अतिथ्यर्थेऽत्र साधुनि" इत्यमरः। विधातुम् उत्थितेन इव उद्यतेन इव मकरध्वजेन कामेन नियुक्ता प्रेरिता काचिदङ्गना दीर्घां वितता कटाक्षस्रजं कटाक्षमालां कटाक्षश्रेणिमित्यर्थः। आततान विस्तारितवती।

भाषा

अतिथिरूप से आए हुए कुन्तल देश के राजा विक्रमाङ्कदेव का मानो अतिथिसत्कार करने के लिये उद्यत कामदेव द्वारा नियुक्त कोई कामिनी, अपने कटाक्षों की लम्बी माला फैलाने लगी। अर्थात् कोई स्त्री कामाभिभूत होकर विक्रमाङ्कदेव को कटाक्षों से देखने लगी।

**प्रयासि हारत्रुटिमप्युपेत्य भ्रष्टोत्तरीयापि न तिष्ठसि त्वम् ।**
**ध्रुवं प्रधावस्यवधीरणेन परिच्युतस्याधरवाससोऽपि ॥२३॥**

अन्वयः

हारत्रुटिम् अपि उपेत्य प्रयासि भ्रष्टोत्तरीया अपि त्वं न तिष्ठसि। परिच्युतस्य अधरवाससः अपि अवधीरणेन ध्रुवं प्रधावसि।

### व्याख्या

मध्येमार्गं झटिति गमनात् हारस्य मुक्तामालायाः त्रुटिः भङ्गस्तामपि उपेक्ष्याऽवधीर्य प्रयासि गच्छसि भ्रष्टं पतितमुत्तरीयमुपरिवस्त्रं "द्वौ प्रावारोत्तरासङ्गौ समौ बृहतिका तथा। संव्यानमुत्तरीयं च" इत्यमरः। यस्यास्सा भ्रष्टोत्तरीया अपि त्वं न तिष्ठसि नैकत्र स्थितिं विदधासि। परिच्युतस्य गलितस्याऽधरवाससोऽपि अधरवस्त्रस्याप्यवधीरणेन परित्यागेन ध्रुवं निश्चयेन प्रधावसि द्रुतं यासि। काऽपि राजानं वीक्ष्य स्वदेहभानं विस्मृतवतीतिभावः।

### भाषा

( रास्ते में भीड़ में जल्दी २ जाने से ) मोती की माला के टूट पड़ने की कुछ भी परवाह न कर तू आगे बढ़ती जाती है। तेरी ओढ़नी खिसक कर गिर गई है तो भी तू रुकती नहीं है। खुली हुई धोती की भी परवाह न कर तू निश्चय ही दौड़ती जाती है। अर्थात् राजा को देखकर उसको तन मन की सुध भूल गई है।

**न दूषणं भूषणवर्जिता यज्जवेन राजाभिमुखी गतासि।**
**चित्रं तु तुङ्गस्तनभारगर्वाद् गृहीतमप्युज्झसि कञ्चुकं तत् ॥२४॥**

### अन्वयः

यत् भूषणवर्जिता राजाभिमुखी जवेन गता असि ( तत् ) दूषणं न। तुङ्गस्तनभारगर्वात् गृहीतम् अपि कञ्चुकम् उज्झसि तत् तु चित्रम्।

### व्याख्या

यत् भूषणैरलङ्कारैर्वर्जिता रहिता भूषणवर्जिता राज्ञोऽभिमुखी राजाभिमुखी जवेन वेगेन गता असि। तदिदं दूषणं न। तुङ्गयोरुन्नतयोः "उच्चप्रांशून्नतोदग्रोच्छ्रितास्तुङ्गेऽथ वामने" इत्यमरः। स्तनयोः कुचयोः भारस्य गर्वाद्दर्पात् गृहीतं धारितमपि कञ्चुकमुपरिपरिधानीयं वस्त्रं चोलकं "कञ्चुको धारवाणेस्यान्निर्मोके कवचेऽपि च। वर्धापकगृहीताङ्गस्थितवस्त्रे च चोलके" इति मेदिनी। उज्झसि त्यजसि तत्तु चित्रमाश्चर्यम्। कामासक्तस्तनालकुचयोर्विस्तारेण कष्टप्रदं कञ्चुकमुज्झति स्मेति भावः।

भाषा

जो तू राजा के सामने वेग से बिना भूषणों के पहिले ही चली गई इसमें तो कोई दोष नहीं है। परन्तु अपने विशाल स्तनों के बोझ के गर्व से जो तूने पहनी हुई चोली निकाल डाली यह एक आश्चर्य की बात है अर्थात् कामासक्त होने से स्तनों का विकास होने के कारण चोली अधिक कस जाने से उसने चोली निकाल दी।

**मार्गे समेऽपि स्खलनच्छलेन किमुच्छलत्कण्ठरवं मुखं ते।**
**मुग्धे कुमार्योऽपि कलाभिरत्र जयन्ति कान्तामपि मन्मथस्य ॥२५॥**

अन्वयः

मुग्धे समे मार्गे अपि स्खलनच्छलेन उच्छलत्कण्ठरवं ते मुखं किम्। अत्र कुमार्यः अपि कलाभिः मन्मथस्य कान्तां जयन्ति।

व्याख्या

हे मुग्धे मूढे विवेकशून्ये मुग्धावस्थां प्राप्ते वा समे समस्थले मार्गेऽपि स्खलनस्य पतनस्य छलेन व्याजेन उच्छलत्समुद्गच्छन् कण्ठरवो यस्मात् तत्ते मुखं किम्। अत्र अस्मिन्स्थाने कुमार्यः अपि बाला अपि कलाभिः निपुणताभिर्विलाससम्बन्धिनीभिर्मन्मथस्य कामस्य कान्तां रतिं जयन्ति। अत्रस्याः कुमार्योऽपि विलासक्रीडायां रतिमधरीकुर्वन्ति अर्थात् तव चेष्टामवगच्छन्तीति भावः।

भाषा

हे मुग्धावस्था को प्राप्त अथवा मूर्ख कामिनी, समथल जमीन पर भी गिरने का बहाना कर तेरा मुख गले से निकलने वाले शब्द से युक्त क्यों है? यहाँ की कुमारियाँ भी विलासक्रीडाओं में कामदेव की स्त्री रति से भी बढ़ कर हैं। अर्थात् तेरी बातों को समझती हैं।

**असंशयं नीलसरोरुहाक्षि समारुरोह त्वयि पञ्चबाणः।**
**दुर्वैर्विनिर्यासि पदैर्यदेषा कशाहतेवोत्तरला तुरङ्गी ॥२६॥**

अन्वयः

हे नीलसरोरुहाक्षि ! त्वयि पञ्चबाणः असंशयं समारुरोह यद् एषा (त्वम्) दुर्वैः पदैः कशाहता उत्तरला तुरङ्गी इव विनिर्यासि।

### व्याख्या

हे नीलसरोरुहाक्षि ! हे नीलोत्पलनयने ! त्वयि भवति पञ्चबाणः कामः असंशयं निस्संदेहं समारुरोह आरूढवान् यद्यस्मात्कारणात् एषा त्वं द्रुतैर्जवनैः पदैः कर्मैः कशया अश्वादेस्ताडन्या 'अश्वादेस्ताडनी कशा' इत्यमरः। हता ताडिता उत्तरला चञ्चला तुरङ्गीव घोटिकेव विनिर्यासि गच्छसि।

### भाषा

हे नीले कमल के समान आँख वाली ! तेरे ऊपर कामदेव अब निश्चय सवार हो गया है अर्थात् तू कामासक्त हो गई है। क्योंकि जिस प्रकार घोड़ी चाबुक लगने पर वह चौफाल भागने लगती है वैसी ही तू बड़ी तेज चाल से चल रही है।

**अस्माकमालोकनविघ्नहेतोस्तरङ्गिताङ्गी पुरतः स्थितासि ।**
**किं तुङ्गवातायनसङ्गतानां करोषि मात्सर्यपरा परासाम् ॥२७॥**

### अन्वयः

तरङ्गिताङ्गी (त्वम्) आलोकनविघ्नहेतोः अस्माकं पुरतः स्थिता असि। तुङ्गवातायनसङ्गतानां परासां मात्सर्यपरा किं करोषि।

### व्याख्या

तरङ्गितानि चञ्चलानि अङ्गानि यस्यास्सा तरङ्गिताङ्गी त्वमाऽलोकनेऽस्म- त्कर्मकदर्शने विघ्नहेतोर्विघ्नोत्पादनार्थमस्माकं पुरतः स्थिता असि। तुङ्गानि उन्नतानि वातायनानि गवाक्षाः 'वातायनं गवाक्षोऽथ' इत्यमरः। तेषु सङ्गताः समुपविष्टास्तासां परासामन्यासां नायिकानां मात्सर्ये परा परायणा किं करोषि।

### भाषा

हे चञ्चल शरीर वाली कामिनी ! हम लोगों के राजा को देखने में विघ्न उत्पन्न करने के उद्देश से तू हमलोगों के आगे खड़ी हो गई है। परन्तु मात्सर्य बुद्धि से व्याप्त तू ऊँचे झरोखों में बैठी हुई अन्य नारियों का क्या बिगाड़ सकती है।

**प्रकाशयन्ती कतिचिन्नखाङ्कान् किं चण्डि चण्डत्वमदं बिभर्षि ।**
**कासामिहानङ्गजयास्त्रमित्रैर्न गात्रमुचित्रितमर्धचन्द्रैः ॥२८॥**

अन्वयः

हे चण्डि, कतिचित् नखाङ्कान् प्रकाशयन्ती चण्डत्वमदं किं बिभर्षि । इह कासां गात्रम् अनङ्गजयास्त्रमित्रैः अर्धचन्द्रैः न उच्चित्रितम् ।

व्याख्या

हे चण्डि हे अतिकोपने ! 'क्रोधनोऽमर्षणः कोपी चण्डस्त्वत्यन्तकोपनः' इत्यमरः । कतिचित् कियतो बहून् नखाङ्कान् नखचिह्नानि प्रकाशयन्ती प्रकटयन्ती चण्डत्वमदं क्रोधशीलत्वं किं किमर्थं बिभर्षि धारयसि । इह कासां स्त्रीणां गात्रं शरीरं 'गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः' इत्यमरः । अनङ्गस्य कामस्य जयास्त्राणां विजयकारिशस्त्राणां मित्राणि सहायकानि तैरर्धचन्द्रैरर्धचन्द्राकारैर्नखचिह्नैर्नोच्चित्रितं न चिह्नितम् । अतस्था. सर्वा अपि नार्यः काममदयुक्ता इति भावः ।

भाषा

अरे अत्यन्त क्रोधी स्त्री ! तू अपने कुछ नखक्षतो को दिखाकर अपने क्रोध के अभिमान को क्यो प्रकट कर रही है । यहा पर किन स्त्रियो का शरीर कामदेव के विजयास्त्ररूपी अर्धचन्द्र की आकृति रखने वाले नखक्षतो से चिन्हित नहीं है । अर्थात् यहा की सभी नारियाँ काममद से भरी है ।

वैदग्ध्यगर्वस्तव सर्वदास्ति कथञ्चिदाराधय राजचन्द्रम् ।
नामाङ्कितामर्पय वर्णमालां सुवर्णपत्रे मकरध्वजस्य ॥ २९ ॥

अन्वयः

तव वैदग्ध्यगर्वः सर्वदा अस्ति । कथञ्चित् राजचन्द्रम् आराधय । मकरध्वजस्य नामाङ्कितां वर्णमालां सुवर्णपत्रे अर्पय ।

व्याख्या

तव भवत्या वैदग्ध्यस्य चातुर्यस्य गर्वः दर्पः सर्वदा सर्वस्मिन्काले अस्ति । कथञ्चित् येनापि प्रकारेण गर्वं मुक्त्वा राजा नृपो विक्रमाङ्कदेव एव चन्द्रः सुधांशुस्तं राजचन्द्रम् आराधय तद्विषयिकीं प्रसन्नतामानय । मकरध्वजस्य कामस्य 'पुष्पधन्वा रतिपतिर्मकरध्वज आत्मभूः' इत्यमरः । स्वनाम्नाऽङ्कितां वर्णमालामक्षरपङ्क्तिं सुवर्णपत्रे काञ्चनमयपत्रेऽर्पय विलिख्य तस्मै देहि । स्ववशीभूतं कुरु इति भावः ।

### व्याख्या

एका काचिन्नायिका मुहुर्वारम्वारं श्रोत्रस्य कृते कठोरा वाक् यस्मिन् कर्मणि तद्यथा स्यात्तथा विनिवारयन्तीम् स्वेच्छाचारित्वस्य प्रतिरोधं कुर्वन्तीं श्वश्रूं पृष्ठभागे निरीक्ष्य दृष्ट्वा अनङ्कुशत्वात् स्वच्छन्दचारित्वात् पण्याङ्गनात्वं वेश्यावृत्तिं कृतपुण्यं कृतं पुण्यं यस्मिंस्तत् गण्यताम्बभूव विचारयामास ।

### भाषा

कोई स्त्री, कान में कठोर लगने वाली बातों से बार-बार मना करने वाली अपनी सास को पीछे आती देखकर मनमाना काम कर सकने के कारण वेश्या-वृत्ति को पुण्य से प्राप्त होने वाली वस्तु समझने लगी ।

काचित्पदैरस्खलितैः सखेलं यान्तीषु शुद्धान्तकरेणुकासु ।
राजाङ्गनानामकरोदवज्ञां श्रोणीभरे च स्तनगौरवे च ॥३२॥

### अन्वयः

काचित् अस्खलितैः पदैः सखेलं यान्तीषु शुद्धान्तकरेणुकासु श्रोणी-भरे स्तनगौरवे च राजाङ्गनानाम् अवज्ञाम् अकरोत् ।

### व्याख्या

काचिन्नायिका अस्खलितैः विषमस्वरहितैः पदैः पदन्यासैः सखेलं खेलया क्रीडया 'क्रीडा खेला च कूर्दनम्' इत्यमरः । सहितं सखेलं यथा स्यात्तथा यान्तीषु गच्छन्तीषु शुद्धान्तस्यान्तःपुरस्य 'शुद्धान्तोऽन्तःपुरे गुह्यस्याभेदे च भूपते.' इत्यजय' । करेणुकासु हस्तिनीषु 'करेणुर्गजयोषायां स्त्रियां पुंसि मत-ङ्गजे' इति मेदिनी । श्रोणीभरे नितम्बभारे स्तनयोर्गौरवे स्थूलत्वे च राजा-ङ्गनानां नृपाङ्गनानामवज्ञामवहेलनं 'रीढावमाननावज्ञावहेलनमसूर्क्षणम्' इत्यमर' । अकरोत् । नृपाङ्गनानां नितम्बस्तनभाराभावादेव करेणुका अस्खलितं गच्छन्ती-त्यवज्ञाकारणम् ।

### भाषा

कोई स्त्री अन्तःपुर की हथिनियों को क्रीडापूर्वक, बिना पावों में लड़खड़ाए चलते रहने पर, उन राजा की स्त्रियों के नितम्ब के भार की तथा स्तनों के गौरवता की अवहेलना करने लगी । अर्थात् इन राजा की स्त्रियों में नितम्बों का बोझ और स्तनों का भार ही नहीं है इसीलिये ये हथिनियाँ बिना लड़खड़ाए चल रही हैं ।

### भाषा

तुझे अपने चातुर्य का सदैव बहुत घमड रहता है। तू किसी प्रकार राजाओं में चन्द्र विक्रमाङ्कदेव को तो सुधकर। कामदेव के नाम से चिन्हित अक्षरपंक्ति सोने के पत्र पर लिखकर उसे दे। अर्थात् उसे अपने प्रति कामाभिभूत बना।

**ससंभ्रमभ्रूयुगताण्डवानां विलासकोदण्डपुरस्कृतानि ।**
**सानन्दमित्थं पुरसुन्दरीणां नृपेन्दुना शुश्रुविरे वचांसि ॥३०॥**

### अन्वयः

नृपेन्दुना ससंभ्रमभ्रूयुगताण्डवानां पुरसुन्दरीणां विलासकोदण्डपुरस्कृतानि इत्थं वचांसि सानन्दं शुश्रुविरे।

### व्याख्या

नृप एवेन्दुश्चन्द्रस्तेन नृपेन्दुना विक्रमाङ्कदेवेन संभ्रमेण सहितं ससंभ्रमं 'समौ संवेग संभ्रमौ' इत्यमरः। यथा स्यात्तथा भ्रूयुगस्य ताण्डवं नटनं 'ताण्डवं नटनं नाट्यं लास्यं नृत्यं च नर्तनं' इत्यमरः। यासान्तास्तासाम् पुरस्य नगरस्य सुन्दर्यस्तासां विलासः कामिनीविलास एव कोदण्डं धनुर्यस्य 'धनुश्चापौधन्वशरासनकोदण्डकार्मुकम्' इत्यमरः। स तेन कामेन पुरस्कृतानि सुशोभितानि कामसम्बन्धीनीत्यर्थः। इत्थं पूर्वोक्तप्रकाराणि वचांसि सानन्दं यथा स्यात्तथा शुश्रुविरे आकर्णितानि।

### भाषा

राजाओं में चन्द्र के समान शोभित होने वाले विक्रमाङ्कदेव ने तेजी से अपनी भौंहो को नचाने वाली नगर की स्त्रियों के कामदेव से सम्बन्ध रखने वाली ऐसी बातें आनन्दपूर्वक सुनी।

**श्वश्रूं मुहुः श्रोत्रकठोरवाचं निरीक्ष्य पृष्ठे विनिवारयन्तीम् ।**
**अनङ्कुशत्वात्कृतपुण्यमेका पण्याङ्गनात्वं गणयाम्बभूव ॥३१॥**

### अन्वयः

एका मुहुः श्रोत्रकठोरवाचं विनिवारयन्तीं श्वश्रूं पृष्ठे निरीक्ष्य अनङ्कुशत्वात् पण्याङ्गनात्वं कृतपुण्यं गणयाम्बभूव।

### व्याख्या

एका काचिन्नायिका मुहुर्वारम्वारं श्रोत्रस्य कृते कठोरा वाक् यस्मिन् तद्यथा स्यात्तथा विनिवारयन्तीम् स्वेच्छाचारित्वस्य प्रतिरोधं कुर्वन्ती पृष्ठभागे निरीक्ष्य दृष्ट्वा अनङ्कुशत्वात् स्वच्छन्दचारित्वात् श्वश्रू... वैरयावृत्ति कृतपुण्यं कृत पुण्य यस्मिन्स्तत् गणयाम्बभूव विचारयामास ।

### भाषा

कोई स्त्री, कान में कठोर लगने वाली बातो से बार-बार मना करने ... अपनी सास को पीछे आती देखकर मनमाना काम कर सकने के कारण ... वृति को पुण्य से प्राप्त होने वाली वस्तु समझने लगी ।

**काचित्पदैरस्खलितैः सखेलं यान्तीषु शुद्धान्तकरेणुकासु ।**
**राजाङ्गनानामकरोदवज्ञां श्रोणीभरे च स्तनगौरवे च ॥३२॥**

### अन्वयः

काचित् अस्खलितैः पदैः सखेलं यान्तीषु शुद्धान्तकरेणुकासु श्रोणी-भरे स्तनगौरवे च राजाङ्गनानाम् अवज्ञाम् अकरोत् ।

### व्याख्या

काचिन्नायिका अस्खलितैः विषमत्वरहितैः पदैः पदन्यासैः सखेलं खेलया क्रीडया 'क्रीडा खेला च कूर्दनम्' इत्यमरः । सहितं सखेलं यथा स्यात्तथा यान्तीषु गच्छन्तीषु शुद्धान्तस्यान्तःपुरस्य 'शुद्धान्तोऽन्तःपुरे गुह्यकक्षाभेदे च भूपते' इत्यजयः । करेणुकासु हस्तिनीषु 'करेणुर्गजयोषायां स्त्रियां पुंसि मत-ङ्गजे' इति मेदिनी । श्रोणीभरे नितम्बभारे स्तनयोर्गौरवे स्थूलत्वे च राजा-ङ्गनानां नृपाङ्गनानामवज्ञामवहेलनं 'रीढावमाननावज्ञावहेलनमसूर्क्षणम्' इत्यमरः । अकरोत् । नृपाङ्गनानां नितम्बस्तनभाराभावादेव करेणुका अस्खलितं गच्छन्ती-त्यवज्ञाकारणम् ।

### भाषा

कोई स्त्री अन्तःपुर की हथिनियो को क्रीडापूर्वक, बिना पावो के लडखडाए चलते रहने पर उन राजा की स्त्रियो के नितम्ब के भार की तथा स्तनो के गौरवता की अवहेलना करने लगी । अर्थात इन राजा की स्त्रियां में नितम्बो का बोझ और स्तनो का भार ही नहीं है इसीलिय ये हथिनियाँ बिना लडखडाए चल रही है ।

**दृशां भृशं कामवशीकृतानां कस्याश्चिदालोकनकौतुकिन्याः ।**
**कर्णावतंसे च निजाञ्चले च गतागतं योजनमात्रमासीत् ॥३३॥**

अन्वयः

आलोकनकौतुकिन्याः कस्याश्चित् भृशं कामवशीकृतानां दृशां कर्णावतंसे च निजाञ्चले च गतागतं योजनमात्रम् आसीत् ।

व्याख्या

आलोकने दर्शने कौतुकिन्याः कौतूहलवत्याः कस्याश्चित् नायिकायाः भृशमत्यन्त कामेन वशीकृतानां मदनजितानां दृशां नेत्राणां 'दृक् स्त्रियां दर्शने नेत्रे बुद्धौ च त्रिषु वीक्षके' इति मेदिनी । कर्णावतंसे कर्णभूषणे च निजाञ्चले स्वकीयनेत्रप्रान्ते च गतागतं गमनागमनं योजनमात्रं योगमात्रं 'योजनं परमात्मनि । चतुष्क्रोश्या च योगे च' इति मेदिनी । आसीत् । सा कटाक्षेण राजानमपश्यत्तेन कर्णावतंसदर्शनमपि च दृष्टेः नेत्रप्रान्तगमन संयोगेन जातमिति भावः ।

भाषा

राजा का दर्शन करने में कौतुक रखने वाली किसी स्त्री के कामदेव द्वारा पूर्णतया वशीभूत नेत्रों का कान के आभूषण पर तथा नेत्रों के प्रान्त भाग में आना जाना योग मात्र था । अर्थात् कटाक्ष से राजा को देखती थी और उसी दृष्टि से सयोग मे कर्णावतस भी दीख पड़ता था । और दृष्टि भी नेत्र प्रान्त में पहुँच जाती थी ।

**उल्लङ्घ्य वीथीमथ राजहंसः पुराङ्गनालोकनवागुराणाम् ।**
**विवेश हर्म्याङ्गणकेलिवापी-हंसावतंसां निजराजधानीम् ॥३४॥**

अन्वयः

अथ राजहंसः पुराङ्गनालोकनवागुराणां वीथीम् उल्लङ्घ्य हर्म्याङ्गणकेलिवापीहंसावतंसां निजराजधानीं विवेश ।

व्याख्या

अथेत्यनन्तरं राजा विक्रमाङ्कदेव एव हंस इति राजहंसः पुराङ्गनानामालोकनान्येव वागुरास्तासां 'वागुरा मृगबन्धनी' इत्यमरः । वीथीं मार्गमुल्लङ्घ्याऽति-

कम्य हर्म्याङ्गणे 'हर्म्यादि धनिनां वासः' इत्यमरः। 'अङ्गणं चत्वरा इत्यमरः। केलिवाप्यः क्रीडावाप्यः तासां हंसा एवावतंसा विभूषणानि यस्या तां निजराजधानीं कल्याणपुरं विवेश प्रवेशं कृतवान्। अत्र रूपकालङ्कारः

## भाषा

इसके अनन्तर राजाओं में श्रेष्ठ विक्रमाङ्कदेव, नगर की कामिनिओं के दृष्टि रूपी बाँधने की रस्सी ने रास्ते को पारकर, महल के अगने में के क्रीड़ा तडाग के हंसो से विभूषित अपनी राजधानी में प्रविष्ट हुआ।

प्रसाददानेन दृशाऽऽर्द्रया च स तत्र सन्तोष्य समस्तलोकान्।
अन्वग्रहीदद्भुतयौवनोष्मा ग्रीष्मानुरूपामुपभोगलक्ष्मीम् ॥३५॥

## अन्वयः

तत्र अद्भुतयौवनोष्मा सः आर्द्रया दृशा प्रसाददानेन च समस्त-लोकान् सन्तोष्य ग्रीष्मानुरूपाम् उपभोगलक्ष्मीम् अन्वग्रहीत्।

## व्याख्या

तत्र पुरे अद्भुत विचित्र यौवनमेव ऊष्मा उष्णत्व ,यस्मिन् स यौवनोष्मा विक्रमाङ्कदेव. आर्द्रया स्नेहार्द्रया दृशा नेत्रेण प्रसादस्यानुग्रहस्य 'प्रसादोऽनुग्रहे काव्यप्राणस्वास्थ्यप्रसत्तिषु' इति मेदिनी। दानेन समर्पणेन समस्तलोकान् सकलजनान् सन्तोष्य सानन्दान् विधाय ग्रीष्मस्य निदाघकालस्य 'ग्रीष्म ऊष्मक. निदाघ उष्णोपगम.' इत्यमरः। अनुरूपां योग्यामुपभोगलक्ष्मीं सुखोपभोग-सामग्रीमन्वग्रहीत् गृहीतवान्।

## भाषा

उस नगर में विलक्षण यौवनरूपी गर्मी रखनेवाले उस विक्रमाङ्कदेव ने स्नेहभरी आंखो से अपनी प्रसन्नता दिखा सब को सन्तुष्ट कर ग्रीष्म ऋतु के अनुरूप सब उपभोग की सामग्री का स्वीकार किया।

लावण्यलीलातरुकुड्मलाभ-मुक्ताविभूषः शुशुभे नरेन्द्रः।
त्रैलोक्यनेत्रामृतनिर्झरस्य सशीकरासार इव प्रवाहः ॥३६॥

## अन्वयः

लावण्यलीलातरुकुड्मलाभमुक्ताविभूषः नरेन्द्रः त्रैलोक्यनेत्रामृत-निर्झरस्य सशीकरासारः प्रवाहः इव शुशुभे।

### व्याख्या

लावण्यं शरीरसौन्दर्यमेव लीलातरुः लावण्यस्य लीलातरुर्वा विलासवृक्षस्तस्य कुड्मलानि मुकुलानि 'कुड्मलोमुकुलोऽस्त्रियाम्' इत्यमरः। तेषामाभा कान्तिरिवाऽऽभा कान्तिर्यासान्ता मुक्ता एव विभूषा भूषणानि अलङ्कारा यस्य स लावण्यलीलातरुकुड्मलाभमुक्ताविभूषः नरेन्द्रो विक्रमाङ्कदेवः त्रैलोक्यस्य त्रिभुवनस्य नेत्रेभ्यो नयनेभ्य अमृतनिर्झरोऽमृतप्रवाहस्तस्य त्रैलोक्यनेत्रामृतनिर्झरस्य शीकराणां जलबिन्दूनां 'शीकरोम्बुकणाः स्मृताः' इत्यमरः। आसारो धारासम्पातस्तेन 'धारासम्पात आसारः' इत्यमरः। सहितः सशीकरासारः प्रवाह इव धारा इव शुशुभे विदिद्युते।

### भाषा

सौन्दर्य रूपी क्रीडावृक्ष की कलियों की शोभा के समान शोभा रखने वाले, मोतियों से आभूषित राजा विक्रमाङ्कदेव, तीनों लोकों के नेत्रों के लिये अमृत के झरने के जलकणों से युक्त सतत बरसने वाले प्रवाह के समान शोभित हुआ।

**मुक्तावदातश्रमवारिलेश-विशोभिलावण्यरसप्रवाहः।**
**सावर्ण्यमर्णोनिधिना बभार स ताम्रपर्णीप्रणयीकृतेन ॥३७॥**

### अन्वयः

मुक्तावदातश्रमवारिलेशविशोभिलावण्यरसप्रवाहः सः ताम्रपर्णीप्रणयीकृतेन अर्णोनिधिना सावर्ण्यं बभार।

### व्याख्या

मुक्ता इवाऽवदाताःशुभ्राः 'अवदातः सितो गौरो वलक्षो धवलोऽर्जुनः' इत्यमरः। श्रमवारिणस्स्वेदस्य लेशा बिन्दवस्तैः विशोभिनः शोभाशालिनो लावण्यस्वरूपरसस्य प्रवाहा यस्य सः। समुद्रेऽपि मुक्तालावण्यरसप्रवाहा दृश्यन्ते। *स विक्रमाङ्कदेवः ताम्रपर्णी नदी तस्यां प्रणयीकृतेन कृतस्नेहेनार्णो-*निधिना समुद्रेण सावर्ण्यं सादृश्यं बभार धारितवान्। ताम्रपर्ण्यां मुक्ताः समुपलभ्यन्त इति प्रसिद्धिः। अत्रोपमालङ्कारः।

### भाषा

मोती के ऐसे सफेद पसीने की बूंदों की शोभा रखने वाले सौन्दर्य रस के प्रवाह से युक्त राजा विक्रमाङ्कदेव, ताम्रपर्णी नदी से प्रेम करने वाले समुद्र

ऽनङ्गस्य कामस्य सम्बन्धी यस्तापज्वरः सन्तापज्वरस्तमाततान समुत्पादितवान् इति चित्रमाश्चर्यकरम् । अत्र विषमालङ्कारः ।

भाषा

राजाओं में चन्द्र के समान आनन्द देने वाले उस राजा विक्रमाङ्कदेव ने चन्दन लगाने से ठण्डे भये हुए अपने शरीर से मृगनयनियों के हृदयों में प्रविष्ट होकर सन्तापकारी कामज्वर उत्पन्न कर दिया, यह आश्चर्य की बात है ।

अङ्गान्यलक्षन्त विलेपनेन नृपप्रकाण्डस्य विपाण्डुराणि ।
समुच्छलन्त्या प्रणयीकृतानि लावण्यरत्नाकरवेलयेव ॥४०॥

अन्वयः

विलेपनेन विपाण्डुराणि नृपप्रकाण्डस्य अङ्गानि समुच्छलन्त्या लावण्यरत्नाकरवेलया प्रणयीकृतानि इव अलक्ष्यन्त ।

व्याख्या

विलेपनेन चन्दनविलेपनेन विपाण्डुराणि शुभ्राणि नृपप्रकाण्डस्य राजश्रेष्ठस्य अङ्गानि शरीरावयवाः समुच्छलन्त्या ऊर्ध्वं गच्छन्त्या लावण्यस्य रत्नाकरस्समुद्रः 'रत्नाकरो जलनिधिर्यादःपतिरपांपतिः' इत्यमरः । तस्य वेला लहरी तया प्रणयीकृतानि संयुक्तानि इव अलक्ष्यन्त शुशुभिरे । अत्रोत्प्रेक्षालङ्कारः ।

भाषा

चन्दन के लेप से सफेद, राजाओं में श्रेष्ठ विक्रमाङ्कदेव के अङ्ग, ऊपर की ओर उछलने वाली लावण्यरूपी समुद्र की लहर से आलिङ्गित होने के समान शोभित होते थे ।

अंसद्वये भूवलयावतंसः श्रीखण्डलीलातिलके बभार ।
जयामृतास्वादनतत्परायाः साम्राज्यलक्ष्म्या इव रूप्यपात्रे ॥४१॥

अन्वयः

भूवलयावतंसः अंसद्वये जयामृतास्वादनतत्परायाः साम्राज्यलक्ष्म्याः रूप्यपात्रे इव श्रीखण्डलीलातिलके बभार ।

व्याख्या

भूवलयस्य महीमण्डलस्य अवतंसोऽलङ्कारस्वरूपो विक्रमाङ्कदेवः अंसद्वये स्कन्धयुगले 'स्कन्धो भुजशिरोंऽसोऽस्त्री' इत्यमरः । जयो विजय एवामृतं सुधा

अन्वयः

सः चन्दनस्थासकसुन्दरेण अंसद्वयेन दोर्मण्डलालोडितसङ्गराब्धिपीयूषपिण्डद्वयपाण्डुना अंसद्वयेन इव श्रियम् आससाद ।

व्याख्या

स विक्रमाङ्कदेवश्चन्दनस्य स्थासकः चार्चिक्यं "चर्चा तु चार्चिक्यं स्थासकः" इत्यमरः । चन्दन कर्दमे सलिप्याऽन्यस्मिन्स्थाने लिप्तकरस्य मुद्रणचिन्ह तेन सुन्दरं रमणीयं तेन अंसद्वयेन स्कन्धद्वयेन दोष्णौ बाहू "भुजबाहू प्रवेष्टो दोः" इत्यमरः । एव मन्दरं मन्थाचलस्तेनाऽऽलोडित. सक्षोभितस्संगरो युद्ध 'सङ्गरो युधि चापदि' इति मेदिनी । एवाब्धिस्समुद्रस्तस्य (मन्थनेनिस्सृतस्य) । पीयूषस्याऽमृतस्य "पीयूषममृतं सुधा' इत्यमरः । पिण्डद्वय घनीभूतपिण्डयुगलमिव पाण्डु शुभ्र तेन इव अंसद्वयेन स्कन्धद्वयेन "स्कन्धो भुजशिरोंऽसोऽस्त्री" इत्यमरः । श्रियं शोभामाससाद प्राप ।

भाषा

राजा विक्रमाङ्कदेव, चन्दन के स्थासक अथवा हस्तचिह्न से सुन्दर, भुजारूपी मन्दराचल से मथित युद्ध रूपी समुद्र से उत्पन्न दो अमृतपिण्डों के समान श्वेत दोनो कन्धो से शोभित हुआ।

नृपेन्दुना चन्दनचारुलेखा ललाटपट्टे लिखिता दधार ।
वक्त्रारविन्दस्थितसूक्तिदेवी—देवार्चनस्फाटिकलिङ्गभङ्गीम् ॥४४॥

अन्वयः

नृपेन्दुना ललाटपट्टे लिखिता चन्दनचारुलेखा वक्त्रारविन्दस्थितसूक्तिदेवीदेवार्चनस्फाटिकलिङ्गभङ्गीं दधार।

व्याख्या

नृपेन्दुना नृपो विक्रमाङ्कदेव इन्दुरिव चन्द्र इवाऽऽह्लादकः तेन ललाटपट्टे स्वमस्तके लिखिता विरचिता चन्दनस्य चारुलेखा तिलक वक्त्र विक्रमाङ्कमुखमेवारविन्दं कमल "अरविन्द महोत्पलं । सहस्रपत्र कमल" इत्यमरः । तस्मिन् स्थिता विद्यमाना या सूक्तिदेवी वागधिष्ठात्री देवता सरस्वती तस्याः कृते देवार्चनाय महादेवपूजनार्थं स्फटिकमणिमयलिङ्गस्य शिवस्य भङ्गीं विलास तत्सादृश्यमित्यर्थः । दधार दधौ । अत्र निदर्शनालङ्कारः ।

व्याख्या

स्नानस्य प्रियाकर्तृकस्नानस्य अवसाने अन्ते शृङ्गारस्य शृङ्गाररसस्य पाथोधिः समुद्रस्तस्य तरङ्गभङ्गिस्तरङ्गलेखास्वरूपा, आनन्दजनकत्वात् । अनङ्गः काम एव 'कन्दर्पो दर्पकोऽनङ्गः कामः' इत्यमरः । विद्याधरो यक्षः विद्याधराप्सरोयक्षरक्षोगन्धर्वकिन्नराः' इत्यमरः । तस्य खड्गलेखारूपा, श्यामत्वात् । प्रियायाः कबरी केशपाशः 'कबरी केशवेशोऽथ धम्मिल्लः' इत्यमरः । विलासिना तेन विक्रमाङ्कदेवेन संस्क्रियते स्म सुगन्धधूपादिसंस्कारः केशस्य क्रियते स्म । अत्र रूपकालङ्कारः ।

भाषा

रानी के स्नान कर लेने के पश्चात् (आनन्ददायी होने से) शृङ्गार रूपी समुद्र की लहर स्वरूप, तथा (काला होने से) कामदेव रूपी विद्याधर की खड्गलेखा स्वरूप, रानी के केशजाल को राजा विक्रमाङ्कदेव ने स्वयं धूप आदि से संस्कृत किया ।

वक्षःस्थले कुन्तलपार्थिवस्य श्रीखण्डभूपातिलकश्चकासे ।
लक्ष्मीतुलाकोटिरवैर्मुखेन्दोः सरस्वतीहंस इवावतीर्णः ॥४७॥

अन्वयः

कुन्तलपार्थिवस्य वक्षःस्थले श्रीखण्डभूपातिलकः मुखेन्दोः लक्ष्मीतुलाकोटिरवैः अवतीर्णः सरस्वतीहंसः इव चकासे ।

व्याख्या

कुन्तलदेशनृपस्य वक्षःस्थले हृदयपटले श्रीखण्डस्य चन्दनस्य भूपातिलकः सलङ्करणतिलकः, मुखस्य सरस्वत्या आश्रयभूतत्वात् मुखेन्दोः मुखचन्द्रात् लक्ष्मीदेव्याः तुलाकोटिर्मञ्जीरः लक्ष्म्या राज्ञो हृदयाश्रयत्वात्, 'पादाङ्गदं तुलाकोटिर्मञ्जीरो नूपुरोऽस्त्रियाम्' । इत्यमरः । तस्य रवैः शब्दैः । 'शब्दे निनादनिनदध्वनिध्वानरवस्वनाः' इत्यमरः । अवतीर्णो मञ्जीरशब्दं श्रुत्वा आगतः सरस्वतीहंस इव सरस्वतीदेवीवाहन इव चकासे शुशुभे । मुखे सरस्वत्या वासात् हृदि च लक्ष्म्या वासात् लक्ष्मीतुलाकोटिरवं श्रुत्वा मुखात् हृदि समागतः सरस्वतीहंस इव राज्ञो वक्षःस्थले चन्दनतिलकः शुशुभे । इति भावः । अत्रोत्प्रेक्षालङ्कारः ।

भाषा

कुन्तलाधिपति विक्रमाङ्कदेव के वक्षस्थल में लगा हुआ चन्दन का शोभाधायक तिलक, लक्ष्मी का राजा के हृदय में आश्रय होने से लक्ष्मी के पैंजेब के घुंघरुओं के शब्दों को सुनकर सरस्वति के वासस्थान राजा के मुखचन्द्र से उतरे हुए सरस्वती के वाहन रूप हंस के समान शोभित होता था। अर्थात् हंसों का शब्द पैंजेब के घुंघरू के शब्दों के समान होता है। इसलिये वहाँ हंसों की उपस्थिति जानकर सरस्वती का हंस उतर आया।

शैत्यार्थमस्योद्वहतः कराब्जे चक्राभमम्भोरुहिणीपलाशम् ।
करान्तरे विभ्रमपुण्डरीकं रराज शौरेरिव पाञ्चजन्यः ॥४८॥

अन्वयः

शैत्यार्थं कराब्जे चक्राभम् अम्भोरुहिणीपलाशम् उद्वहतः अस्य करान्तरे विभ्रमपुण्डरीकं शौरेः करान्तरे पाञ्चजन्यः इव रराज ।

व्याख्या

शैत्यार्थं ग्रीष्मसन्तापनिवारणपूर्वकशैत्यसम्पादनार्थं, कराब्जे हस्तकमले चक्रस्याभा कान्तिर्यस्मिंस्तत् चक्राभम् अम्भोरुहिणीपलाशं नलिनीपत्रमुद्वहतो धारयतोऽस्य विक्रमाङ्कदेवस्य करान्तरे द्वितीयहस्ते विभ्रमस्य विलासस्य क्रीडायाः पुण्डरीकं सिताम्भोजं 'पुण्डरीकं सिताम्भोजं' इत्यमरः । राजा धारितं, शौरेः कृष्णस्य "देवकीनन्दनः शौरिः श्रीपतिः पुरुषोत्तमः" इत्यमरः । करान्तरे अन्यस्मिन्हस्ते पाञ्चजन्यः शङ्खः "शङ्खो लक्ष्मीपतेः पाञ्चजन्यः" इत्यमरः । इव रराज शुशुभे । एतेन राज्ञो विष्णुरूपता ध्वन्यते ।

भाषा

ग्रीष्म ऋतु में ठण्डक के लिये हाथ में चक्र के सदृश कमलिनी के पत्ते को धारण करनेवाले विक्रमाङ्कदेव के दूसरे हाथ में का विलासश्वेतकमल, कृष्ण के दूसरे हाथ के पाञ्चजन्य शङ्ख के समान शोभित होता था ।

रराज राजीवविलोचनस्य हृदि स्थिता चन्दनपङ्कलेखा ।
मृणालिका वक्त्रगतोक्तिदेवी—विमानहंसाननविच्युतेव ॥४९॥

अन्वयः

राजीवविलोचनस्य हृदि स्थिता चन्दनपङ्कलेखा वक्त्रगतोक्तिदेवीविमानहंसाननविच्युता मृणालिका इव रराज ।

व्याख्या

राजीवे कमले 'विसप्रसूनराजीवपुष्कराम्भोरुहाणि च' इत्यमरः । इव विलोचने यस्य सः तस्य पद्मसमाननेत्रस्य विक्रमाङ्कदेवस्य हृदि वक्षसि स्थिता धारिता चन्दनपङ्कस्य लेखा चन्दनलेपरेखा वक्त्रे मुखे गता समाश्रिता या उक्तिदेवी सरस्वती तस्या विमाने व्योमयाने 'व्योमयान विमानोऽस्त्री' इत्यमरः । यो हंसो वाहनभूतो मरालस्तस्याऽऽननान्मुखाद्विच्युता पतिता मृणालिका मृणालदण्ड इव रराज शुशुभे ।

भाषा

कमल के समान नेत्रवाले राजा विक्रमाङ्कदेव के वक्षस्थल पर चन्दन की रेखा, उसके मुख में रहनेवाली सरस्वती के विमान रूप हंस के मुख से छूटे कमल के डण्ठे के समान शोभित होती थी ।

अथ कुलकेन धारागृहस्य वर्णनं प्रारभते—

प्रदर्शयन्तीव तुषारवर्षं विसारिणा शीकरडम्बरेण ।
समन्ततः स्फाटिककुट्टिमेन हिमं शिलीभूतमिवोद्वहन्ति ॥५०॥

अन्वयः

विसारिणा शीकरडम्बरेण तुषारवर्षं प्रदर्शयन्ति इव, समन्ततः स्फाटिककुट्टिमेन शिलीभूतं हिमम् उद्वहन्ति इव । धारागृहाणीति ५४ संख्याकेन श्लोकेन सम्बन्धः ।

व्याख्या

विसारिणा विस्तृतेन शीकराणामम्बुकणानां "शीकरोऽम्बुकणाः स्मृताः" इत्यमरः । डम्बरेण व्याजेन तुषारस्य हिमस्य 'तुषारस्तुहिनं हिमम्' इत्यमरः । वर्षं वृष्टिं 'वृष्टिर्वर्षं' इत्यमरः । प्रदर्शयन्ति सम्सूचयन्ति इव समन्ततः परितः स्फाटिककुट्टिमेन स्फाटिकमणिमयबद्धभुवा 'कुट्टिमोऽस्त्री निबद्धा भूः' इत्यमरः । शिलीभूतं घनीभूतं हिमं तुहिनम् उद्वहन्ति धारयन्ति इव । 'धारागृहाणीति' ५४ संख्याकेन श्लोकेन सम्बन्धः ।

भाषा

. दूर तक जलकणों को चारों ओर गिराने के मिष से तुषार की वृष्टि के समान प्रकट करने वाले, चारों ओर स्फटिक के पत्थरों से बनी जमीन होने से मानो घनीभूत बर्फ को धारण करने वाले (कामदेव की धनुष चलाकर कामाग्नि उत्पन्न करने के प्रयास को निष्फल सूचित करने वाले धारागृह में अर्थात् फुवारों से युक्त घर में राजा दोपहर में रहने लगा।) (यह श्लोक ५४ से संबंधित है)

परिस्फुरत्केतकपत्रभङ्ग्या घण्टासहस्रैरिव दन्तुराणि ।
अदृश्यसूर्याणि घनोपमानां नीरन्ध्रबन्धात्कदलीदलानाम् ॥५१॥

अन्वयः

परिस्फुरत्केतकपत्रभङ्ग्या घण्टासहस्रैः दन्तुराणि इव घनोपमानां कदलीदलानां नीरन्ध्रबन्धात् अदृश्यसूर्याणि। धारागृहाणीति संबंधः।

व्याख्या

परिस्फुरन्ति समुल्लसन्ति केतकपत्राणि केतकीकुसुमदलानि तेषां भङ्ग्या व्याजेन घण्टानां सहस्रैर्दन्तुराणि उन्नतानतानि रमणीयानि इव घनोपमानां मेघसदृशानां कदलीपत्राणां कृष्णवर्णत्वात् छायाकरत्वाच्च, नीरन्ध्रः छिद्ररहितो घनीभूतो यो बन्धोऽवस्थानं तस्मात् नीरन्ध्रबन्धात् अदृश्यः अस्पृश्यकिरणजालः सूर्यो येषां तानि अदृश्यसूर्याणि असूर्यम्पश्यानि अतएव शीतलानि धारागृहाणि यन्त्रगृहाणीति ५४ संख्याकेन श्लोकेन सम्बन्धः।

भाषा

शोभायमान केवडे के फूलों के पत्तों के मिष से हजारों घण्टियों से सुशोभित होने के समान नीचे ऊँचे दीख पडने वाले, तथा मेघों के सदृश कृष्ण वर्ण तथा छाया करने वाले केले के पत्तों के छेद रहित होने से जहाँ सूर्य की किरणों का दर्शन भी नहीं हो सकता था (ऐसे तथा कामदेव की धनुष चलाकर कामाग्नि उत्पन्न करने के प्रयास को निष्फल सूचित करने वाले धारागृह में अर्थात् फुवारों से युक्त घर में राजा दोपहर में रहने लगा।) यह श्लोक ५४ से सम्बन्धित है।

गवाक्षजालान्तरनिर्यदच्छ-नीरन्ध्रधारानिकरच्छलेन ।
निदाघसंरोधविसूत्रणाय व्यापारयन्तीव पृषत्कपंक्तिम् ॥५२॥

### अन्वयः

गवाक्षजालान्तरनिर्यदच्छनीरन्ध्रधारानिकरच्छलेन निदाघसंरोध-विसूत्रणाय पृषत्कपंक्तिं व्यापारयन्ति इव (धारागृहाणीति सम्बन्धः)।

### व्याख्या

गवाक्षजालानां वातायनसमूहानां 'वातायनं गवाक्षोऽथ' इत्यमरः। अन्तरेभ्यो मध्यभागेभ्यो निर्यन्तीनां निर्गच्छन्तीनां नीरन्ध्रधाराणां छिद्ररहितजलधाराणां सततं प्रवहन्तीनां धाराणामित्यर्थः। निकरस्य समूहस्य "स्तोमौघनिकरव्रातवारसंघातसञ्चयाः" इत्यमरः। छलेन व्याजेन निदाघस्य ग्रीष्मकालस्य संरोधः प्रतिघातस्तस्य विसूत्रणाय जननाय पृषत्कानां बाणानां 'पृषत्कबाणविशिखाः' इत्यमरः। पंक्तिं श्रेणीं व्यापारयन्ति प्रेरयन्ति इव (धारागृहाणि)। ५४ संख्याकश्लोकेन सम्बन्धः। अत्रोत्प्रेक्षालङ्कारः।

### भाषा

धारागृहों के अनेक झरोखों के बीच में से निकलने वाली अस्खलित जल धाराओं के समूह के मिष से मानो ग्रीष्मकाल का प्रतिरोध करने के लिये बाणों की पंक्तियों को छोड़ने वाले (कामदेव की धनुष चलाकर कामाग्नि उत्पन्न करने के प्रयास को निष्फल सूचित करने वाले धारागृह अर्थात् फुवारों से युक्त घर में राजा दोपहर में रहने लगा।) यह श्लोक ५४ से सबंधित है।

अत्यन्तशैत्यादिव सङ्कुचद्भिरस्पृष्टपूर्वाणि करैः खरांशोः।
दुर्गाणि घर्मेऽपि हिमर्तुजीव-रक्षाक्षमाणीव कृतानि धात्रा ॥५३॥

### अन्वयः

अत्यन्तशैत्यात् सङ्कुचद्भिः इव खरांशोः करैः अस्पृष्टपूर्वाणि धात्रा घर्मे अपि हिमर्तुजीवरक्षाक्षमाणि कृतानि दुर्गाणि इव—(धारागृहाणि)

### व्याख्या

अत्यन्तशैत्यात् शैत्याधिक्यात् सङ्कुचद्भिः इव सङ्कोचं प्राप्तैरविस्तृतैरिव खरांशोस्सूर्यस्य करैः किरणैः अस्पृष्टपूर्वाणि कदाचिदपि पूर्वं न संस्पृष्टानि धात्रा ब्रह्मणा घर्मेऽपि ग्रीष्मकालेऽपि हिमर्तुः शीतकालः तस्य जीवरक्षायां प्राणपालने क्षमाणि शक्तानि कृतानि विरचितानि दुर्गाणि अगम्यस्थानानि इव (धारागृहाणि) ५४ संख्याकश्लोकेन सम्बन्धः।

भाषा

- अत्यधिक ठण्डे होने से मानो संकोच को प्राप्त। सूर्य की किरणों से पहिले कभी भी स्पर्श न किये गये हुए और ब्रह्मा ने ग्रीष्मकाल में भी मानो हेमन्त-ऋतु की प्राणरक्षा के लिये बनाए हुए (कामदेव के धनुष चलाकर कामाग्नि उत्पन्न करने के प्रयास को निष्फल सूचित करने वाले धारागृह अर्थात् फुवारों से युक्त घरों में राजा दोपहर में वास करने लगा।) यह ५४ श्लोक से सम्बन्धित है।

धारागृहाणि क्लममार्जनेन स्मरस्य चापश्रममादिशन्ति।
मृगेक्षणाभिः सममध्युवास मध्यन्दिने मध्यमलोकपालः ॥५४॥

अन्वयः

मध्यमलोकपालः मध्यन्दिने मृगेक्षणाभिः समं क्लममार्जनेन स्मरस्य चापश्रमम् आदिशन्ति धारागृहाणि अध्युवास।

व्याख्या

मध्यमलोकं मनुष्यलोकं पालयतीति मध्यमलोकपालः विक्रमाङ्कदेवनृपः मध्यन्दिने मध्याह्ने मृगेक्षणाभिः मृगनयनाभिःरामाभिः सह क्लमस्य ग्रीष्मकर्तृक-क्लमस्य च कामकर्तृकबाणमोचनजन्यक्लेशजनितग्लानेर्मार्जनेन जलधारा-मोचनयन्त्रजन्यशैत्यवशान्निवारणेन स्मरस्य कामदेवस्य कृते चापश्रमं धनुश्चालन-परिश्रममेव, न तु तेन किमपि फलमित्यादिशन्ति प्रकटयन्ति धारागृहाणि जल-यन्त्रयुक्तगृहाणि अध्युवास अधितष्ठौ।

भाषा

पृथ्वी का राजा विक्रमाङ्कदेव मध्याह्न के समय में मृगनयनी अङ्गनाओं के साथ, ग्रीष्म ऋतु की गर्मी के साथ कामदेव की कामाग्नि से उत्पन्न गर्मी की पीड़ा को दूर रखने से कामदेव के धनुष चलाने के श्रम मात्र को प्रकट करने वाले अर्थात् कामदेव के धनुष चलाने के परिश्रम को निष्फल सिद्ध करने वाले धारागृहों में अर्थात् फुवारों से युक्त घरों में निवास करने लगा।

चोलान्तकश्चन्दनपाण्डुरेषु नितम्बिनीनां स्तनमण्डलेषु।
साम्राज्यमानम्रजगत्त्रयस्य मेने मनोजन्मनराधिपस्य ॥५५॥

### अन्वयः

चोलान्तकः चन्दनपाण्डुरेषु नितम्बिनीनां स्तनमण्डलेषु आनम्रजगत्त्रयस्य मनोजन्मनराधिपस्य साम्राज्यं मेने ।

### व्याख्या

चोलनृपस्यान्तकः पराजयकर्ता विक्रमाङ्कदेवः चन्दनेन श्रीखण्डलेपनेन पाण्डुरेषु शुक्लवर्णेषु नितम्बिनीनां कामिनीनां स्तनमण्डलेषु कुचमण्डलेषु आनम्रं वशीभूतं जगत्त्रयं यस्य स तस्याऽऽनम्रजगत्त्रयस्य मनसो जन्म यस्य स मनोजन्मा काम एव नराधिपस्तस्य साम्राज्यमाधिपत्यं मेने मातवान् । कामिनीनां स्तनमण्डलानि अतीव कामोद्दीपकानि जातानीतिभावः ।

### भाषा

चोलवंशीय राजाओं का अन्त करने वाला राजा विक्रमाङ्कदेव, चन्दन से पुते होने से श्वेत दीख पड़ने वाले कामिनियों के स्तनमण्डलों पर, तीनों लोकों को अपने वश में करने वाले कामराजा का साम्राज्य मानने लगा। अर्थात् स्तनमण्डलों को देखकर उसमें काम उद्दीपित हुआ।

हिमाद्रिशृङ्गाधिकशीतलेषु वराङ्गनातुङ्गकुचस्थलेषु।
घोरं निराकर्तुमसौ निदाघं विलेपनापाण्डुषु पण्डितोऽभूत् ॥५६॥

### अन्वयः

असौ विलेपनापाण्डुषु हिमाद्रिशृङ्गाधिकशीतलेषु वराङ्गनातुङ्गकुचस्थलेषु घोरं निदाघं निराकर्तुं पण्डितः अभूत् ।

### व्याख्या

असौ विक्रमाङ्कदेवः विलेपनापाण्डुषु चन्दनविलेपनेनाऽऽपाण्डुषु शुभ्रवर्णेषु हिमाद्रिशृङ्गादपि हिमालयशिखरादपि 'कूटोऽस्त्री शिखरं शृङ्गं' इत्यमरः । अधिकशीतलानि तेषु वराङ्गनानां श्रेष्ठकामिनीनां तुङ्गानि उच्चानि 'उच्चप्रांशून्नतोदग्रोच्छ्रितास्तुङ्गे' इत्यमरः । कुचस्थलानि तेषु घोरं भयङ्करं निदाघं ग्रीष्मं 'ग्रीष्म ऊष्मकः । निदाघ उष्णोपगम' इत्यमरः । निराकर्तुं निवारयितुं पण्डितः निपुणः निरतः अभूत् । शीतलकुचालिङ्गनमेव नृपस्य ग्रीष्मसन्तापनिवारकमभूदिति भावः ।

### भाषा

यह विक्रमाङ्कदेव चन्दन लगाने से चारो ओर से सफेद दीख पड़ने वाले तथा हिमालय की चोटियों से भी अधिक शीतल, श्रेष्ठ नारियों के कुचमण्डलों में, भयङ्कर गर्मी के त्रास को दूर कर देने में निपुण हो गया। अर्थात् चन्दन के लेप से शीतल कुचों का आलिङ्गन करने से राजा की ग्रीष्मऋतु की गर्मी दूर हो गई।

**स्त्रीणामनालेपनशीतमङ्गं विपाटलः पाटलया समीरः ।**
**स्मरस्य वीरव्रतरक्षणाय तस्मिन्बभूव स्मितमल्लिका च ॥५७॥**

### अन्वयः

तस्मिन् स्मरस्य वीरव्रतरक्षणाय स्त्रीणाम् अनालेपनशीतम् अङ्गं पाटलया विपाटलः समीरः स्मितमल्लिका च ( त्रितयं कारणं ) बभूव ।

### व्याख्या

तस्मिन् विक्रमाङ्कदेवे स्मरस्य कामस्य वीराणां शूराणां यद्व्रतं शत्रुप्रहारादिस्तस्य रक्षणाय पालनाय स्त्रीणां कामिनीनां आलेपनं विनैव शीतं शीतलमङ्गं पाटला रक्तलोध्रपुष्पं तया पाटलया "पाटलिः पाटला मोघा काचस्थाली" इत्यमरः। कुसुमेन विपाटलः विशेषेण पाटल ईषद्रक्तः, सुगन्धयुक्तः इत्यर्थः। समीरः पवनः 'समीरमारुतमरुज्जगत्प्राणसमीरणा.' इत्यमरः। स्मितमल्लिका विकसितमल्लिका च (हिन्दी भाषायां बेला इति प्रसिद्धम्) बभूव। त्रितयं कारण बभूवेत्यर्थः।

### भाषा

राजा विक्रमाङ्कदेव के सम्बन्ध में कामदेव की वीरव्रत की रक्षा के लिये अर्थात् कामदेव का विक्रमाङ्कदेव पर प्रभाव पड़ने में गुलाब के या लाल लोध्र के फूल से सुगन्धित वायु, बिना चन्दन पोते स्वाभाविक शीतल अङ्गनाओं का शरीर और बेले के फूल ये कारण हुए।

अधुना दीर्घिकां निरूपयति—

**अतारिताः कान्तिजलैर्वधूनां निपत्य यत्पाथसि दुग्धमुग्धे ।**
**न क्षीरनीरप्रविभागहेतोरन्यत्र हंसाः पुनरुत्सहन्ते ॥५८॥**

अन्वयः

वधूनां कान्तिजलैः दुग्धमुग्धे यत्पाथसि निपत्य प्रतारिताः हंसाः अन्यत्र क्षीरनीरप्रविभागहेतोः पुनः न उत्सहन्ते ।

व्याख्या

वधूनां स्त्रीणां कान्तिजलैः शरीरकान्तिरूपजलैः दुग्धवन्मुग्धे सुन्दरे यस्या दीर्घिकायाः पाथसि जले 'कबन्धमुदकं पाथ.' इत्यमरः । निपत्य गत्वापि प्रतारिताः वञ्चिताः हंसाः । नैर्मल्याद्धावल्याच्च, स्त्रीशरीरकान्तिजलेन मिश्रित । तज्जल दुग्धमिश्रितं बुद्ध्वा भ्रम गताः क्षीराम्भोरस्य विभागकरणेऽसमर्थास्सन्तः अन्यत्र क्षीराम्भोरस्य प्रविभागहेतो विभागकरणाय पृथक्करणाय पुन. न उत्सहन्ते प्रयासं न वितन्वन्ति ।

भाषा

अब कवि तालाब का वर्णन करते हैं ।

स्त्रियों के कान्तिरूपी जल से दूध के ऐसे सुन्दर जिस तालाब के पानी में जाकर ठगे गये हंस लोग दूध से पानी को अलग करने के लिये अन्यत्र कहीं जाने में प्रोत्साहित नहीं होते थे । अर्थात् स्त्रियों का कान्तिरूपी जल तालाब के जल में मिल जाने से तालाब का जल दूध के समान सुन्दर दीख पड़ता था । हंसों में पानी और दूध को अलग करने की शक्ति रहने पर भी स्त्रियों के कान्तिजल को दूध समझ उसे पानी से अलग करने के प्रयत्न में असफल होकर फिर कभी भी अन्यत्र जल से दूध को अलग करने की उनकी हिम्मत न हुई ।

रणद्द्विरेफेषु सरोरुहेषु यत्रोपविष्टाः प्रतिभान्ति हंसाः ।
समर्प्य लीलागमनं गृहीत-मञ्जीरनादा इव सुन्दरीभ्यः ॥५६॥

अन्वयः

यत्र रणद्द्विरेफेषु सरोरुहेषु उपविष्टाः हंसाः सुन्दरीभ्यः लीलागमनं समर्प्य गृहीतमञ्जीरनादा इव प्रतिभान्ति ।

व्याख्या

यत्र दीर्घिकासु रणन्त शब्दायमाना द्विरेफा भ्रमरा 'द्विरेफपुष्पलिड्भृङ्ग-षट्पदभ्रमरालय' इत्यमर । "येषु ते तेषु रणद्द्विरेफेषु सरोरुहेषु कमलेषु

उपविष्टाः सन्निविष्टाः हंसा मरालाः सुन्दरीभ्यो रमणीभ्यः 'सुन्दरी रमणी रामा' इत्यमरः । लीलागमनं विलासगतिं समर्प्य दत्त्वा गृहीतो मञ्जीरनादः नूपुरशब्दसदृशशब्दकरणं यैस्ते गृहीतमञ्जीरनादा इव प्रतिभान्ति प्रतीयमानाः भवन्ति । अत्र परिवृत्तिनामाऽलङ्कारः ।

### भाषा

जिन तालाबों में गूंजने वाले भौंरों से युक्त कमलों पर बैठे हुए हंस सुन्दरियों को अपनी हंसगति देकर उनसे पैंजेब के शब्दों को ग्रहण करनेवालों के समान शोभित होते थे ।

**यत्पङ्कजैः स्नानविनोदभाजां जाने नरेन्द्रप्रमदाजनानाम् ।**
**मुखेन्दुबिम्बैरविरोधहेतोः समर्पिता पादतलेषु लक्ष्मीः ॥६०॥**

### अन्वयः

यत्पङ्कजैः स्नानविनोदभाजां प्रमदाजनानां मुखेन्दुबिम्बैः अविरोधहेतोः पादतलेषु लक्ष्मीः समर्पिता (इति) जाने ।

### व्याख्या

यासां दीर्घिकाणां पङ्कजैः कमलैः स्नानविनोदं स्नानविहारं भजन्तीति स्नानविनोदभाजस्तासां स्नानविनोदभाजां दीर्घिकासु स्नातीनां प्रमदाजनानां स्त्रीजनानां 'प्रमदा मानिनी कान्ता ललना च' इत्यमरः । मुखान्येवेन्दुबिम्बानि तैः मुखेन्दुबिम्बैः अविरोधहेतोः विरोधपरिहाराय पादतलेषु स्त्रीणां चरणतलेषु प्रसादकरणाय लक्ष्मीः स्वकीयरक्तिमशोभा समर्पिता प्रदत्ता इति जाने मन्ये । मुखेन्दुबिम्बसत्त्वेऽपि पादाब्जस्योपस्थितिरिति चन्द्रकमलयोरविरोध इति भावः ।

### भाषा

जिन क्रीडावापी के कमलों ने स्नान का आनन्द लेनेवाली स्त्रियों के मुखरूप चन्द्रबिम्बों से विरोध दूर कर देने के हेतु से उनके चरणों में अपनी रक्तवर्ण शोभा समर्पित कर दी ऐसा मैं समझता हूँ । अर्थात् उनके मुख रूपी चन्द्रबिम्बों की विद्यमानता में उनके चरणकमल भी विद्यमान थे ।

**श्रोणीतटोल्लासितरङ्गदोला-विलासवाचालितसारसासु ।**
**स तासु रेमे सह कामिनीभिर्दीर्घासु लीलावनदीर्घिकासु ॥६१॥**

अन्वयः

सः कामिनीभिः सह तासु दीर्घासु श्रोणीतटोल्लासितरङ्गदोला-विलासवाचालितसारसासु लीलावनदीर्घिकासु रेमे।

व्याख्या

स विक्रमाङ्कदेवः कामिनीभिः विलासिनीभिस्सह तासु सुप्रसिद्धासु दीर्घासु विशालासु श्रोणीतटेन नितम्बतटेन उल्लासिन उद्गच्छन्तस्तरङ्गाः एव दोलाः प्रेङ्खाः 'शिबिका याप्ययानं स्याद्दोला प्रेङ्खादिका स्त्रियाम्' इत्यमरः। तासु विलासेन क्रीड़या वाचालिता मुखरितास्सारसाः पक्षिविशेषा यासु तास्तासु लीलावनदीर्घिकासु क्रीडोपवनस्थवापीषु 'वेशन्तः पल्वलं चाल्पसरो वापी तु दीर्घिका' इत्यमरः। रेमे विहारं रचितवान्।

भाषा

कामिनिओं के नितम्बों के धक्के से उत्पन्न होनेवाली लहरों रूपी झूलों पर क्रीडा करने से शब्दायमान सारसों से युक्त वाटिका में की उन बड़ी बड़ी वापियों में उस विक्रमाङ्कदेव ने कामिनियों के साथ जल क्रीडा की।

विश्रान्तकान्ताकरयन्त्रधारं सरोजिनीपत्रममुष्य हस्ते।
शोभां बभार स्मरकङ्कपत्र-मैत्रीजुषः श्यामलखेटकस्य ॥६२॥

अन्वयः

अमुष्य हस्ते विश्रान्तकान्ताकरयन्त्रधारं सरोजिनीपत्रं स्मरकङ्कपत्र-मैत्रीजुषः श्यामलखेटकस्य शोभां बभार।

व्याख्या

अमुष्य विक्रमाङ्कदेवस्य हस्ते करे विश्रान्ता संघट्टमासाद्य समाप्तिं गता कान्ताकरेभ्यो निस्सृता यन्त्रधारा जलयन्त्रधारा यस्मिंस्तत् एवम्भूत सरोजिन्याः कमलिन्याः पत्रं किसलयं स्मरस्य कामस्य कङ्कपत्रं बाणविशेषस्तस्य मैत्रीं साहित्यं जुषते इति स्मरकङ्कपत्रमैत्रीजुट् तस्य श्यामलखेटकस्य कृष्णस्य प्रहारप्रतिरोध-कस्य (हिन्दी भाषायाम् "ढाल" इति) शोभां बभार दधे।

भाषा

राजा विक्रमाङ्कदेव के हाथ में का, कामिनियों की हाथ की पानी की

पिचकारियों को रोकने वाला, नीले कमल का पत्ता, कामदेव के विषैले बाणों से भेंट करने वाली अर्थात् उनके मार को रोकने वाली काली ढाल की शोभा को प्राप्त हुआ।

मीनाङ्कमीनस्य नरेन्द्रचन्द्र-शरीरलावण्यजले स्थितस्य ।
असूत्रयद्वाडिशसूत्रशङ्कां दीर्घा मृगाक्षीकरयन्त्रधारा ॥६३॥

अन्वयः

दीर्घा मृगाक्षीकरयन्त्रधारा नरेन्द्रचन्द्रशरीरलावण्यजले स्थितस्य मीनाङ्कमीनस्य वाडिशसूत्रशङ्काम् असूत्रयत्।

व्याख्या

दीर्घा विशाला मृगाक्षीणां हरिणनयनानां करेभ्यो विक्षिप्ता यन्त्रधारा जलधारा नरेन्द्रेषु चन्द्रो वा नरेन्द्र एव चन्द्रस्तस्य शरीरस्य लावण्यमेव कान्तिरेव जलं तस्मिन् स्थितस्य विद्यमानस्य मीनो मत्स्य एवाऽङ्कः पताका यस्य स मीनाङ्कः कामस्तस्य मीनस्तस्य वाडिशसूत्रस्य मत्स्यवेधनोपकरणसूत्रस्य शङ्कां सन्देहमसूत्रयत् जनयामास।

भाषा

मृगनयनी के हाथ से छूटी लम्बी जल की पिचकारी नरेन्द्रचन्द्र विक्रमाङ्कदेव के शरीर के सौन्दर्य रूपी जल में विद्यमान, कामदेव की मछली को पकड़ने की डोरी का सन्देह उत्पन्न कर रही थी।

स राजहंसः करयन्त्रमुक्त-धारालतापञ्जरमध्यवर्ती ।
उपायनीभूत इवाङ्गनाभिः क्षिप्तः करे मन्मथपार्थिवस्य ॥६४॥

अन्वयः

सः करयन्त्रमुक्तधारालतापञ्जरमध्यवर्ती राजहंसः अङ्गनाभिः मन्मथपार्थिवस्य करे क्षिप्तः उपायनीभूत इव (रराज)

व्याख्या

स प्रसिद्ध जलविहारासक्त स्त्रीणां कराभिमयन्त्रे मुक्ता परिक्षिप्ता या धारा जलधारा एव लता एव पञ्जरस्तस्य मध्यवर्ती राजहंसो नृपश्रेष्ठो विक्रमाङ्क-

२१

देवः पक्षिश्रेष्ठः मरालो वा अङ्गनाभिः कामनीभिः मन्मथ एव काम एव पार्थिवो नृपस्तस्य करे हस्ते क्षिप्तः दत्तः उपायनीभूत इव उपहारीभूत इव रराज। अत्रोत्प्रेक्षालङ्कारः।

**भाषा**

कामिनिओं के हाथों की पिचकारियों की धारा रूपी लता के पिंजड़े के मध्य में विद्यमान राजाओं में श्रेष्ठ विक्रमाङ्कदेव या हंस, कामिनिओं द्वारा कामदेव राजा के हाथ में दी हुई नजर के समान शोभित होता था।

**तमेकवीरं करयन्त्रवारां धाराशतैर्व्याकुलितं वधूभिः।**
**निःशङ्कमारोपितचापदण्डः शिक्षाशरव्यं मदनश्चकार ॥६५॥**

**अन्वयः**

आरोपितचापदण्डः मदनः वधूभिः करयन्त्रवारां धाराशतैः व्याकुलितम् एकवीरं तं निशङ्कं शिक्षाशरव्यं चकार।

**व्याख्या**

आरोपितः चापदण्डः येन सः शरसंधानाय सज्जीकृतधनुर्दण्डः मदनः कामः वधूभिः स्त्रीभिः करा एव यन्त्राणि जलनिस्सरणयन्त्राणि 'पिचकारी' 'फुहारा' इति हिन्दीभाषायाम् तेषां वारां जलानां धाराशतैः व्याकुलितं समुद्विग्नम् एकवीरं प्रधानशूरं तं विक्रमाङ्कदेवं निश्शङ्कं यथा स्यात्तथा शिक्षाया बाणमोक्षाभ्यासस्य शरव्यं लक्ष्यं 'लक्ष्यं लक्ष्यं शरव्यं च' इत्यमरः। चकार। सः कामस्य बाणलक्ष्यो जात इति भावः।

**भाषा**

धनुष्य को बाण चलाने के लिये तयार करने वाले कामदेव ने, कामिनिओं की हाथ की पिचकारियों के जल की सैकड़ों धाराओं से घबड़ाए हुए प्रधान वीर विक्रमाङ्कदेव को निडर होकर बाण छोड़ने के अभ्यास करने का निशाना बनाया।

**स्तनाङ्गरागे लटभाङ्गनानां नरेन्द्रधाराम्बुहृते मनोभूः।**
**रागं हृदि प्रच्युतिशङ्कयेव माञ्जिष्ठरागप्रतिमं ततान ॥६६॥**

अन्वयः

मनोभूः लटभाङ्गनानां स्तनाङ्गरागे नरेन्द्रधाराम्बुहृते प्रच्युतिशङ्कया इव हृदि माञ्जिष्ठरागप्रतिमं रागं ततान ।

व्याख्या

मनोभूः कामो लटभाङ्गनानां सुन्दरीणां स्तनानामङ्गरागः रक्तसुगन्धिचूर्णादिद्रव्यं तस्मिन् स्तनाङ्गरागे नरेन्द्रस्य विक्रमाङ्कदेवस्य धारा स्वहस्तप्रक्षिप्तजलधारा तस्या अम्बु जलं तेन हृते निरस्ते प्रक्षालिते सति प्रच्युतिशङ्कया रागस्य प्रच्युतिः परिभ्रंशस्तस्याः शङ्कया रागः प्रेमापि प्रभ्रष्टं न स्यादिति शङ्कया हृदि वक्षसि माञ्जिष्ठरागप्रतिमं माञ्जिष्ठरागसदृशं घनं रागं स्नेहं ततान विस्तारयामास ।

भाषा

कामदेव ने, सुन्दर स्त्रियों के स्तनों में लगे सुगन्धि द्रव्य के राग अर्थात् लालिमा के, राजा विक्रमाङ्कदेव की हाथों की पिचकारी की धारा से, धो दिये जाने पर कहीं राग अर्थात् प्रेम दूर न हो जाय इस आशङ्का से उन कामिनियों के हृदयों में मजीठ के राग अर्थात् लालिमा के समान गाढा राग अर्थात् प्रेम भर दिया ।

देवः कराम्भोरुहयन्त्रधारां क्षिपन्कपोले विपुलेक्षणायाः ।
कुमुद्वतीकामिनि रश्मिदण्डं प्रवेशयन्नर्क इव व्यराजत् ॥६७॥

अन्वयः

विपुलेक्षणायाः कपोले कराम्भोरुहयन्त्रधारां क्षिपन् देवः कुमुद्वतीकामिनि रश्मिदण्डं प्रवेशयन् अर्कः इव व्यराजत् ।

व्याख्या

विपुलेक्षणायाः विशालनेत्रायाः कपोले गण्डे "अधस्ताच्चिबुकं गण्डौ कपोलौ" इत्यमरः । कराम्भोरुहस्य हस्तकमलस्य यन्त्रधारां जलधारां क्षिपन् प्रेरयन् देवो विक्रमाङ्कदेवः कुमुद्वत्याः कामी कामुकश्चन्द्रस्तस्मिन् रश्मिदण्डं प्रभासमूहं प्रवेशयन् प्रक्षिपन् अर्कः सूर्य इव व्यराजत् शुशुभे ।

भाषा

बड़ी-बड़ी आँखों वाली कामिनी के गालों पर अपने करकमलों से जल की पिचकारी की धारा छोड़ने वाला राजा विक्रमाङ्कदेव, कुमुदिनी के प्रेमी चन्द्रमा में अपने किरण रूपी दण्डों को प्रविष्ट करनेवाले सूर्य के समान शोभित हुआ। अर्थात् कामिनी का मुख चन्द्र और पिचकारी की धारा मानो रश्मिदण्ड था। अतएव राजा सूर्य के समान शोभित होता था।

आनम्य लीलापरिवर्तनेन विलङ्घयामास नरेन्द्रमुक्ताम्।
कण्ठोन्मुखीं काचन कम्बुकण्ठी स्मरासिधारामिव वारिधाराम्॥६८॥

अन्वयः

कम्बुकण्ठी काचन लीलापरिवर्तनेन आनम्य नरेन्द्रमुक्तां कण्ठोन्मुखीं वारिधारां स्मरासिधाराम् इव विलङ्घयामास।

व्याख्या

कम्बु शङ्ख इव कण्ठो यस्याः सा कम्बुकण्ठी काचन नायिका लीलया विलासेन परिवर्तनं परिभ्रम्य सवलनं तेनाऽऽनम्य स्ववपुरानतं कृत्वा नरेन्द्रेण राज्ञा विक्रमाङ्कदेवेन मुक्तां परिक्षिप्तां कण्ठं प्रत्युन्मुखीं तां कण्ठं लक्ष्यीकृत्याऽऽगतां वारिधारां जलधारां स्मरस्य कामस्याऽसिधारां खड्गधारां तामिव विलङ्घयामास तस्यानादरमसरसार दूरीकृतवतीति भावः।

भाषा

शंख की आकृति के समान गलेवाली किसी नारी ने, राजा विक्रमाङ्कदेव द्वारा कण्ठ पर चलाई हुई कामदेव की तलवार की धार के समान हाथ की पिचकारीके जल की धारा को झुककर क्रीडापूर्वक घूम जाने से टाल दिया अर्थात् वह पिचकारी की धारा उसके गले के ऊपर न पड सकी।

चकार कान्ताकुचपत्रभङ्ग-कस्तूरिकापङ्ककलङ्कितानि।
वर्षाजलभ्रान्तिविलोलहंस-हासानि लीलासरसीपयांसि॥६९॥

अन्वयः

लीलासरसीपयांसि कान्ताकुचपत्रभङ्गकस्तूरिकापङ्ककलङ्कितानि (अतएव) वर्षाजलभ्रान्तिविलोलहंसहासानि चकार।

### व्याख्या

(स विक्रमाङ्कदेवः) क्रीडासरस्या विलाससरस्य 'पद्माकरस्तडागोऽस्त्री कासारः सरसी सरः' इत्यमरः । पयांसि जलानि कान्तानां कुचास्तेषु पत्रभङ्गाः पत्ररचनाः तेषां च कस्तूरिकापङ्कः तेन कलङ्कितानि कलुषितानि अतएव वर्षाकालस्य जलं कलुषितं पयस्तस्य आस्था भ्रमज्ञानेन विलोलाः चञ्चलचित्ताः, अतएव गमनायेति भावः । हंसा एव शुक्लत्वात् हासा येषां तानि चकार ।

### भाषा—

राजा विक्रमाङ्कदेव ने कान्ताओं के स्तनमण्डल पर के पत्रभङ्ग अर्थात् चित्रकारी के कस्तूरी के लेप से मटमैले क्रीडावापी के जलों को, वर्षाकाल के मटमैले पानी के भ्रम से मानस सरोवर पर जाने के लिये चञ्चल श्वेत हंसरूपी हास्य से युक्त बना दिया ।

**नृपावरोधस्तनकुङ्कुमेन वापीपयः पाटलतामवाप्तम् ।**
**क्रीडानिमग्नस्मरकुम्भिकुम्भ—सिन्दूरसंभिन्नमिवावभासे ।।७०।।**

### अन्वयः

नृपावरोधस्तनकुङ्कुमेन पाटलताम् अवाप्तं वापीपयः क्रीडानिमग्नस्मरकुम्भिकुम्भसिन्दूरसंभिन्नम् इव आवभासे ।

### व्याख्या

नृपस्य विक्रमाङ्कदेवस्यावरोधोऽन्तःपुरस्त्रीजनस्तस्य "स्त्र्यगारं भूभुजामन्तःपुरं स्यादवरोधनम् । शुद्धान्तश्चावरोधश्च' इत्यमरः । स्तनास्तेषां कुङ्कुमेन केसरेण पाटलतां रक्ततामवाप्तं प्राप्तं वापीपयः वापीजलं क्रीडया विलासेन निमग्नः पतितः स्मर एव कुम्भी हस्ती तस्य कुम्भस्तस्मिन् यत् सिन्दूरं तेन संभिन्नं मिश्रितम् इव आवभासे शुशुभे । रक्तवर्णं जातमिति भावः ।

### भाषा—

राजा विक्रमाङ्कदेव की अन्तःपुर की स्त्रियों के स्तनों पर लगे केसर से लाल भया हुआ तलाब का जल, क्रीडा के लिये प्रविष्ट कामरूपी हाथी के गण्डस्थल पर लगे हुए सेन्दुर से मिला होने के समान लालरंग का शोभित होता था ।

**रराज कर्पूररजस्तरङ्ग-संसङ्गि लीलाङ्गणदीर्घिकाणाम् ।**
**गौरीपतिक्रोधहुताशशान्त्यै मग्नस्य भस्मेव मनोभवस्य ॥७१॥**

अन्वयः

लीलाङ्गणदीर्घिकाणां तरङ्गससङ्गि कर्पूररजः गौरीपतिक्रोधहुताशशान्त्यै मग्नस्य मनोभवस्य भस्म इव रराज।

व्याख्या

लीलाङ्गणेषु क्रीडाजिरेषु "अङ्गण चत्वराजिरे" इत्यमर । दीर्घिका वाप्यस्तासा तरङ्गाणामूर्मीणा 'भङ्गस्तरङ्ग ऊर्मिर्वा इत्यमर । ससङ्गि सम्बन्धि, तरङ्गेषु स्त्रीणामङ्गेभ्यो निपतित प्रक्षालनात्तरङ्गससक्त, कर्पूररज कर्पूरधूलि गौरीपतिक्रोधस्य शिवकोपरूपस्य हुताशनस्य नेत्राग्ने शान्त्यै शमनाय मग्नस्य दीर्घिकासु निमग्नस्य मनोभवस्य कामस्य भस्म इव रराज शुशुभे । अत्रोत्प्रेक्षाऽलङ्कार ।

भाषा

क्रीडा के आँगन में की बापियो की लहरो पर बहने वाली कामिनियों के स्नान करने स छुटी हुई कपूर की धूली महादेव के क्रोधरूपी अग्नि की शान्ति के लिये (बापियो में) प्रविष्ट कामदेव के शरीर के भस्म के समान शोभित होती थी ।

**अवाप कृष्णागुरुधूपधूम-त्यक्तार्द्रभावेषु कचोच्चयेषु ।**
**आश्चर्यमिन्दीवरलोचनानां नितान्तमार्द्रत्वमयुग्मबाणः ॥७२॥**

अन्वयः

अयुग्मबाणः इन्दीवरलोचनानां कृष्णागुरुधूपधूमत्यक्तार्द्रभावेषु कचोच्चयेषु नितान्तम् आर्द्रत्वम् अवाप (इति) आश्चर्यम्।

व्याख्या

अयुग्मा विषमा बाणा शरा यस्य स अयुग्मबाण काम इन्दीवराणि इव लोचनानि यासान्तास्तासां नीलकमलसदृशनेत्राणां नायिकानां कृष्णोऽगुरुस्तस्याः-

यथा कृष्णा कस्तूर्यगुरुश्च तयोर्धूपस्तज्जन्यधूमेन त्यक्तो निरस्त आर्द्रभावो जलार्द्रभावो यैस्ते तेषु कचानां केशानामुच्चयास्समूहास्तेषु शुष्केषु अपि कामः नितान्तमत्यन्तम् आर्द्रत्वं सरसत्वं स्नेहं प्रीतिम् अवाप। इत्याश्चर्यमाश्चर्यकरम्। कामोद्दीपने केशा अत्यन्तसाहाय्यमाचरन्तीति भावः। अत्र विरोधाभासोऽलङ्कारः।

### भाषा

कामदेव ने कमलनयनी स्त्रियों के कस्तूरीमिश्रित अगर धूप के धूएँ से सूखे हुए केशजालों में अत्यधिक गीलेपन को पाया। यह एक आश्चर्य की बात है। सूखेपन में गीलापन होना विरुद्ध है। इसलिये गीलापन का सरसत्व या प्रेम अर्थ करने से विरोध छूट जाता है। अर्थात् कामनियों के खुले हुए बालों को देखकर कामुकों में विशेष कामोद्दीपन होता है।

**असंनिधानात्कुसुमाकरस्य पुष्पायुधः क्षीणनिषङ्गभारः।**
**वामभ्रुवां सस्मितमल्लिकेषु धम्मिल्लबन्धेषु धृतिं बबन्ध ॥७३॥**

### अन्वयः

पुष्पायुधः कुसुमाकरस्य असंनिधानात् क्षीणनिषङ्गभारः (सन्) वामभ्रुवाम् सस्मितमल्लिकेषु धम्मिल्लबन्धेषु धृतिं बबन्ध।

### व्याख्या

पुष्पायुधः कामः कुसुमाकरस्य वसन्तमासस्याऽसंनिधानादसामीप्यात् क्षीणः कृशः निषङ्गभारः तूणीरभारो "तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः" इत्यमरः। यस्य सः, सम्पूर्णपुष्परूपबाणानामभावात्तूणीरो रिक्त एवाऽऽसीत् वसन्तस्याऽसामीप्यादित्यर्थः। एवम्भूतः सन् वामे वक्रे सुन्दरे वा भ्रुवौ यासान्तासां वामभ्रुवां सस्मितमल्लिका. विकसितमल्लिकापुष्पाणि येषु तेषु धम्मिल्लबन्धेषु संयतकचेषु "अथ धम्मिल्लः संयताः कचाः". इत्यमरः। धृतिं सन्तोषं प्रबन्ध कृतवान्। धम्मिल्ले विकसितमल्लिकापुष्पप्राप्त्या कथञ्चित्कार्यं प्रचलिष्यतीति सन्तोषो जातः कामस्येति भावः।

### भाषा

कामदेव ने, वसन्तऋतु के साथ न होने से, पुष्परूपी बाणों के अभाव से उसके तरकसों का बोझ कम हो जाने के कारण अर्थात् पुष्परूपी बाणों के

न रहने से, टेढ़ी भौंवो वाली नारियों के खिले हुए बेले के फूलों से युक्त केश बन्धों को देखकर ह्रास किया। अर्थात् बेले के फूलों से गुथे केशपाश भी कामोद्दीपक होते हैं।

**नेत्राणि धात्रीतिलकाङ्गनानां तरङ्गलेखाहृतकज्जलानि ।**
**शाणोपलान्दोलननिष्कलङ्क-कामास्त्रमैत्रीं कलयाम्बभूवुः ॥७४॥**

अन्वयः

धात्रीतिलकाङ्गनानां तरङ्गलेखाहृतकज्जलानि नेत्राणि शाणोपलान्दोलननिष्कलङ्ककामास्त्रमैत्रीं कलयाम्बभूवुः ।

व्याख्या

धात्री पृथिवी 'धात्री स्यादुपमातापि क्षितिरप्यामलक्यपि' इत्यमरः । तस्यास्तिलकोऽलङ्काररूपो राजा विक्रमाङ्कदेवः तस्याऽङ्गनानां तरङ्गलेखाभिः दीर्घिकातरङ्गपरम्पराभिराहृतं कज्जलं निरस्तमञ्जनं येभ्यस्तानि नेत्राणि नयनानि शाणोपलेषु निकषपाषाणेषु "शाणस्तु निकषः कषः" इत्यमरः । आन्दोलनेन सङ्घर्षणेन निष्कलङ्कं चमत्कृतं कामास्त्रं तस्य मैत्रीं सादृश्यं कलयाम्बभूवुः वपुः । अत्रोपमालङ्कारभेदः ।

भाषा

पृथ्वी के आभूषणरूप राजा विक्रमाङ्कदेव की स्त्रियों की, वापी में स्नान करने से वापी की लहरों से मिटाए गए काजलो वाली आँखें, सान पर रगड़ने से साफ तथा तीक्ष्ण कामदेव के अस्त्रों की समानता करने लगीं।

**लीलावगाहच्युतकुङ्कुमेषु लक्ष्यस्तदङ्गेषु नखाङ्कमार्गः ।**
**शृङ्गाररत्नाकरतीरभाजां मुद्रां दधे विद्रुमपल्लवानाम् ॥७५॥**

अन्वयः

लीलावगाहच्युतकुङ्कुमेषु तदङ्गेषु लक्ष्यः नखाङ्कमार्गः शृङ्गाररत्नाकरतीरभाजां विद्रुमपल्लवानां मुद्रां दधे ।

### व्याख्या

लीलया क्रीडया अवगाहनेन स्नानेन च्युतानि कुङ्कुमानि केसराणि येभ्यस्ते तेषु तासामङ्गेषु स्त्रीणां शरीरेषु लक्ष्यः स्फुटो नखाङ्कमार्गो नखव्रणपद्धतिः शृङ्गारः शृङ्गाररस एव रत्नाकरस्समुद्रः 'समुद्रोऽब्धिरकूपारः पारावारः सरित्पतिः। रत्नाकरो जलनिधिर्यादःपतिः' इत्यमरः। तस्य तीरं तटं 'कूलं रोधश्च तीरं च प्रतीरञ्च तटं त्रिषु' इत्यमरः। भजन्तीति तेषां शृङ्गार-रत्नाकरतीरभाजां विद्रुमपल्लवानां प्रवालकिसलयानां 'अथ विद्रुमः पुंसि प्रवालं पुंनपुंसकम्' इत्यमरः। 'पल्लवोऽस्त्री किसलयं' इत्यमरः। मुद्रां सादृश्यं वधे उवाह।

### भाषा

क्रीडापूर्वक स्नान से धुले केसर के छूट जाने से उन स्त्रियों के शरीरों पर दीख पड़नेवाला नखक्षतों का समूह, शृङ्गार रस रूपी समुद्र के तट पर मूंगों के वृक्षों के कोमल लाल पत्तों की आकृति धारण करता था।

व्यधित तदनु देव्याः पत्रवल्लीं कपोले
विपुलपुलकलेखादन्तुरः कुन्तलेन्दुः।
प्रतियुवतिभिरर्घे ताडितः पाण्डुगण्ड-
स्थलविलुठितबाष्पव्यक्तिलक्ष्यैः कटाक्षैः॥७६॥

### अन्वयः

तदनु विपुलपुलकलेखादन्तुरः कुन्तलेन्दुः देव्याः कपोले पत्रवल्लीं व्यधित। प्रतियुवतिभिः पाण्डुगण्डस्थलविलुठितबाष्पव्यक्तिलक्ष्यैः कटाक्षैः अर्घे ताडितः।

### व्याख्या

तदनु जलविहारसमाप्त्यनन्तरं विपुला विशाला पुलकलेखा रोमाञ्चपङ्क्ति-स्तया दन्तुरः उन्नतनतः 'दन्तुरस्तून्नतरदे तथोन्नतनते त्रिषु' इति रभसेषु मेदिनी। अत एव रमणीयः कुन्तलेन्दुर्विक्रमाङ्कदेवो देव्याः स्वमहिष्याः कपोले गण्डे 'अपरस्तात्त्विचकुः गण्डौ कपोलौ' इत्यमरः। पत्रवल्लीं पत्रलतां 'वल्ली तु व्रततिर्लता' इत्यमरः। व्यधित स्वहस्तेन निर्मितवान्। एतद्दृष्ट्वा प्रति-

युवतिभि सपत्नीभि पाण्डुगण्डस्थलेषु ईर्ष्यया श्वेतकपोलेषु विलुठित समासक्त यद बाष्प तस्य व्यवस्था आविर्भावेन लब्धा स्फुटीभूता तै कटाक्षं अपाङ्ग-दर्शनं 'कटाक्षोऽपाङ्गदर्शनं' इत्यमर । अर्धे पत्ररचनारूपकार्यमध्ये एव ताडितो बभूव । राज्ञा कृतं पत्ररचन विलोक्य सेर्ष्या अन्यास्सपत्न्यो बभूवुरिति भाव ।

भाषा

इसके अनन्तर अधिक रोमाञ्च से युक्त कुन्तलदेश के चन्द्र विक्रमाङ्कदेव ने अपनी रानी चन्द्रलेखा के गाल पर पत्रलता अर्थात् चन्दन व कस्तूरी से चित्रकारी की । (यह देखकर) चन्द्रलेखा की सौतो ने ईर्ष्या से पीले पडे अपने गालो पर टपके हुए आसुओ की उपस्थिति से प्रत्यक्ष होने वाले अपने कटाक्षो से बीच ही में उसे आहत या व्याकुल कर दिया ।

रचयति कचलीलाबन्धमुत्कन्धरायाः
स्वयमवनिमृगाङ्के कौतुकेन प्रियायाः ।
स्थितमुपचितचिन्तातापताम्यत्कपोल-
ग्लपितकरसरोजस्रस्तराभिः पराभिः ॥७७॥

अन्वयः

उत्कन्धरायाः प्रियायाः अवनिमृगाङ्के कौतुकेन स्वयं कचलीला-बन्धं रचयति (सति) उपचितचिन्तातापताम्यत्कपोलग्लपितकर-सरोजस्रस्तराभिः पराभिः स्थितम् ।

व्याख्या

उत्कन्धराया उन्नमीकृतग्रीवाया 'अथ ग्रीवायां शिरोधिः कन्धरेत्यपि' इत्यमर । प्रियाया स्वप्रियरमण्या अवने पृथिव्या 'पृथिवी पृथ्व्युर्व्यावनिर्मेदिनी मही' इत्यमर । मृगाङ्कश्चन्द्र स्तस्मिश्चन्द्र इवाऽऽह्लादके राजनीति भाव । कौतुकेन कौतूहलेन उत्कण्ठया स्वय कचलीलाबन्धं कचाना केशाना लीलया क्रीडया विलासेन बन्धो रचन तं रचयति कुर्वाणे सति उपचिता प्रवृद्धा चिन्ता तस्यास्ताप तेन ताम्यत् म्लायत्कपोलं तस्य ग्लपित म्लान करसरोज करकमलमेव स्रस्तर "बिछौना" इति हिन्दीभाषायाम् यासान्तास्ताभि पराभि अन्याभि स्त्रीभि प्रतियुवतिभि स्थितमासितम् । प्रतियुवतय करसरोजाश्रित कपोल कृत्वा म्लानचित्ता स्थिता इति भाव ।

### भाषा

गर्दन को ऊँची कर (पीछे की ओर) लटकाने वाली अपनी प्रेयसि वालो की चोटी को, कौतुक से पृथ्वी के चन्द्र राजा विक्रमाङ्कदेव के, गूंथते रहने पर, स्त्रियाँ या अन्य सौतें, बढ़ी हुई चिन्ता के ताप से मुर्झाये गा के अपने मलिन करकमलरूपी बिस्तरोवाली अर्थात् अपने हाथों पर गालो रखने वाली हो गईं। अर्थात् यह देखकर ईर्ष्या से वे अपने म्लान कपोलो अपने हाथों पर रखकर स्थित हो गईं।

मधुसमयविरामक्षामवीर्यस्य शौर्यं
बहुभिरिति चरित्रैः सूत्रयन्पुष्पकेतोः।
शिशिरमिव वमद्भिः प्रेयसीगात्रसङ्गै-
रपि जरठमजैषीद्ग्रीष्मगर्वं नरेन्द्रः ॥७८॥

### अन्वयः

नरेन्द्रः मधुसमयविरामक्षामवीर्यस्य पुष्पकेतोः शौर्यम् इति बहुभिः चरित्रैः सूत्रयन् शिशिरं वमद्भिः प्रेयसीगात्रसङ्गैः जरठम् ग्रीष्मगर्वम् अपि अजैषीत्।

### व्याख्या

नरेन्द्रो विक्रमाङ्कदेवो मधुसमयस्य वसन्तकालस्य विरामेण समाप्त्या क्षामं क्षीणतां प्राप्तं वीर्यं पराक्रमो यस्य स तस्य पुष्पकेतोः कामस्य शौर्यं वीरतामिति पूर्वोक्तैर्बहुभिरनेकैः चरित्रैराचरितैः इत्थैः सूत्रयन् विस्तारयन् शिशिरं शैत्यं वमद्भिरुद्गिरद्भिः प्रकटयद्भिः प्रेयस्यः प्रियास्तासां गात्राणि शरीराणि "गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः" इत्यमरः। तेषां सङ्गास्तैः जरठं कठिनं "कठिनं क्रूरं कठोरं निष्ठुरं दृढम्। जरठं मूर्तिमन्मूर्तम्" इत्यमरः। ग्रीष्मगर्वमपि ग्रीष्मसन्तापदर्पमप्यजैषीत् निरस्तवान्।

### भाषा

राजा विक्रमाङ्कदेव ने वसन्तऋतु के बीत जाने से कमजोर बने का मदेव के पराक्रम को या बल को उपर्युक्त ...

बढ़ाते हुए शैत्य को प्रकट करने वाले अर्थात् ठण्डक पहुँचाने वाले प्रियाओं के ठण्डे शरीरों के सम्पर्क से अत्यन्त कड़े ग्रीष्म ऋतु के अभिमान को अर्थात् अत्यन्त कड़ी गर्मी को भी दूर कर दिया।

इति श्री त्रिभुवनमल्लदेव-विद्यापति-काश्मीरकभट्ट श्री विल्हणविरचिते विक्रमाङ्कदेवचरिते महाकाव्ये द्वादशः सर्गः।

नेत्राब्जाभ्रयुगाङ्कविक्रमशरत्कालेऽत्र दामोदरात्
भारद्वाजबुधोत्तमात्समुदितः श्री विश्वनाथः सुधीः।
चक्रे रामकुबेरपण्डितवरात्सम्प्राप्तसाहाय्यकः
टीकायुग्ममिदं रमाकरुणया सर्गे शुभे द्वादशे॥

ॐ शान्ति शान्ति शान्ति।

महाकविश्रीबिल्हणविरचितं

# विक्रमाङ्कदेवचरितम्

## त्रयोदशः सर्गः

प्रतापमारोप्य परां समुन्नतिं यशः प्रदर्श्येव च दावभस्मभिः ।
भजन्निदाघः कृतकृत्यतामिव स्वपौरुषाविष्करणान्न्यवर्तत ॥१॥

### अन्वयः

निदाघः प्रतापं परां समुन्नतिम् आरोप्य दावभस्मभिः यशः च प्रदर्श्य इव कृतकृत्यतां भजन् इव स्वपौरुषाविष्करणात् न्यवर्तत ।

### व्याख्या

निदाघो ग्रीष्मकालः प्रतापमुष्णत्वं कोशदण्डजं तेजश्च 'स प्रतापः प्रभावश्च यत्तेजः कोशदण्डजम्' इत्यमरः । परामुत्कृष्टां समुन्नतिमुन्नतावस्थामारोप्य प्रतिष्ठाप्य दावो वनाग्निः 'दवदावौ वनारण्यवह्नी' इत्यमरः । तस्य भस्मभिर्धूलिभिः धावल्यात् यशश्च प्रदर्श्य इव प्रकाश्य इव कृतं सम्पादितं कृत्यं कर्तव्यं येन स तस्य भावः कृतकृत्यता तां कृतार्थतां भजन् धर्मोन्निव स्व पौरुषं सन्तापस्तस्याविष्करणात् प्रादुर्भावसम्पादनात् न्यवर्तत विरतोऽभूत् । लोके कस्यचित्पुरुषस्य यशसः प्रतापस्य च यदा प्रकाशो भवति तदा स कृतकृत्यो भवतीति दृश्यते तथैवात्र निदाघस्याऽपीति भावः ।

### भाषा

ग्रीष्म ऋतु अपने प्रताप को अर्थात् गर्मी को पराकाष्ठा तक पहुँचाकर, दावानल में जले पेड़ों की सफेद राख से मानो अपना सफेद यश दिखाकर अर्थात् फैलाकर कृतकृत्य होकर मानो अपने पुरुषार्थ का प्रकट करने से निवृत्त हो गया । अर्थात् अब ग्रीष्म की गर्मी कम होने लगी ।

विधाय तैक्ष्ण्यं गणितान्यहानि स प्रतापहानेः प्रणयित्वमाययौ ।
परोपतापैकपरायणाश्चिरं क्व वा भवन्त्यभ्युदयस्य भूमयः ॥२॥

अन्वयः

सः गणितानि अहानि तैक्ष्ण्यं विधाय प्रतापहानेः प्रणयित्वम् आययौ परोपतापैकपरायणाः क्व वा चिरम् अभ्युदयस्य भूमयः भवन्ति ।

व्याख्या

स निदाघकालः गणितानि अल्पानि अहानि दिनानि न तु बहूनि, तैक्ष्ण्यं सन्तापं विधाय प्रतापस्य सन्तापस्य हानेः न्यूनतायाः प्रणयित्वं विषयत्वमाययौ प्राप्तवान् । अमुमेवार्थमर्थान्तरन्यासेन समर्थयति—परेषामन्येषामुपतापे सन्तापने दुःखसमर्पणे एकपरायणा नितान्तसंलग्नाः जनाः क्व वा कुत्र चिरं बहुकालमभ्युदयस्योन्नतेर्भूमयः स्थानानि भवन्ति जायन्ते ? न कुत्रापि भवन्तीत्यर्थः । अत्रार्थान्तरन्यासनामाऽलङ्कारः ।

भाषा

वह ग्रीष्म ऋतु थोड़े समय तक अपनी तीक्ष्णता दिखाकर अर्थात् अपनी उष्णता से सबको पीड़ित कर प्रताप की क्षीणता का पात्र बन गया अर्थात् उसकी तेजी कम हो गई । केवल दूसरों को पीड़ित करने में ही लगे हुए लोग चिरकाल तक अभ्युदय के पात्र कहाँ होते हैं ? अर्थात् नहीं होते ।

दवानलप्लुष्टवनान्तभस्मभिः क्षमाधराः पाण्डुरुचश्चकासिरे ।
गता इवाङ्कस्थितबालवृक्षक-क्षयोत्थवैराग्यवशात्तपस्विताम् ॥३॥

अन्वयः

दवानलप्लुष्टवनान्तभस्मभिः पाण्डुरुचः क्षमाधराः अङ्कस्थितबालवृक्षकक्षयोत्थवैराग्यवशात् तपस्वितां गताः इव चकासिरे ।

व्याख्या

दवानलेन वनाग्निना 'दवदावौ वनारण्यवह्नी' इत्यमरः । प्लुष्टानि दग्धानि 'प्रुष्टप्लुष्टोषिता दग्धे' इत्यमरः । वनान्तानि तेषां भस्मानि भूतयः धूलयः ताभिः पाण्डुरुचो धवलवर्णाः क्षमाधराः पर्वता अङ्केषु पर्वतमध्यप्रदेशेषु स्थिता

विद्यमानास्समुत्प्रेक्षाः बालवृक्षकाः तनया इव नूतनद्रुमास्तेषां क्षयेण विनाशेन उत्थं जायमानं वैराग्यं विषयवैमुख्यं तस्य वशात् हेतोः तपस्वितां गता इव तपोनिष्ठत्वाद्भस्मलेपनेन धवलास्साधव इव जाता इति भावः। अत्रोत्प्रेक्षालङ्कारः।

## भाषा

दावानल से जले जंगलों की राख से सफेद कान्तिवाले पर्वत, गोद में रहने वाले छोटे-छोटे वृक्षरूपी पुत्रों के नाश से उत्पन्न हुए वैराग्य से मानो तपस्वी बन गये हों ऐसे शोभित होते थे।

**निदाघसम्पादितकार्श्यसम्पदां तरङ्गिणीनां गलिता नितम्बतः।**
**कलप्रलापाः कलहंसपङ्क्तयश्चकासिरे विभ्रममेखला इव ॥४॥**

## अन्वयः

निदाघसम्पादितकार्श्यसम्पदां तरङ्गिणीनां नितम्बतः गलिताः कलप्रलापाः कलहंसपङ्क्तयः विभ्रममेखला इव चकासिरे।

## व्याख्या

निदाघेन ग्रीष्मकालेन सम्पादिता समुत्पादिता कार्श्यसम्पत् अल्पजलत्वं वीचीनामभावश्च यासान्तास्तासां तरङ्गिणीनां नदीनां "अथ नदी सरित्। तरङ्गिणी शैवलिनी" इत्यमरः। नितम्बतः कटिपश्चाद्भागतः अत्र तटप्रदेशात् गलिताः अधःप्रदेशे समागताः कलो मधुरः प्रलापः शब्दः येषान्ते कलप्रलापाः कलहंसाः कादम्बहंसा 'कादम्बः कलहंसः स्यात्' इत्यमरः। तेषां पङ्क्तयः विभ्रममेखला विलासरशना इव चकासिरे शुशुभिरे। अत्र स्त्रीव्यवहारसमारोपात्समासोक्तिरलङ्कारः।

## भाषा

ग्रीष्म ऋतु के कारण कृशता को प्राप्त अर्थात् जिसका जल और पाट कम हो गया है ऐसी नदियों के नितम्ब अर्थात् तट से नीचे की ओर उतरे हुए सुन्दर शब्द करने वाले हंसों की पंक्तियाँ नदियों की करधनियों के समान शोभित होती थीं। अर्थात् कृश हो जाने से जैसे करधनी शब्द के साथ नीचे गिर पड़ती है उसी प्रकार सुन्दर शब्द करने वाली कल हंसों की पंक्ति तट से नीचे की ओर उतर पड़ी।

**रवेः समस्तक्षितिमध्यगं रसं निपीय पीनत्वमतीव बिभ्रतः ।**
**भरेण वाजिष्विव मन्दगामिषु क्रमेण दैर्घ्यं दिवसाः प्रपेदिरे ॥५॥**

अन्वयः

समस्तक्षितिमध्यगं रसं निपीय अतीव पीनत्वं बिभ्रतः रवेः भरेण वाजिषु मन्दगामिषु (सत्सु) इव दिवसाः क्रमेण दैर्घ्यं प्रपेदिरे ।

व्याख्या

समस्ता सम्पूर्णा क्षितिः पृथ्वी तस्या मध्ये गच्छतीति तम् समस्तक्षितिमध्यगं सम्पूर्णपृथ्वीगतं रसं जलं 'रसः स्वादे जले वीर्ये' इति हैमः । निपीय आकृष्य जलस्य संशोषणं कृत्वा अतीव नितान्तं पीनत्वं स्थूलत्वं बिभ्रतः धारयतो रवेस्सूर्यस्य भरेण सूर्यगतजलभारेण वाजिषु अश्वेषु मन्दगामिषु अलसगतिषु सत्सु इव दिवसा दिनानि क्रमेण शनैः-शनैः दैर्घ्यं विशालतां प्रपेदिरे प्राप्ताः ।

भाषा

समग्र पृथ्वी में के जल को सोख कर अत्यधिक स्थूल भए हुए सूर्य के बोझे से मानो घोड़ों के धीरे धीरे चलने से दिन धीरे-धीरे बड़े होने लगे ।

**न गन्तुमन्याः पदमप्यपारयन् नितान्तदीर्घं तनिमानमागताः ।**
**हिमाद्रिजाताभिरलम्भि केवलं नदीभिरब्धेः परिरम्भणोत्सवः ॥६॥**

अन्वयः

नितान्तदीर्घं तनिमानम् आगताः अन्याः पदम् अपि गन्तुम् न अपारयन् । केवलं हिमाद्रिजाताभिः नदीभिः अब्धेः परिरम्भणोत्सवः अलम्भि ।

व्याख्या

नितान्तदीर्घमत्यन्तं तनिमानं कृशत्वमागताः प्राप्ता अन्या नद्यः पदमपि पदन्यासप्रमाणमपि गन्तुं यातुं न अपारयन् असमर्था बभूवुः केवलं हिमाद्रेः हिमालयात् जाताभिरुत्पन्नाभिर्नदीभिः तरङ्गिणीभिरेव नान्यनदीभिरब्धेस्समुद्रस्य परिरम्भणोत्सव आलिङ्गनोत्सवोऽलम्भि प्रापि । नदीषु नायिका व्यवहार-समारोपादत्र समासोक्तिरलङ्कारः ।

भाषा

अत्यधिक सूक्ष्मता को प्राप्त अर्थात् मानो सूख जाने से जिनका पाट छोटा हो गया है ऐसी अन्य नदियाँ तो थोड़ा भी आगे बढ़ने में असमर्थ हो गईं। केवल हिमालय पर्वत से निकली नदियाँ ही अपने पति समुद्र के आलिङ्गन का उत्सव मना सकी अर्थात् समुद्र में जाकर मिल सकी।

तुषारशैलद्रवनिर्झरोदकं समाहरन्नुत्तरभूमिनिम्नगाः ।
हिमोपचारार्थमनेकवाहिनी-वियोगतप्तस्य सरित्पतेरिव ॥७॥

अन्वयः

उत्तरभूमिनिम्नगाः अनेकवाहिनीवियोगतप्तस्य सरित्पतेः हिमोपचारार्थम् इव तुषारशैलद्रवनिर्झरोदकं समाहरन् ।

व्याख्या

उत्तरभूमेः उत्तरदेशस्य निम्नगा गङ्गादिनद्यः 'स्रवन्ती निम्नगापगा। गङ्गा विष्णुपदी' इत्यमरः। अनेका नाना वाहिन्यो नद्यः तासां वियोगेन विरहेण, तप्तस्याऽऽर्तस्य सरित्पतेस्समुद्रस्य हिमस्तुषारः 'तुषारस्तुहिनं हिमम्', इत्यमरः। शीतल उपचार उपायस्तदर्थं तुषारस्य हिमस्य शैलः पर्वतस्तस्य 'शैलवृक्षौ नगावगौ' इत्यमरः। द्रवेण निर्झरा वारिप्रवाहास्तेषां 'वारिप्रवाहो निर्झरो झरः' इत्यमरः। उदकं जलं समाहरन् समानयन् ।

भाषा

उत्तर प्रदेश की गङ्गादि नदियाँ अनेक नदियों के वियोग से पीड़ित नदियों के पति समुद्र का मानो शीतोपचार करने के लिये हिमालयपर्वत के बरफ के गलने से बने झरनों के जल को ला रही थीं।

प्रबुद्धकार्श्याः परितापसङ्कुचत्-सपङ्कपङ्केरुहिणीदलाङ्किताः ।
दशामलब्धाब्धिसमागमाश्चिरं वियोगयोग्यामभजन्त निम्नगाः ॥८॥

अन्वयः

अलब्धाब्धिसमागमाः प्रबुद्धकार्श्याः परितापसङ्कुचत्सपङ्कपङ्केरुहिणीदलाङ्किताः निम्नगाः चिरं वियोगयोग्यां दशाम् अभजन्त ।

व्याख्या

अलब्धः अप्राप्तः अब्धेस्समुद्रस्य 'समुद्रोऽब्धिरकूपारः' इत्यमरः । समागमो संगमो याभिस्ताः प्रवृद्धं प्रवृद्धं कार्श्यं तनुत्वं यासान्ताः परितापेन ग्रीष्मसन्तापेन सङ्कुचन्ति सपङ्कानि जलादर्शनात् कर्दमान्वितानि पङ्केरुहिणीनां कमलिनीनां दलानि पत्राणि तैरन्यत्र चन्दनादिपङ्कलिप्तैः कमलिनीपत्रैरङ्किता युक्ता निम्नगा नद्यः चिरं बहुकालं वियोगस्य कान्तविरहस्य योग्यामनुकूलां दशामवस्थामभजन्त प्रापुः । अत्र समासोक्तिरलङ्कारः ।

भाषा

समुद्र का सगम न प्राप्त कर सकने वाली, अत्यन्त सूख गई हुई और गर्मी से कीचड से सने सूखे कमलिनी के पत्तो से शोभित नदियाँ चिरकाल तक विरहावस्था के योग्य दशा को प्राप्त हुई । अर्थात् ठीक वैसे ही जैसे कोई विरहिणी अपने पति का संयोग न प्राप्त कर दुबली हो जाती है और काम सन्ताप से पीडित होकर शैत्य के लिये चन्दन का लेप तथा कमल के पत्ते धारण कर अपनी विरहावस्था को प्रकट करती है ।

दृशं प्रपापालिकया प्रकाशिते न्यवेशयत्कुम्भधिया कुचद्वये ।
विवेद पान्थः कलशात्परिच्युतां न वारिधारां मुखसङ्गिनीमपि ॥९॥

अन्वयः

पान्थः प्रपापालिकया प्रकाशिते कुचद्वये कुम्भधिया दृशं न्यवेशयत् कलशात्परिच्युतां मुखसङ्गिनीम् अपि वारिधारां न विवेद ।

व्याख्या

पान्थः पथिकः 'पान्थः पथिक इत्यपि' इत्यमरः । प्रपा पानीयशालिका 'प्रपा पानीयशालिका' इत्यमरः । तस्याः पालिका तया कान्तया प्रकाशिते प्रदर्शिते कुचद्वये स्तनयुगले कुम्भधिया घटबुद्धया दृशं नयनं न्यवेशयत् निवेशितवान् कलशात् घटात् परिच्युतां पतितां मुखे आनने सङ्गिनी समासक्ता ताम् अपि वारिधारां जलधारां न विवेद न ज्ञातवान् । तदीयसौन्दर्यं मुग्धोऽभूदित्यर्थः । कुचयोः कुम्भसादृश्यव्यञ्जनादुपमालङ्कारध्वनिः ।

भाषा

कोई राही, पौसरेवाली द्वारा प्रकट किये हुए उसके दोनों स्तनों को घडो की बुद्धि से देखने लगा । पानी के घडे में से निकली और मुख में पडी

जलधारा को भी वह न जान सका। अर्थात् पोसरे वाली के बड़े २ स्तनों को देखने में इतना तल्लीन हो गया कि पोसरे पर पानी पीने पर भी उसे पानी पीने का ज्ञान न हुआ।

**पपुः प्रपापालिकया समर्पितं चिरेण पान्थाः कथमप्यनादरात्।**
**तदीयबिम्बाधरपानलम्पटाः सपाटलामोदमपि प्रपाजलम् ॥१०॥**

### अन्वयः

तदीयबिम्बाधरपानलम्पटाः पान्थाः प्रपापालिकया समर्पितं सपाटलामोदम् अपि प्रपाजलं चिरेण कथम् अपि अनादरात् पपुः।

### व्याख्या

तदीयबिम्बाधरस्य प्रपापालिकाबिम्बाधरस्य पाने लम्पटाः साभिलाषाः पान्थाः पथिकाः प्रपापालिकया पानीयशालिकानियुक्तस्त्रिया समर्पितं दत्तं पाटलपुष्पाणामामोदेन सुगन्धेन 'आमोदो गन्धहर्षयोः' इति मेदिनी। तत्सहितमपि प्रपाजलं पानीयशालिकास्थितमम्बु चिरेण बहुकालानन्तरं कथमपि कृच्छ्रादपि अनादरादन्यमनस्कतया पपुः पीतवन्तः। सुरभिजलापेक्षया प्रपापालिकाधररसोत्कर्षव्यञ्जनाद् व्यतिरेकालङ्कारध्वनिः।

### भाषा

पोसरे वाली के लाल अधरोष्ठ के पान के लिये लालायित राहीगण ने पोसरे वाली द्वारा दिये हुए गुलाब के गन्ध से सुगन्धित पोसरे के जल को बहुत देरी में किसी प्रकार मन बिगाड कर पीया।

**निरन्तराघट्टितपाटलाधराः क्रमान्निदाघस्य घनोष्मसङ्गिनः।**
**व्यरंसिषुः श्वाससमीरणा इव प्रबुद्धदावानलबन्धवोऽनिलाः ॥११॥**

### अन्वयः

निरन्तराघट्टितपाटलाधराः निदाघस्य घनोष्मसङ्गिनः प्रबुद्धदावानलबन्धवः अनिलाः श्वाससमीरणाः इव क्रमात् व्यरंसिषुः।

### व्याख्या

निरन्तरमविच्छिन्नतया घट्टिता संघर्षमापन्ना पाटला पाटलापुष्पाणि ताम्रा धरा ओष्ठा निदाघस्य ग्रीष्म ऋतोः सम्बन्धिनो घनोष्मणः अत्यन्तसन्तापस्य

सङ्गिन सन्तापयुक्ता अतएव प्रवृद्धस्य प्रवृद्धस्य दावानलस्य वनवह्नेर्वन्धव सदृशा अनिला वायव श्वाससमीरणा इव निश्वासवायव इव क्रमात् क्रमशो व्यरसिषु विरता बभूवु । पाटलपुष्पाणा रक्तत्वात् दाववन्हिसादृश्य वायोर्युक्तमेव ।

भाषा

गुलाब के वृक्षो से लगातार टकराने से लाल रंग के गुलाब के फूलो को धारण करने वाले, ग्रीष्म ऋतु की अत्यधिक गर्मी से गरम भये हुए अतएव भभकी हुई दावाग्नि के समान वायु, निश्वास वायु के समान धीरे २ कम होने लगे । अर्थात्-जिस प्रकार दावाग्नि के जलते हुए-लालरंग के कोयल गरम वायु के साथ इधर उधर उडते हैं-वैसे ही-गुलाब के लालरंग के फूलो के वायु के झोके से उनके साथ उडते रहने से ये ग्रीष्म ऋतु के वायु, धधकती हुई दावाग्नि के समान थे ।

गतायुषि ग्रीष्ममहोष्मडम्बरे दिनेऽपि चञ्चत्पुलकैर्विलासिभिः ।
कुचस्थलीचन्दनलेपपङ्किल-प्रियाङ्कपालीसुखमन्वभूयत ॥१२॥

अन्वयः

ग्रीष्ममहोष्मडम्बरे गतायुषि चञ्चत्पुलकैः विलासिभिः कुचस्थलीचन्दनलेपपङ्किलप्रियाङ्कपालीसुखम् अन्वभूयत ।

व्याख्या

ग्रीष्मस्य महोष्मा अत्युष्णत्व तस्य डम्बरमभिमानस्तस्मिन गतायुषि समाप्ति गते सति चञ्चन उल्लसन् पुलको रोमाञ्चो येषान्ते तादृश चञ्चत्पुलका 'पुमान्स्त्रियेति एकशेष' तै चञ्चत्पुलकै विलासिभि कुचस्थल्या स्तनस्थल्या चन्दनस्य लेपस्तेन पङ्किल कर्दमयुक्त प्रियस्य प्रियायाश्चाङ्क तस्य पाली स्थान तस्यास्सुखमन्वभूयत गृहीतम् ।

भाषा

ग्रीष्म ऋतु की गर्मी की अत्यधिकता के अभिमान के समाप्त हो जाने पर रोमाञ्चो से युक्त कामी और कामिनियो ने कुच स्थान पर चन्दन के लेप से लिपे अपनी प्रिया और प्रिय की गोद में लेटे रहने के सुख का अनुभव किया ।

परस्परश्वाससमीरघट्टन-त्रुटत्कपोलस्थलघर्मबिन्दुभिः ।
अपि प्रदोषावसरे विलासिभिः करम्बितान्योन्यभुजैरसुप्यत ॥१३॥

अन्वयः

परस्परश्वाससमीरघट्टनत्रुटत्कपोलस्थलघर्मबिन्दुभिः करम्बितान्योन्यभुजैः विलासिभिः प्रदोषावसरे अपि अशुप्यत ।

व्याख्या

परस्परस्य श्वाससमीरो निःश्वासवायुस्तस्य घट्टनेन संघर्षणेन त्रुटन्तो विलुप्यन्तः कपोलस्थलस्य गण्डस्थलस्य घर्मबिन्दवो श्रमजलकणाः येषान्ते ताश्च तैः करम्बिताः परस्परं संश्लिष्टाः अन्योन्यभुजा येषां यासाञ्च ते ताश्च तैः विलासिभिः कामुकैः "पुमान्स्त्रियेत्येकशेषः" प्रदोषस्य रजनीप्रारम्भस्य सायं समयस्यावसरेऽपि 'प्रदोषो रजनीमुखम्' इत्यमरः । अशुप्यत सुप्तम् ।

भाषा

परस्पर एक दूसरे के श्वास वायु के लगने से एक दूसरे के कपोलस्थल पर आई हुई पसीनों की बूँदों को सुखा देने वाले और परस्पर अपनी भुजाओं से एक दूसरे को लपट कर पड़े हुए कामुक लोग सायंकाल के समय में भी सोये पड़े थे ।

**अपङ्कजस्रस्तरमस्तचन्दनं विलाससंमर्दममन्दमाश्रिताः ।**
**शनैर्निदाघस्य घनामदर्शयन् प्रतापहानिं हरिणायतेक्षणाः ॥१४॥**

अन्वयः

हरिणायतेक्षणाः अपङ्कजस्रस्तरम् अस्तचन्दनं विलाससंमर्दम् अमन्दम् आश्रिताः (सत्यः) निदाघस्य घनां प्रतापहानिं शनैः अदर्शयन् ।

व्याख्या

हरिणस्येवाऽऽयते ईक्षणे नेत्रे यासान्ता मृगविशाललोचनाः पङ्कजं कमलमेव स्रस्तरं तल्पं, नास्ति यस्मिन्स तमथवा क्रियाविशेषणमस्तं रहितं चन्दनं यस्मिन्स तं यद्वा क्रियाविशेषणं विलासस्य रतिविहारस्य संमर्दं बाहुल्यममन्दं यथा स्यात्तथा आश्रिता भजमानास्सत्यः निदाघस्य ग्रीष्मस्य घनां सान्द्रां निरन्तरां प्रतापस्य प्रभावस्य हानिं राहित्यं शनैर्मन्दं मन्दमदर्शयन् प्रकटितवत्यः ।

भाषा

हरिण के समान बड़ी२ आँखों वाली नारियों ने बिना कमल के बिस्तरे

के, बिना चन्दन लगाए, अत्यधिक रति विहार के आनन्द का उपभोग करने में लगे रहकर, क्रमशः ग्रीष्म ऋतु की अत्यधिक निस्तेजता को दरसाया।

अपश्यदस्मिन्समये महीपतिः पयोदखण्डं मिलितार्कमण्डलम्।
सकुण्डलं वारिमुचामनेहसः कुतोऽपि मूर्धानमिवार्धनिर्गतम् ॥१५॥

अन्वयः

अस्मिन् समये महीपतिः मिलितार्कमण्डलं पयोदखण्डं वारिमुचाम् अनेहसः सकुण्डलं मूर्धानं कुतः अपि अर्धनिर्गतम् इव अपश्यत्।

व्याख्या

अस्मिन्समये निदाघसमयावसाने महीपतिर्नृपः मिलितं संयुक्तमर्कमण्डलं सूर्यमण्डलं यस्मिन्तत् पयोदस्य मेघस्य खण्डं शकलं 'भित्तं शकलखण्डे वा' इत्यमरः। वारिमुचां मेघानामनेहसः कालस्य 'कालो दिष्टोऽप्यनेहापि' इत्यमरः। कुण्डलेन सहितं सकुण्डलं मूर्धानं शीर्षं 'शिरः शीर्षं मूर्धा ना' इत्यमरः। कुतोऽपि कस्मादपि प्रदेशादर्धनिर्गतं बहिर्निःसृतार्धभागमिव अपश्यत्। अत्रोत्प्रेक्षालङ्कारः।

भाषा

ग्रीष्म ऋतु के समाप्त होने के समय में राजा विक्रमाङ्कदेव ने, सूर्य की किरणों से युक्त मेघ के एक टुकडे को, मानो मेघों के समय के अर्थात् वर्षा ऋतु के चमकते हुए कुण्डलों से युक्त मस्तक का कहीं से आधा निकला हुआ भाग देखा।

निदाघनिःशोषिततोयसम्पदः समुद्धृतं वारिदिदृक्षया सुरैः।
नभःस्रवन्त्या इव पङ्कमङ्कतः क्षमापतिर्बालपयोदमैक्षत ॥१६॥

अन्वयः

क्षमापतिः निदाघनिःशोषिततोयसम्पदः नभःस्रवन्त्याः अङ्कतः वारिदिदृक्षया सुरैः समुद्धृतं पङ्कम् इव बालपयोदम् ऐक्षत।

व्याख्या

क्षमायाः पृथिव्याः 'क्षमा तितिक्षा पृथ्वी च' इति धरणिः। पतिः क्षमापतिर्नृपो विक्रमाङ्कदेवः निदाघेन ग्रीष्मेण निःशोषिता समाप्तिं गता तोयसम्पत्

जलसम्पत्ति. यस्यास्सा तस्या नभस्तवन्त्याः सुरनद्या अङ्कुत मध्यात् वारि इसया जलं वर्तते नवेति विलोकनेच्छया सुरैर्देवैः समुद्धृत निष्कासित पङ्क कर्दममिव 'पङ्कोऽस्त्रीशादकर्दमौ' इत्यमरः। बालपयोद श्याम नवीनमेघखंड दृष्टवान्।

### भाषा

पृथ्वीपति विक्रमाङ्कदेव ने उस मेघ के टुकड़े को ग्रीष्म ऋतु के कारण समाप्तप्राय जलसम्पत्ति वाली आकाशगङ्गा के मध्य से, जल है या नही यह देखने की इच्छा से देवताओं द्वारा निकाले हुए कीचड के समान देखा।

शनैरवाप्तोपचयं पयोमुचं विलोक्य कौतूहललोललोचनाम् ।
अथाङ्कपर्यङ्ककृतास्पदां प्रियामवोचत क्ष्मातलमीनलाञ्छनः ॥१७॥

### अन्वयः

अथ क्ष्मातलमीनलाञ्छनः शनैः अवाप्तोपचयं पयोमुचं विलोक्य अङ्कपर्यङ्ककृतास्पदां कौतूहललोललोचनां प्रियाम् अवोचत।

### व्याख्या

अथेत्यनन्तर क्ष्मातलस्य भूतलस्य मीनलाञ्छन कामस्वरूपो नृप विक्रमाङ्कदेव शनैः मन्द मन्दमवाप्त प्राप्त उपचयो वृद्धिर्येन त त पयोमुच मेघं विलोक्य दृष्ट्वा अङ्कमेव उत्सङ्ग एव पर्यङ्कस्तस्मिन् कृतमास्पद स्थान यया सा ता कौतूहलेन उत्कण्ठया लोले चञ्चले लोचने नेत्रे यस्यास्सा तां प्रियां स्वकान्तामवोचत उक्तवान् वक्ष्यमाणप्रकारेणेत्यर्थः ।

### भाषा

इसके अनन्तर पृथ्वी पर के कामदेव राजा विक्रमाङ्कदेव ने धीरे २ बढ़े होने वाले मेघ को देख कर उसके गोद रूपी पलङ्ग पर बैठी हुई, कुतूहल से चञ्चल नेत्र वाली अपनी प्रिया चन्द्रलेखा से कहा।

नभस्तलारण्यतमालमालिका महीभृतां मूर्धसु मूर्धजावलिः ।
तडित्प्रदीपाञ्जनपुञ्जसंनिभा विभाव्यतां सुभ्रु नवाभ्रमण्डली ॥१८॥

### अन्वयः

हे सुभ्रु नवाभ्रमण्डली नभस्तलारण्यतमालमालिका महीभृतां मूर्धसु मूर्धजावलिः तडित्प्रदीपाञ्जनपुञ्जसंनिभा विभाव्यताम्

व्याख्या

हे सुभ्रु सुन्दरभ्रूयुक्ते नवाभ्रमण्डली नवीनमेघमण्डली नभस्तलमेव गगनतलमेवारण्य वन तस्य तमालवृक्षाणा मालेव मालिका श्रेणि श्यामत्वात्सादृश्येनाभेद, महीभृता पर्वताना मूर्धसु शिरस्सु मूर्धजाना केशाना कुन्तला 'मूर्धजात्वस्त्रश्चिकुरा' इति वुर्गं । आवलि पङ्क्ति, तडिदेव विद्युदेव 'तडित्सौदामनीविद्युत्' इत्यमर । प्रदीपस्तस्याञ्जनपुञ्जसनिभा अञ्जनसमूहसमा सर्वत्र कृष्णत्वमेव साधर्म्यमिति विभाव्यता विचार्यता ज्ञायताम् । अत्र मालारूपकालङ्कार ।

भाषा

हे सुन्दर भौंवो वाली चन्द्रलेखा ! इस नूतन मेघाडम्बर को आकाशरूपी जङ्गल में उत्पन्न होने वाले कृष्ण रंग के तमालवृक्षो की कतार, पर्वतो के मस्तको पर की (काली) केशपंक्ति तथा बिजली रूपी दीपक के कज्जल का समूह समझो।

**घनोपरोधात्तरलाक्षि लक्ष्यते मलीमसं मण्डलमुष्णदीधितेः ।**
**क्षणप्रभादीपसमुत्थकज्जल-ग्रहोत्कवर्षार्पितकर्परोपमम् ॥१६॥**

अन्वय.

हे तरलाक्षि घनोपरोधात् उष्णदीधितेः मलीमस मण्डल क्षणप्रभादीपसमुत्थकज्जलग्रहोत्कवर्षार्पितकर्परोपम लक्ष्यते ।

व्याख्या

तरले चञ्चले अक्षिणी नयने यस्यास्सा तत्सम्बोधने हे तरलाक्षि घनाना मेघानामुपरोधादवरोधादाच्छादनादुष्णदीधितेरुष्णकिरणस्य सूर्यस्य मलीमस मलिन 'मलीमस तु मलिन' इत्यमर । मण्डल क्षणप्रभा विद्युदेव दीपस्तेन समुत्थ निस्सृत्योर्ध्वं गत यत्कज्जल तस्य ग्रहे ग्रहणे उत्का उत्कण्ठिता या वर्षा वर्षर्तु एवं नायिका तया अर्पित उपरि संरोपित कर्पर । कर्परस्तु कटाहे स्यादछत्रभेदकपालयो' इति हैम । आच्छादनं तस्योपमा सादृश्यं यस्य तत् लक्ष्यते दृश्यते । अत्रोपमालङ्कार ।

भाषा

हे चञ्चल नेत्र वाली चन्द्रलेखा मेघो के छा जाने से सूर्य का मलिन मण्डल

विजली रूपी दीप से उत्पन्न कज्जल को लेने के लिये उत्सुक वर्षा रूपी नायिका द्वारा लगाई हुई लोहे की ढकनी के समान दीख पड़ता था। अर्थात् कजरवटा के समान दिखाई देता था।

**मृगाक्षि पश्य प्रसभं नभश्चरी-विलासकृष्णागुरुधूपमण्डलैः।**
**करम्बितः षट्पदमेचकैरिव, प्रयाति सद्यः प्रचुरत्वमम्बुदः ॥२०॥**

अन्वयः।

हे मृगाक्षि अम्बुदः षट्पदमेचकैः नभश्चरीविलासकृष्णागुरुधूपमण्डलैः करम्बितः इव सद्यः प्रचुरत्वं प्रयाति प्रसभ पश्य।

व्याख्या

हे मृगाक्षि हरिणनयने अम्बुदो मेघ षट्पदा भ्रमरा 'भृङ्गषट्पदभ्रमरालय' इत्यमरः। इव मेचका कृष्णास्तं नभश्चरीणामप्सरसां विलासकृष्णागुरुसम्बन्धि-धूपसमूहं करम्बित' युक्त प्रवर्धित इव सद्य तत्क्षणमेव प्रचुरत्वं प्रयाति बाहुल्यं आप्नोति प्रसभ बलात् अवश्यमेव पश्य विलोकयैन मेघम्।

भाषा

हे मृगनयनी! यह मेघ मानो भौंरा के ऐसे काले अप्सराओं के सुगन्धित कस्तूरी तथा अगर के धूओं के समूह से वृद्धि को प्राप्त भया हुआ, शीघ्रता से बड़ा होता जा रहा है, इसे अवश्य देखो।

**अनेन नूनं जलधेः समुद्धृतं विचित्ररत्नाङ्कुरदन्तुरं पयः।**
**अनेकवर्णाश्रितमन्यथा कथं पयोमुचा निर्मितमिन्द्रकार्मुकम् ॥२१॥**

अन्वयः।

अनेन जलधेः विचित्ररत्नाङ्कुरदन्तुरं पयः नूनं समुद्धृतम्। अन्यथा पयोमुचा अनेकवर्णाश्रितम् इन्द्रकार्मुकं कथं निर्मितम्।

व्याख्या

अनेन मेघेन जलधे समुद्रात् विचित्रा नानाविधवर्णा रत्नाङ्कुरा 'अंकुरोऽभिनवोद्भिदि' इत्यमरः। तैर्दन्तुरं मनोज्ञ पयो जलं नूनं समुद्धृतं समाकृष्टम् यथा रत्नाङ्कुराश्रितं जलं मेघेन माकृष्टं स्यात्तर्हि पयोमुचा मेघेन अनेकवर्णं रक्त-कृष्णपीतवर्णैरञ्चितं युक्तं इन्द्रस्य कार्मुकं धनु 'इन्द्रायुधं शक्रधनुस्तदेव ऋजु-रोहितम्' इत्यमरः। कथं निर्मितं विहितम्। अतोऽप्रेक्षालङ्कारः।

भाषा

इस मेघ ने निश्चय ही रंग बिरंगे रत्नों के अंकुरों से शोभित समुद्र के जल का ग्रहण किया है। अगर ऐसा न होता तो यह अनेक रंग के इन्द्रधनुष को कैसे बनाता।

ध्रुवं दिवि ग्रासगृहीतपन्नग-स्फुरत्फणारत्नमयूखकन्दलैः।
घनोन्मुखानां शिखिनां मुखोद्गतैरकारि शातक्रतवं शरासनम्॥२२॥

अन्वयः

दिवि घनोन्मुखानां शिखिनां मुखोद्गतैः ग्रासगृहीतपन्नगस्फुरत्फणारत्नमयूखकन्दलैः शातक्रतवं शरासनम् ध्रुवं अकारि।

व्याख्या

दिवि आकाशे घनोन्मुखानां मेघदर्शनप्रवणानां शिखिनां मयूराणां मुखेभ्य उद्गतानि निस्सृतानि तैः ग्रासे गृहीता पन्नगास्सर्पाः 'उरगः पन्नगो भोगी' इत्यमरः। तेषां स्फुरन्ति फणारत्नानि तेषां मयूखकन्दलैः किरणसमूहैः शतक्रतोरिन्द्रस्यदं शातक्रतवं शरासनं धनुर्ध्रुवमकारि कृतम्।

भाषा

आकाश में मेघों को देखकर ऊपर मुख करने वाले मयूरों के मुखों से निकले हुए, खाने के लिए पकड़े हुए सर्पों की फणों में के रत्नों के किरण समूहों से निश्चय ही इन्द्रसम्बन्धि धनुष अर्थात् इन्द्रधनुष बनाया गया है।

नितम्बबिम्बेषु वसुन्धराभृतां घनाः स्फुरन्नीलदुकूलविभ्रमाः।
निपत्य वीथीषु किरातवेश्मनां हृताच्छभल्लप्रतिमल्लतां गताः॥२३॥

अन्वयः

वसुन्धराभृतां नितम्बबिम्बेषु स्फुरन्नीलदुकूलविभ्रमाः घनाः किरातवेश्मनां वीथीषु निपत्य हृताच्छभल्लप्रतिमल्लतां गताः।

व्याख्या

वसुन्धरां पृथ्वीं बिभ्रतीति धारयन्तीति वसुन्धराभृतस्तेषां पर्वतानां नितम्बबिम्बेषु कटकेषु कटिपश्चाद्भागेषु। च 'पश्चान्नितम्बः स्त्रीकट्याः' "कटकोऽस्त्री-

नितम्बोऽद्रे" इत्युभयत्राऽमर । स्फुरन्त्यमलकृत नील श्याम दुकूल तस्य विभ्रमो विलासो येषु ते स्फुरन्नीलदुकूलविभ्रमा—नीलवस्त्रसदृशा घना मेघा किरातानां वेश्मानि गृहाणि 'गृह गेहोदवसित वेश्म सद्म' इत्यमर । तेषा वीथीषु मार्गेषु 'वीथी पङ्क्तौ गृहाङ्गे च रूपकान्तरवत्मनो' इति मेदिनी। निपत्य प्राप्य हता मारिता अच्छभल्ला भल्लुका 'ऋक्षाच्छभल्लभल्लूका' इत्यमर । तेषा प्रतिमल्लता सादृश्य गता प्राप्ता ।

भाषा

पर्वतो के कटक प्रदेश में मध्य में कटी में चमकने वाले नीले रग के वस्त्र की शोभा देन वाले मेघ भिल्ल लोगो के घरो के मार्गों में प्राप्त होकर मारे हुए (काले रग के) भालुओ की समानता को प्राप्त करते है।

अकृत्रिमाः काण्डपटाः पयोमुचस्तडिद्वधूलास्यरहस्यभङ्गिषु ।
निदाघतप्ते नभसि स्फुरन्त्यमी गलज्जलार्द्रासदृशाः कृशोदरि ।।२४।।

अन्वयः

हे कृशोदरि पयोमुचः तडिद्वधूलास्यरहस्यभङ्गिषु अकृत्रिमाः काण्ड-पटाः (प्रतीयन्ते) निदाघतप्ते नभसि अमी गलज्जलार्द्रा सदृशाः स्फुरन्ति।

व्याख्या

कृश तनु उदर यस्यास्सा तत्सम्बोधने हे कृशोदरि पयोमुच मेघा तडिदेव वधू स्त्री तस्या लास्य नृत्यं 'लास्य नृत्यं च नर्तने' इत्यमर । तस्य रहस्य-भङ्गिषु अनिर्वचनीयविलासास्तासु अकृत्रिमा स्वाभाविका काण्डपटा जवनिका प्रतीयन्ते । निदाघेन ग्रीष्मेण तप्ते सतप्ते नभसि आकाशे अमी गलद् जल यस्य एवम्भूता जलार्द्रा व्यजनानि तानिस्सदृशा गलज्जलार्द्रासदृशा स्फुरन्ति प्रतीयन्ते ।

भाषा

हे कृश उदरवाली चन्द्रलेखा, बिजली रूपी स्त्री के नाच के वर्णनीय गुप्त विलासो के लिए स्वाभाविक परदे का काम करने वाले ये मेघ ग्रीष्म से तपे आकाश में पानी से भीगे पखो के ऐसे भासित होते हैं।

अदभ्रमभ्रोपलपट्टकेषु ये शितीक्रियन्ते मदनेन पत्रिणः ।
तडिल्लता तद्विरूपोत्थपावक-स्फुलिङ्गमङ्गी ललिताङ्गि सेवते ।।२५।।

अन्वयः

हे ललिताङ्गि मदनेन अभ्रोपलपट्टकेषु ये पत्रिणः अदभ्र शितीक्रियन्ते, तडिल्लता तन्निकषोत्थपावकस्फुलिङ्गभङ्गीं सेवते।

व्याख्या

हे ललिताङ्गि सुन्दराङ्गि मदनेन कामेन अभ्राणि मेघा एव 'अभ्र मेघो वारिवाहः' इत्यमरः। उपलपट्टिकास्तीक्ष्णीकरणोपयोगिशिलास्तेषु ये पत्रिण बाणा अदभ्र बहुलम् अदभ्र बहुल बहु इत्यमर। शितीक्रियन्ते तीक्ष्णीक्रियन्ते, तडिल्लता विद्युल्लता तेषां बाणानां निकषेण घर्षणेन उत्था उत्पन्ना पावकस्फुलिङ्गा वह्निकणा 'त्रिषु स्फुलिङ्गोऽग्निकण' इत्यमर। तेषां भङ्गीं सारूप्य सेवते समाश्रयते।

भाषा

हे सुन्दर अवयव वाली चन्द्रलेखा, कामदेव द्वारा जो बाण मेघ रूपी सान देने के पत्थर पर अधिक तीक्ष्ण किये जाते हैं उस सान देने के पत्थर से उत्पन्न आग की चिनगारियों की समानता को बिजली धारण करती है।

**अमी गृहीत्वेव पयोधिमध्यग-क्षमाधरक्षेमकथामुपागताः।**
**घनाः समारब्धशिखण्डिताण्डवं विमुद्रयन्ति ध्वनिमद्रिसानुषु ।२६।**

अन्वयः

अमी घनाः पयोधिमध्यगक्षमाधरक्षेमकथां गृहीत्वा इव अद्रिसानुषु उपागताः समारब्धशिखण्डिताण्डवं ध्वनिं विमुद्रयन्ति।

व्याख्या

अमी एते घना मेघा पयोधेस्समुद्रस्य मध्यगा मध्ये वर्तमाना इन्द्रकर्तृकपक्षकर्तनभयात्समुद्रे पतिता क्षमाधरा पर्वतास्तेषां क्षेमस्य कल्याणस्य कथा वार्तां गृहीत्वा इव अद्रिसानुषु पर्वतशिखरेषु 'स्नु प्रस्थ सानुरस्त्रियौ' इत्यमरः। उपागता प्राप्ता समारब्ध प्रादुर्भूत शिखण्डिना मयूराणां ताण्डव नृत्य 'ताण्डवं नटनं नाट्यं लास्यं नृत्य' इत्यमर। येन स त ध्वनिं शब्द (मेघशब्द) विमुद्रयन्ति उद्घाटयन्ति।

भाषा

ये बादल मानो समुद्र के मध्य में विद्यमान पर्वतों का कुशल वृत्तान्त

लाकर (भूमिस्थ) पर्वतशिखरों पर आकर, मोरों के नाच को प्रारम्भ करानेवाली अपनी गर्जना को करते हैं, अर्थात् समुद्रस्थित पर्वतों का कुशल समाचार लाकर भूमिस्थ पर्वतों से कहते हैं।

द्विषन्ति राजीवमुखि स्वजीवितं ध्रुवं मयूरास्तव निर्जिताः कचैः।
भवन्ति यद्वासवचापसंमुखाः शिलीमुखप्राप्तिसमुत्सुका इव ॥२७॥

अन्वयः

हे राजीवमुखि ! तव कचैः निर्जिताः मयूराः स्वजीवितं ध्रुवं द्विषन्ति। यत् (ते) वासवचापसंमुखाः (सन्तः) शिलीमुखप्राप्तिसमुत्सुकाः इव भवन्ति।

व्याख्या

हे राजीवमुखि कमलवदने तव भवत्या. कचै. केशै. निर्जिताः पराजिताः शोभारहिताः मयूराः बर्हिणः 'मयूरो बर्हिणो बर्ही' इत्यमरः। स्वजीवितं स्वप्राणान् स्वजीवनं वा ध्रुवं निश्चयेन द्विषन्ति निन्दन्ति। यद्यस्मात्कारणात् ते मयूराः वासवचापस्य इन्द्रधनुषस्सम्मुखा अग्रेऽवस्थिताः सन्तः शिलीमुखानां बाणानां 'अलिबाणौ शिलीमुखौ' इत्यमरः। प्राप्तौ समुत्सुका समुत्कण्ठिता इव भवन्ति। बाणप्रहारेण प्राणा निस्सरेयुरितिबुद्ध्येति भावः।

भाषा

हे कमलमुखी ! तुम्हारे केश पाशों से नीचा दिखाए गये हुए ये मयूर अवश्यमेव अपने जीवन से द्वेष करते हैं अर्थात् लज्जित होकर अपना प्राण दे देना चाहते हैं। क्योंकि वे मयूर इन्द्रधनुष के सामने आकर मानो बाणों की प्राप्ति के लिए उत्सुक हो रहे हैं। अर्थात् धनुष के सामने खड़े होने से उससे बाण छूट कर लग जाने से प्राणान्त हो सकेगा।

जिगीषवः प्रावृषि मुक्तकार्मुकाः प्रगल्भते शक्रधनुः क्व कर्मणि।
अवैमि संप्रत्यविलङ्घ्यशासनं शरासनं मान्मथमेव मानिनि ॥२८॥

अन्वयः

जिगीषवः प्रावृषि मुक्तकार्मुकाः (भवन्ति) शक्रधनुः कर्मणि क्व प्रगल्भते। हे मानिनि सम्प्रति मान्मथं शरासनम् एव अविलङ्घ्यशासनम् अवैमि।

व्याख्या

जेतुमिच्छवो जिगीषवो नृपाः प्रावृषि वर्षाकाले मुक्तं कार्मुकं यैस्ते मुक्तकार्मुकास्त्यक्तधनुष्काः भवन्ति वर्षासु धनुः परित्यजन्ति। शत्रोरुपरि विजययात्रा शरदि अन्यर्तुषु वा भवति। विजयदशम्यां रामोऽपि रावणं जघानेतीतिहासः। अतएव शक्रधनुः इन्द्रधनुः कर्मणि बाणमोचनकार्ये क्व कुत्र प्रगल्भते कार्यकारि न भवति। मानिनि मानशालिनि सम्प्रत्यधुना मान्मयं कामसम्बन्धि शरासनं धनुरेव अविलङ्घ्यं प्रतिबन्धरहितं शासनमादेशः 'अववादस्तु निर्देशो निदेशः शासनं च सः' शिष्टिश्चाज्ञा च' इत्यमरः। कार्यं वा यस्य तत् विजयाय कल्पते नान्यत् इत्यवैमि जाने।

भाषा

विजय की इच्छा रखने वाले (योद्धा) वर्षा ऋतु में अपने धनुष को रख देते हैं अर्थात् युद्ध नहीं करते। इन्द्र धनुष बाण चलाने के काम में कैसे समर्थ हो सकता है। हे मानिनि इस काल में तो कामदेव से सम्बन्ध रखने वाला धनुष ही बिना रोक टोक अपनी आज्ञा को चलाने में समर्थ है। ऐसा मैं समझता हूँ।

**अयं निदाघस्य तनोति पाटवं समस्तपृथ्वीरसकर्षणैः करैः[1] ।**
**उदञ्चदुच्चण्डतडित्करस्त्विषामधीशमित्याक्षिपतीव वारिदः ॥२९॥**

अन्वयः

उदञ्चदुच्चण्डतडित्करः वारिदः त्विषाम् अधीशम् अयं समस्तपृथ्वीरसकर्षणैः करैः निदाघस्य पाटवं तनोति इति आक्षिपति इव।

व्याख्या

उदञ्चमुल्लसदुच्चण्डः प्रबलः तडिदेव करो यस्य सः वारिदः मेघः त्विषां कान्तीनाम् अधीशं प्रभुं सूर्यमयं सूर्यः परेष्टकृष्टैः समस्तसम्पूर्णः पृथ्व्या रसो जलं तस्य कर्षणं शुष्कत्वविधानैरथवा समस्तपृथ्वीरसानां कर्षणं यैस्तैः करैः निदाघस्य ग्रीष्मस्य पाटवं तैक्ष्ण्यं तनोति विस्तारयतीत्येवं प्रकारेणाऽऽक्षिपतीव निन्दां करोतीव।

[1] अत्र "परैः" इति पाठात् "करैः" इति पाठः साधुतरः।

भाषा

ऊपर उठाये हुए प्रबल बिजली रूपी हाथ वाला मेघ, किरणों के स्वामी सूर्य को, यह सूर्य समस्त पृथ्वी के जल को खींचने वाले अर्थात् सुखाने वाले किरणों से ग्रीष्म की शक्ति को बढ़ाता है मानो ऐसा आक्षेप करता है । अर्थात् सूर्य की निन्दा करता है ।

निदाघबन्धोस्त्विषमुष्णदीधितेरपि प्रविष्टामिह मण्डलोदरे ।
अवैमि निर्वापयितुं मृगेक्षणे रुणद्धि तारारमणं बलाहकः ॥३०॥

अन्वयः

मृगेक्षणे ! बलाहकः निदाघबन्धोः उष्णदीधितेः त्विषम् इह मण्डलोदरे अपि प्रविष्टां निर्वापयितुं तारारमणं रुणद्धि (इत्यहम्) अवैमि ।

व्याख्या

मृगेक्षणे हे मृगनयने ! बलाहको वारिवाहको मेघ 'मेघो वारिवाहस्तनयित्नुर्बलाहकः' इत्यमरः । निदाघस्य ग्रीष्मस्य बन्धुरुत्तेजकस्सहायकस्तस्य, उष्णदीधितेस्सूर्यस्य त्विषं कान्तिमिह मण्डलस्य चन्द्रबिम्बस्योदरे मध्ये प्रविष्टां गतां निर्वापयितुं शमयितुमुष्णत्वे शिथिलतामानेतुं ताराणां रमणं प्रियं चन्द्रं रुणद्धि आच्छादयति इति अवैमि जाने । सूर्यस्य कान्तिर्यदा चन्द्रमण्डलं प्रविशति तदैव चन्द्रे प्रकाशो भवतीति प्रसिद्धिः ।

भाषा

हे मृगनयनी ! मेघ, ग्रीष्म ऋतु के सहायक सूर्य के, चन्द्रमण्डल में प्रविष्ट रश्मि को भी ठण्डा कर देने के लिये चन्द्रमा को आच्छादित करता है ऐसा मैं समझता हूँ । अर्थात् चन्द्रमा में सूर्य की किरणों के प्रवेश से जो कान्ति उत्पन्न होती है । उसे भी मेघ मिटाना चाहता है ।

निदाघमाघ्रातजगत्त्रयं क्षुधा विधाय लीलाकवलं बलाहकः ।
इतो बलाकाभिरवस्थितां मुखे तदस्थिमालामिव दर्शयत्ययम् ॥३१॥

अन्वयः

अयं बलाहकः आघ्रातजगत्त्रयं निदाघं क्षुधा लीलाकवलं विधाय इतः मुखे बलाकाभिः अवस्थिताम् तदस्थिमालाम् इव दर्शयति ।

### व्याख्या

अथ बलाहको मेघः आक्रान्तं समाक्रान्तं जगत्त्रयं भुवनत्रयं येन स तं निदाघं ग्रीष्मं क्रुधा कोपेन लीलाकवलं लीलया विलासेन कवलं ग्रासं 'ग्रासस्तु कवलः पुमान्' इत्यमरः । विधाय कृत्वा इतः अस्यां दिशि मुखे स्ववदने बलाकाभिर्बकपङ्क्तिभिरवस्थिता बकपङ्क्तिव्याजेन स्थिता तदस्थिमालामिव भुक्तस्य निदाघस्यास्थिसमूहमिव दर्शयति प्रकटयति । अपह्नुत्युत्प्रेक्षालङ्कारः ।

### भाषा

यह मेघ तीनों लोकों पर आक्रमण कर क्रोधपूर्वक ग्रीष्म ऋतु को खेलवाड़ में ही एक ग्रास में खाकर अर्थात् नष्ट कर, इस दिशा में बकपंक्तियों की कतार के मिष से मानो अपने मुख में उसकी हड्डी की माला को लिये हो ऐसी दिखा रहा है ।

**अवाप्य शिक्षां गतिषु त्वदन्तिकाज्जगत्त्रयीदुर्लभभूरिभङ्गिषु ।**
**प्रयान्ति हंसाः सुरहंसमण्डली-गुरुत्वलोभादिव सुभ्रु मानसम् ॥३२॥**

### अन्वयः

हे सुभ्रु हंसाः त्वदन्तिकात् जगत्त्रयीदुर्लभभूरिभङ्गिषु गतिषु शिक्षाम् अवाप्य सुरहंसमण्डलीगुरुत्वलोभात् इव मानसं प्रयान्ति ।

### व्याख्या

हे सुभ्रु सुष्ठु भ्रुवौ यस्याः सा तत्सम्बोधने हे सुभ्रु ! हंसाः मरालास्त्वदन्तिकात् त्वत्समीपात् जगत्त्रय्यां त्रिलोक्यां दुर्लभा दुष्प्रापा भूरिभङ्ग्यो बहुलविलासा यासु तास्तासु गतिषु गमनेषु शिक्षां नैपुण्यमवाप्य प्राप्य सुराणां हंसमण्डली तस्या गुरुत्वलोभादाचार्यत्वपदप्राप्तीच्छया इव मानसं मानससरोवरं प्रयान्ति । मानससरोवरस्य सान्निध्यमतएव तत्रैव सुरहंसमण्डल्याः शिक्षाग्रहणायाऽऽगमनसम्भव । अतस्तत्रैवैते हंसा अपि प्रयान्तीति भावः । वस्तुतस्तु वर्षाकाले जलस्य कलुषितत्वात् स्वभावत एव हंसा मानससरोवरं निर्मलजलयुतं सेवन्ते । कलुषितजलपानात् हंसानामस्वास्थ्यमरुचिश्चेति कविप्रसिद्धिः । तदुक्तं— 'जलधरसमये मानसं यान्ति हंसाः' इति ।

भाषा

हे सुन्दर गौवो वाली ! हंसलोग तुम्हारे पास से तीनों लोकों में दुर्लभ विविध विलासो से युक्त गति अर्थात् चलने की कला को सीख-कर मानो देवताओं की हंसमण्डली के उपदेशक बनने की इच्छा से अर्थात् उनको इस गति को सिखा कर उनके गुरु बनने के लोभ से मानसरोवर को जाते हैं। यह कविप्रसिद्धि है कि वर्षाऋतु में हंस मानसरोवर पर चले जाते हैं।

द्रवन्ति हंसाः सुरचापचुम्बिनः पयोदवृन्दान्निपतत्सु बिन्दुषु ।
प्रवर्तमानां गुलिकाधनुर्मुखाद् विशङ्कमाना इव गोलकावलिम् ॥३३॥

अन्वयः

हंसाः सुरचापचुम्बिनः पयोदवृन्दात् निपतत्सु बिन्दुषु गुलिकाधनुर्मुखात् प्रवर्तमानां गोलकावलिं विशङ्कमानाः इव द्रवन्ति ।

व्याख्या

हंसा मराला सुरचापचुम्बिन इन्द्रधनुस्सक्तात् पयोदवृन्दान्मेघसमूहात् निपतत्सु गलत्सु बिन्दुषु जलबिन्दुषु गुलिकाधनुर्मुखात् 'गुलेल' इति हिन्दीभाषायाम्। प्रवर्तमानां निस्सृतां गोलकावलिं 'गोली' इति हिन्दीभाषायाम्। विशङ्कमाना इव कल्पयन्त इव द्रवन्ति पलायन्ते। अत्र हेतूत्प्रेक्षालङ्कारः।

भाषा

हंसलोग इन्द्रधनुष-तक ऊँचे पहुँचे हुए मेघो से गिरने वाली बूँदों को मानो गुलेले से छूटी हुई गोलियो का सन्देह कर जोरो से भाग रहे हैं।

अपह्नुताश्चञ्चुपुटैः शिखण्डिनां
प्रकाशिताः कोमलकूजिताङ्कुरैः ।
पतन्ति कृच्छ्राद्भुवि पान्थयोषितां
कवोष्णनिःश्वासकदर्थिताः कणाः ॥३४॥

अन्वयः

कणाः शिखण्डिनां चञ्चुपुटैः अपह्नुताः कोमलकूजिताङ्कुरैः प्रकाशिताः पान्थयोषितां कवोष्णनिःश्वासकदर्थिताः (सन्तः) कृच्छ्रात् भुवि पतन्ति ।

व्याख्या

कणाः मेघजलबिन्दवः शिखण्डिना मयूराणां चञ्चुपुटैरपह्नुता गोपिताः, मयूरा मेघजलबिन्दून् स्वचञ्चुपुटैः पिबन्ति । ततः कोमलानि सुन्दराणि कूजितानि शब्दास्तेषामङ्कुरास्तैः प्रकाशिताः निर्गताः, शब्दसमये बिन्दुपानसम्भवो नेरयतः पुनरागताः, ततः पान्थयोषिता पथिकस्त्रीणां 'पान्थः पथिक इत्यपि' इत्यमरः । पतिविरहात् कवोष्ण किञ्चिदुष्णो निःश्वासस्तेन कर्दर्थिताः कुत्सिता कृताः, सम्प्राप्ताः कदुष्णनिःश्वासेनेतस्ततो विक्षिप्ताः शुष्का वा सन्तः कृच्छ्रात् अतिकष्टात् भुवि पृथिव्यां पतन्ति समाप्नुवन्ति । अत्र पर्यायालङ्कारः ।

भाषा

वर्षा की बूंदे, मोरो की चोचो में छिपकर अर्थात् मोरो द्वारा चोचो में ग्रहण कर लेने पर और मोरो के कोमल शब्दो का उद्गम होने पर अर्थात् उनके शब्द करने के समय चोचो के खोल देने पर प्रकट होकर और विरहिणियो के गरम गरम श्वासो से इधर उधर बिखर कर अथवा सूख जाने पर बहुत मुश्किल से पृथ्वी पर आ गिरती हैं।

ग्रहीतुमेते निजचञ्चुकोटिभिर्झटित्यनभ्यासवशान्न पारिताः ।
क्षितौ लुठन्तः शितिकण्ठशावकैरसूयिताः सुभ्रु नवाभ्रबिन्दवः ॥२४॥

अन्वयः

हे सुभ्रु एते निजचञ्चुकोटिभिः झटिति ग्रहीतुम् अनभ्यासवशात् न पारिताः क्षितौ लुठन्तः नवाभ्रबिन्दवः शितिकण्ठशावकैः असूयिताः ।

व्याख्या

हे सुभ्रु ! एते इमे निजचञ्चुकोटिभिः स्वचञ्च्वग्रभागैः झटिति शीघ्रं ग्रहीतुं पातुमनभ्यासस्य वशात् न पारिता न क्षमाः क्षितौ पृथिव्यां लुठन्त इतस्ततः परिवर्तमाना, नवाभ्रबिन्दवः मेघानां नवीनजलकणाः शितिकण्ठशावकैः मयूरपोतकैः 'पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः' इत्यमरः । असूयिता निन्दिताः ।

भाषा

हे सुन्दर भौं वाली ! अभ्यास न होने के कारण मोरो के बच्चो द्वारा अपनी चोचो की नोक से जल्दी से न ग्रहण की जा सकने वाली और भूमि पर

इधर उधर गिरने वाली ये नवीन मेघों की बूंदें, मोरों के बच्चों द्वारा ईर्ष्या की दृष्टि से देखी गईं। अर्थात् मोरों के बच्चे उन्हें बुरा समझने लगे।

**तृणानि भूभृत्कटकेषु निक्षिपन् न कैः स्फुरद्धीरमृदङ्गनिस्वनः।**
**तडित्प्रदीपैश्चलदङ्कलीलया निदाघमन्विष्यति वारिदागमः ॥३६॥**

अन्वयः

स्फुरद्धीरमृदङ्गनिस्वनः अङ्कलीलया चलत् वारिदागमः भूभृत्कटकेषु तृणानि निक्षिपन् कैः तडित्प्रदीपैः निदाघं न अन्विष्यति।

व्याख्या

स्फुरन्तो धीरस्य गम्भीरस्य मृदङ्गस्य निस्वनाः शब्दा इव निस्वना यस्य स अङ्कयति चिह्नयतीत्यनेन अङ्कः 'मोहरछाप' इति हिन्दीभाषायाम्। तस्य लीला तया चलत् गच्छन् वारिदागमः वर्षाकालः भूभृत्कटकेषु पर्वतनितम्बेषु नृपसेनासु वा तृणानि घासान् निक्षिपन् समुत्पादयन् कैः कीदृशैः तडिदेव विद्युदेव प्रदीपो दीपस्तैः निदाघं ग्रीष्मकालं नान्विष्यति अर्थात्सर्वप्रकारेण समन्विष्यतीत्यर्थः। अद्यापि किं कुत्रापि निदाघो वर्तत इति जिज्ञासया तडित्प्रदीपैस्तस्यान्वेषणं करोतीति भाव.।

भाषा

प्रकट होने वाले गम्भीर पखावज की ध्वनि के समान ध्वनि वाला और अपने आने की मोहरछाप करनेवाला यह वर्षा ऋतु, पर्वतों की घाटी में या राजा की सेनाओं में घासों को उत्पन्न करता हुआ किन २ बिजली रूपी दीपकों से ग्रीष्मऋतु की खोज नहीं करता है। अर्थात् ग्रीष्मऋतु कहीं कोने अतरे में छिपकर तो नहीं बैठा है, इसकी खोज करता है।

**नमत्ययं[1] श्यामलशष्पमण्डल-स्थितेन्द्रगोपप्रचयासु वारिदः।**
**गिरिस्थलीषु च्युतशक्रकार्मुक-भ्रमादिवोद्भ्रान्ततडिद्विलोचनः ॥३७॥**

अन्वयः

श्यामलशष्पमण्डलस्थितेन्द्रगोपप्रचयासु गिरिस्थलीषु उद्भ्रान्ततडिद्विलोचनः अयं वारिदः च्युतशक्रकार्मुकभ्रमात् इव नमति।

---

[1] "नमत्यम्" इति पाठात् "नमत्यं" इति पाठ एव समीचीनः।

### व्याख्या

श्यामलानि कृष्णवर्णानि शष्पमण्डलानि बालतृणसमूहास्तेषु स्थिता इन्द्रगोपानां रक्तवर्णकीटविशेषाणां (बीरबहूटी) प्रचयास्समूहा यासु तास्तासु गिरिस्थलीषु पर्वतभूमिषु उद्भ्रान्ता सम्भ्रमसहिता तडिदेव विलोचनं यस्य स उद्भ्रान्ततडिद्विलोचनोऽयं वारिदः मेघः च्युतं पतितं शक्रस्येन्द्रस्य कार्मुकं धनुस्तस्य भ्रमात् इव नमति नीचैरायाति ।

### भाषा

हरी २ घासों पर रेंगनेवाली वीरबहूटियों के समूह से युक्त पर्वत की भूमियां पर चमकने वाली बिजली रूपी आँखों वाला मेघ, गिरे हुए इन्द्रधनुष के भ्रम से मानो नीचे की ओर झुक आया। अर्थात् इन्द्रधनुष को देखने के लिए नीचे की ओर झुक आया।

**अमी वियन्नीलसरोजमण्डलप्रलम्बनालप्रतिमल्लडम्बराः ।**
**अनङ्गनाराचपरम्परानिभाः पतन्ति धारानिचयाः पयोमुचः ॥३८॥**

### अन्वयः

अमी वियन्नीलसरोजमण्डलप्रलम्बनालप्रतिमल्लडम्बराः अनङ्गनाराचपरम्परानिभाः पयोमुचः धारानिचयाः पतन्ति ।

### व्याख्या

अमी एते वियति गगने 'वियद्विष्णुपदं वाऽपि पुंस्याऽऽकाशविहायसी' इत्यमरः । नीलसरोजमण्डलं नीलपद्मसमूहस्तस्य प्रलम्बं लम्बमानं यन्नालं नालदण्डं तस्य प्रतिमल्लः सदृशः डम्बरः विलासो येषान्ते, अथवा वियदेव नीलसरोजमण्डलं तस्येत्यादि । अनङ्गस्य कामस्य नाराचास्तीक्ष्णविषदिग्धमुखा बाणास्तेषां परम्परा तासां निभाः सदृशाः पयोमुचो मेघस्य धारानिचयाः जलधारासमूहाः पतन्ति नीचैरागच्छन्ति ।

### भाषा

ये आकाश में नीलकमलसमूह के लम्बे नालदण्डों के समान शोभायमान, या आकाश रूपी नीलकमल समूह के डंठों के समान शोभायमान, कामदेव के जहरीले बाणों की परम्परा के समान, मेघ की जलधाराएँ गिर रही हैं ।

अनङ्गशस्त्राणि नताङ्गि तीक्ष्णतां नयत्ययस्कार इवाम्बुदाग-
मलीमसाङ्गाररुचां पयोमुचां तथाहि मध्ये ज्वलितस्तडिच्छिखी ।

अन्वयः

हे नताङ्गि ! अम्बुदागमः अयस्कार इव अनङ्गशस्त्राणि तीक्ष्ण-
नयति तथाहि मलीमसाङ्गाररुचां पयोमुचां मध्ये तडिच्छिखी ज्वलित

व्याख्या

हे नताङ्गि ! — नतानि नम्राणि अङ्गानि, यस्यास्सा, तत्सम्बोधने, अम्बुदा-
मेघानामागम आगमनं यस्मिन्काले स अम्बुदागमः वर्षाकाल अयस्कार इव लोहकार
इव अनङ्गस्य कामस्य शस्त्राणि तीक्ष्णतां तीव्रता नयति प्रापयति तथाहि मल-
मलीमसा मलिना 'मलीमस तु मलिन', इत्यमरः । अङ्गारास्तेषां रुचिव रु-
मेघान्ते तेषां पयोमुचां, मेघानां मध्ये तडिदेव विद्युदेव शिखी अग्निः 'शिखिनो
वह्निबर्हिणौ' इत्यमर । ज्वलित प्रदीप्तो दृश्यतेऽस' प्रतीयते यद् वर्षाकाल
लोहकार एव । अङ्गार 'कोयला' इति हिन्दी भाषायाम् ।

भाषा

हे नताङ्गी ! वर्षाऋतु लोहार के समान कामदेव के शस्त्रो को तीखा बनाता है । क्योंकि काले रङ्ग के कोयला की कान्ति के समान कान्ति रखने वाले मेघो के बीच में बिजली रूपी आग जल रही है । अर्थात् जैसे लोहार कोयलो में आग जलाकर उसमें शस्त्रो को तीखा करता है, वैसे ही वर्षाऋतु भी मेघरूपी कोयलो में बिजली रूपी आग जला रहा है ।

निदाघमित्रेण विसूत्रितं जलं तव प्रियेणाखिलमुष्णरश्मिना ।
क्रुधेति धारालगुडैर्बलाहकस्तडित्ययं ताडयतीव पद्मिनीम् ॥४०॥

अन्वयः

अयं बलाहकः निदाघमित्रेण तव प्रियेण उष्णरश्मिना अखिलं जलं विसूत्रितम् इति क्रुधा धारालगुडैः तद् इति पद्मिनीं ताडयति इव ।

व्याख्या

अयमेव बलाहक मेघ' निदाघस्य ग्रीष्मस्य मित्रेण तव पद्मिन्याः प्रियेण
कान्तेनोष्णरश्मिना सूर्येण 'भास्वद्विवस्वत्सप्ताश्वहरिदश्वोष्णरश्मय' इत्यमर ।

अखिल सम्पूर्णं जलं विसृवितं शोषितमिति क्रुधा कोपेन धारा जलधारा एव लगुडास्तैः तट इति शब्द कृत्वा पद्मिनीं कमलिनीं ताडयतीव। अत्रोत्प्रेक्षालङ्कारः।

भाषा

ग्रीष्म के मित्र तुम्हारे (कमलिनी के) प्रेमी सूर्य के द्वारा यह समग्र जल सुखा दिया गया है इस क्रोध से मानो यह मेघ जल धारा रूपी लकडी से ठक् ऐसा शब्द करते हुए कमलिनी को मार रहा है।

कृतक्षणं क्षुद्रनदीसमागमे तरङ्गिणीनाथमवेत्य सम्प्रति ।
विलङ्घ्य मार्गं सहसा महापगाः पतन्ति निचेषु नदान्तरेष्वपि ॥४१॥

अन्वयः

महापगाः सम्प्रति क्षुद्रनदीसमागमे कृतक्षणं तरङ्गिणीनाथम् अवेत्य सहसा मार्गं विलङ्घ्य नीचेषु नदान्तरेषु अपि पतन्ति ।

व्याख्या

महापगा विशालनद्यः सम्प्रत्यधुना क्षुद्रनदीभिरल्पनदीभिस्सह समागमे संमिलने कृत क्षण उत्सवो 'अथ क्षणं उद्धर्षो मह उद्धव उत्सवः' इत्यमरः। येन स तं तरङ्गिणीना नदीना नाथ समुद्रमवेक्ष्य सहसा झटिति मार्गमध्वानं विलङ्घ्य नीचेषु गभीरेषु नीचप्रकृतिषु अधोमार्गगतेषु नदान्तरेष्वपि पतन्ति गच्छन्ति। वर्षतौ जलभरेण स्वल्पनद्योऽपि समुद्र प्राप्नुवन्ति महानद्यश्च जलपूरेण स्वमार्गमुज्झित्य मार्गपतितान् नदान् संगमय्य समुद्रे गच्छन्तीति भाव। स्वपतिं परस्त्रीगामिनं दृष्ट्वा स्त्री नीचपरपुरुषगामिनी भवतीति ध्वनिः। अत्र समासोक्तिरलङ्कारः।

भाषा

इस काल में छोटी नदियो से मिलने में उत्सव मनाने वाले नदियो के स्वामी समुद्र को देखकर, महानदियाँ एकदम अपना रास्ता लाँघकर नीचे बहने वाले नदो में जा गिरती हैं। अर्थात् छोटी नदियाँ भी पानी के आधिक्य से समुद्र तक पहुँच जाती हैं और बडी २ नदियाँ पानी के आधिक्य से अपना रास्ता लाँघ कर रास्ते में पडने वाले नीची जमीन पर बहने वाले नदों के जल को भी लेकर समुद्र में मिल जाती हैं। अर्थात् अपने पति को परस्त्रीगामी देख कर स्त्रियाँ अपना सन्मार्ग छोड कर नीच पुरुषों से जा मिलती हैं।

**इयं नमन्ती नभसः पयोभरादवैमि नीलोत्पलभङ्गिनिर्मला ।**
**करोति सर्वत्र विलोक्य कर्दमं पयोदमाला पदमद्रिसानुषु ॥४२॥**

अन्वयः

इयं पयोभरात् नमन्ती नीलोत्पलभङ्गिनिर्मला पयोदमाला नभसः सर्वत्र कर्दमं विलोक्य अद्रिसानुषु पदं करोति, (इति) अवैमि ।

व्याख्या

इयं प्रत्यक्षदृश्या पयोभरात् जलभारात् नमन्ती नीचैरागच्छन्ती नीलोत्पलानां नीलकमलानां भङ्गिर्विलासस्तद्वन्निर्मला श्यामला रमणीया च पयोदमाला मेघपङ्क्तिः नभसः आकाशात् सर्वत्र सर्वस्मिन् स्थाने कर्दमं पङ्कं 'पङ्कोऽस्त्री शादकर्दमौ' इत्यमरः । विलोक्य दृष्ट्वा अद्रिसानुषु पर्वतशिखरेषु पदं स्थानं चरणं वा 'पदं व्यवसितित्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः । करोति विदधाति । पर्वतशिखरेषु विश्रान्तिं गृह्णातीति भावः । इत्यहमवैमि ।

भाषा

यह जल के बोझे से नीचे की ओर आने वाली नीले कमलो के समान नीली और स्वच्छ मेघमाला, आकाश में से सब ठिकाने कीचड को देख कर, पर्वत की चोटियो पर स्थान ग्रहण करती है, ऐसा मैं समझता हूँ । अर्थात् पर्वतो के शिखरो पर विश्रान्ति लेती है । प्राय पर्वतीय प्रान्तो में ही वृष्टि अधिक होती है ।

**ध्रुवं कयाचित्कथया पयोनिधेः स्तनद्भिरभ्रैः सरितः प्रकोपिताः ।**
**प्रयान्ति सद्यः कलुषाः सरित्पतिं तथाहि कोलाहलमांसलोर्मयः ॥४३॥**

अन्वयः

स्तनद्भिः अभ्रैः पयोनिधेः कयाचित् कथया सरितः प्रकोपिताः । तथाहि कोलाहलमांसलोर्मयः सद्यः कलुषाः सरित्पतिं प्रयान्ति ।

व्याख्या

स्तनद्भिः शब्दायमानैः अभ्रैर्मेघैः पयोनिधेः मेघस्य कयाचित् कथया क्षुद्रनदीरतस्वादिविषयया सरितो नद्यः प्रकोपिताः । तथाहि यतः कोलाहलेन शब्देन मांसला विशाला "बलवान्मांसलोंऽसलः" इत्यमरः । ऊर्मयस्तरङ्गा

यासान्ताः। सद्यः तत्क्षणमेव। कलुषाः कलुषीकृतजलाः पङ्किलपयसः दुःखिता नायिका इव सरित्पतिं समुद्रं प्रयान्ति गच्छन्ति। अत्र समासोक्तिरलङ्कारः।

### भाषा

गर्जना करने वाले मेघों ने समुद्र की किसी कथा विशेष से जैसे छोटी २ नदियों से प्रेम करने वाला आदि कथा से नदियों को क्रुद्ध कर दिया है। इसीलिये वे नदियाँ अत्यधिक शब्द करने वाली लहरों से युक्त तथा मटमैली होकर अर्थात् दुःखी होकर जल्दी २ अर्थात् वेग से समुद्र की ओर जा रही हैं। अर्थात् अपने पति के परस्त्रीगामी होने की बात किसी से सुनकर रोती पीटती, दुःखी होकर अपने पति से मिलने जाती हैं।

तरङ्गिणीनाथसमागमत्वरा-प्रधाविताः शैलनदीभिरन्तरे।
निरुद्ध्यमानाः कलहं महारवैर्विमुद्रयन्तीव समुद्रवल्लभाः॥४४॥

### अन्वयः

तरङ्गिणीनाथसमागमत्वराप्रधाविताः समुद्रवल्लभाः अन्तरे शैलनदीभिः निरुद्ध्यमानाः महारवैः कलहं विमुद्रयन्ति इव।

### व्याख्या

तरङ्गिणीनाथेन समुद्रेण सह समागमस्य संयोगस्य या त्वरा औत्सुक्यं तेन प्रधाविताः द्रुततरगमनाः समुद्रस्य वल्लभाः प्रियाः नद्यः अन्तरे मध्ये शैलनदीभिः पर्वतापगाभिः निरुद्ध्यमानाः ईर्ष्यया निवार्यमाणाः महारवैः महाशब्दैः कलहं विमुद्रयन्तीव जनयन्तीव। नायिकावृत्तान्तसमारोपात्समासोक्तिरलङ्कारः।

### भाषा

नदियों के पति समुद्र से मिलने की जल्दी से वेग से बहने वाली समुद्र की स्त्रियाँ नदियाँ रास्ते में पहाडी नदियों से रोकी जाने पर मानो जोर २ के शब्दों से झगडा करती हैं। अर्थात् वेग से बहने वाली नदी के दूसरी नदी से मिलने पर शब्द होना स्वाभाविक ही है। किसी स्त्री के अपने पति से जल्दी से जा मिलने की इच्छा से शीघ्र गति से चलते रहने पर उसकी सौत के रास्ते में मिल जाने पर और उसकी शीघ्र गति में व्यवधान उपस्थित करने पर उनमें झगडा होना भी स्वाभाविक है।

जलेन भिन्ना कियती वसुन्धरा मदर्पितेनेति परीक्षितुं घनाः ।
महाम्बुधाराभिरधीरलोचने क्षितौ शलाका इव निक्षिपन्त्यमी ॥४५॥

अन्वयः

हे अधीरलोचने अमी घनाः मदर्पितेन जलेन कियती वसुन्धरा भिन्ना इति परीक्षितुं महाम्बुधाराभिः क्षितौ शलाका इव निक्षिपन्ति ।

व्याख्या

हे अधीरलोचने चञ्चलनेत्रे अमी एते घनाः मेघाः मदर्पितेन मया दत्तेन जलेन कियती वसुन्धरा पृथ्वी भिन्ना आर्द्रा जाता इति परीक्षितुं, कियज्जलं पतितमिति निश्चयं कर्तुं, महाम्बुधाराभिः महाजलधाराभिः क्षितौ पृथिव्यां शलाका इव मानदण्डानिव निक्षिपन्ति प्रसारयन्ति । अत्रोत्प्रेक्षालङ्कारः ।

भाषा

हे चञ्चल नेत्रवाली ! ये मेघगण, हमारे पानी देने से कितनी गहराई तक जमीन तर हुई है इसकी परीक्षा करने के लिये जल की बड़ी २ धाराओं के रूप में मानो नापने के मान दण्डों को फेंक रहे हैं ।

इतस्ततः शीकरमौक्तिकोत्करं नदाः किरन्तः समदाभिरूर्मिभिः ।
प्रतारणायेव समुद्रयोषितां समुद्रवेषेण चरन्ति वर्त्मसु ॥४६॥

अन्वयः

इतः ततः शीकरमौक्तिकोत्करं किरन्तः नदाः समदाभिः ऊर्मिभिः समुद्रयोषितां प्रतारणाय इव वर्त्मसु समुद्रवेषेण चरन्ति ।

व्याख्या

इतः ततः भिन्ने भिन्ने स्थाने शीकरा जलबिन्दव एव 'शीकरोऽम्बुकणाः स्मृताः' इत्यमरः । मौक्तिका मुक्ताः तेषामुत्करं समूहं किरन्तः क्षिपन्तः नदाः शोणनदाद्याः "प्राक्स्रोतसो नद्यः प्रत्यक्स्रोतसो नदाः नर्मदां विनेयेति मल्लिनाथ" । समदाभिः मदेन प्रचण्डवेगेन सहिताभिः ऊर्मिभिस्तरङ्गैः 'भङ्गस्तरङ्ग ऊर्मिर्वा' इत्यमरः । समुद्रयोषितां समुद्रपत्नीनां नदीनां स्त्रीणामिव प्रतारणाय वञ्चनार्थं पातिव्रत्यस्य मार्गपरिभ्रंशनार्थमिव वर्त्मसु मार्गेषु समुद्रवेषेण चरन्ति

विहरन्ति परिभ्रमन्ति। जलाधिक्येन नदा अपि समुद्रवज्जलपूरिता जाता इति भावः। अत्र समासोक्त्युत्प्रेक्षयोः सङ्करः।

भाषा

इधर उधर जलबिन्दु रूपी मोतियों को बिखरने वाले नद, वेग से उठने वाली लहरों से, समुद्र की स्त्रियों के अर्थात् समुद्रगामी नदियों को मानो ठगने के लिये रास्तों में समुद्र का वेश धारण कर चलते हैं। अर्थात् समुद्र में बड़ी बड़ी लहरें उठा करती हैं और उनसे किनारों पर मोती बिखराये जाते हैं। उसी प्रकार वर्षा ऋतु में नदों में लहरों के उठने से और जल बिन्दु रूपी मोतियों के दीख पड़ने से ये नद समुद्र का वेश धारण कर लेते हैं।

क्षपासु संप्रत्यभिसारिकाजनः स्खलत्पदं कर्दमपिच्छिले पथि।
करोति कार्तस्वरदण्डशङ्कया तडिल्लतायामवलम्बनादरम् ॥४७॥

अन्वयः

सम्प्रति अभिसारिकाजनः क्षपासु कर्दमपिच्छिले पथि स्खलत्पदं (यथा स्यात्तथा) तडिल्लतायां कार्तस्वरदण्डशङ्कया अवलम्बनादरं करोति।

व्याख्या

सम्प्रत्यमुना अभिसारिकाजनः 'कान्तार्थिनी तु या याति सङ्केतं साभिसारिका' इत्यमरः। क्षपासु रात्रिषु कर्दमेन पङ्केन 'पङ्कोऽस्त्री शादकर्दमौ' इत्यमरः। पिच्छिले पथि मार्गे स्खलत्पदं चरणो यस्मिन्कर्मणि तत् यथा स्यात्तथा तडिल्लतायां विद्युल्लतायां कार्तस्वरस्य सुवर्णस्य 'रुक्मं कार्तस्वरं जाम्बूनदं' इत्यमरः। दण्डशङ्कया दण्डभ्रमेण अवलम्बनस्य अवलम्बनरूपेण ग्रहणस्यादरं स्पृहां करोति विदधाति।

भाषा

इस वर्षाऋतु में अभिसारिकाएँ रात्रियों में कीचड़ से फिसलने योग्य रास्तों में, पैरों के फिसलने पर बिजली को देख उसमें सोने का दण्डा होने के सन्देह से, उसे पकड़ने की इच्छा करती हैं। अर्थात् पाव-फिसलता देखकर दण्डे का सहारा लेने की इच्छा से बिजली की लता में सोने के दण्डे की शङ्का कर उसका सहारा लेने की इच्छा करती हैं।

नताङ्गि लीलाकमलाकरेण ते तरङ्गदण्डैः प्रतिबिम्बितो घनः ।
अशेषपानीयसमृद्धिसंक्षयाद् भजन्निवार्थित्वमनेन ताड्यते ॥४८॥

अन्वयः

हे नताङ्गि अनेन ते लीलाकमलाकरेण तरङ्गदण्डैः प्रतिबिम्बितः घनः अशेषपानीयसमृद्धिसंक्षयात् अर्थित्वं भजन् इव ताड्यते ।

व्याख्या

हे नताङ्गि नतानि नम्राणि अङ्गानि यस्यास्सा नताङ्गी तत्सम्बोधने हे नताङ्गि ! अनेन सम्मुखस्थेन ते लीलाकमलानां क्रीडापद्मानामाकरेण तडागेन तरङ्गा एव दण्डास्तैः सरोवरजले प्रतिबिम्बितः प्रतिफलितः घनो मेघः अशेष-पानीयसमृद्धिसंक्षयात् वर्षणेनसम्पूर्णजलसम्पत्तिविनाशात् सम्प्रति तडागम्प्रति अर्थित्वं जलयाचकत्वं 'मार्गणो याचकार्थिनौ' इत्यमरः । भजन् प्राप्नुवन्निव ताड्यते अभिहन्यते । अत्रोत्प्रेक्षालङ्कारः ।

भाषा

हे नताङ्गि ! वापी में प्रतिबिम्बित मेघ, सम्पूर्ण जलसम्पत्ति के नष्ट हो जाने से मानो भिखमङ्गा बना हुआ, इस तेरे क्रीडा वापी द्वारा तरङ्ग रूपी दण्डों से पीटा जा रहा है ।

गृहीतमासीत्सलिलं बलाहकैः कलान्तरेण ध्रुवमम्भसां निधेः ।
यदेतदीयानि जलानि गृह्णते विधाय कोलाहलमब्धिवल्लभाः ॥४९॥

अन्वयः

बलाहकैः अम्भसां निधेः सलिलं कलान्तरेण ध्रुवं गृहीतम् आसीत् यत् अब्धिवल्लभाः कोलाहलं विधाय एतदीयानि जलानि गृह्णते ।

व्याख्या

बलाहकैः मेघैः अम्भसां निधेः समुद्रात् सागरस्य वा सलिलं जलं कलान्तरेण वृद्ध्या ('ब्याज' इति हिन्दीभाषायाम्) 'कला स्यान्मूलरैवृद्धौ' इति मेदिनी । ध्रुवं निश्चयेन गृहीतमासीत् यद्यस्मात्कारणात् अब्धिवल्लभाः समुद्रात्मा भट कोलाहलं शब्दं विधाय कृत्वा एतदीयानि समुद्रसम्बन्धीनि जलानि आपो गृह्णते हठात् प्रतिनिवर्तयन्ति । अत्र समासोक्तिरलङ्कारः ।

भाषा

— मेघो ने समुद्र से अवश्य ही सूद पर जल उधार लिया होगा। इसीलिये समुद्र की स्त्रियाँ नदियाँ धूम मचा कर इन मेघो से जलो को लौटा ले रही हैं।

**समर्पयामास पयांसि निश्चितं कयापि वृद्धया जलधिः पयोमुचाम्।**
**महागिरिप्रस्थसहस्रशोधितं यदम्बु गृह्णन्ति समुद्रयोषितः ॥५०॥**

अन्वयः

जलधिः पयोमुचां पयांसि कया अपि वृद्धया निश्चितं समर्पयामास। यत् समुद्रयोषितः महागिरिप्रस्थसहस्रशोधितम् अम्बु गृह्णन्ति।

व्याख्या

जलधिस्समुद्रः पयोमुचां मेघानां पयांसि जलानि कया किमप्या अपि वृद्धया कालान्तरेण ('ब्याज' इति हिन्दीभाषायाम्) निश्चितं ध्रुवं समर्पयामास ददौ। यद्यस्मात्कारणात् समुद्रस्य योषितः पत्न्यः नद्यः महागिरीणां महापर्वतानां प्रस्थाः शृङ्गाणि मानपात्रविशेषाश्च 'प्रस्थोऽस्त्री सानुमानयोः' इत्यमरः। तेषां सहस्रेण शोधितं कृतमानमम्बु जलं गृह्णन्ति। पर्वतशिखरेषु वृष्टं जलं नदीषु समायातीति भावः।

भाषा

समुद्र ने निश्चय ही मेघो को बढ़ती पर वापस लेने के करार से अर्थात् किसी ब्याज की दर पर ही जलो को कर्ज दिया था। क्योंकि समुद्र की नारियाँ नदियाँ बड़े २ पर्वतो के हजारो शिखर रूपी नापने के पात्रो से नापा हुआ जल लेती हैं। अर्थात् पर्वत के शिखरो पर बरसा पानी नदियो में आता है।

**करोति नीरन्ध्ररसोपबृंहणात् तरङ्गिणीरेष मदङ्गसङ्गिनीः।**
**इति ध्रुवं पुष्यति रिक्तमागतं बलाहकं बालमृगाक्षि वारिधिः॥५१॥**

अन्वयः

हे बालमृगाक्षि, वारिधिः एषः तरङ्गिणीः नीरन्ध्ररसोपबृंहणात् मदङ्गसङ्गिनीः करोति, इति रिक्तम् आगतं बलाहकं ध्रुवं पुष्यति।

व्याख्या

हे बालमृगस्याक्षिणीवाक्षिणी यस्यास्सा तत्सम्बोधने हे बालमृगाक्षि बाल-हरिणनयने ! वारिधिस्समुद्रः एष मेघः तरङ्गिणी नदी नीरन्ध्रस्य घनस्य दृढस्य रसस्य जलस्य प्रेम्णा वा उपबृंहणात् वर्धनात् मम (समुद्रस्य पत्युरिव) अङ्गेषु सङ्गिनीस्समाश्लिष्टाः करोति विदधाति । इति उपकारहेतो रिक्त जलशून्य-मागत बलाहक मेघ ध्रुव पुष्यति जलभृत करोति । अत्र समासोक्तिरलङ्कार ।

भाषा

हे मृगशावक नयनी ! यह मेघ नदियों को अटूट जल से वृद्धिगत कर या अनल्प शृगार रससे प्रोत्साहित कर मेरे में मिलता है या मुझे उनके आलिङ्गन का सौख्य देता है । इस उपकार के कारण समुद्र, खाली होकर आए हुए मेघ का निश्चय ही पोषण करता है अर्थात् उसे अवश्य जल प्रदान करता है ।

विलीय नीलस्तडिदूष्मणा घनः कपालरङ्गः किमजायत क्षितेः ।
जराविमुक्तेव मृगाक्षि लक्ष्यते यदुद्गतश्यामलशष्पकुन्तला ॥५२॥

अन्वयः

नीलः घनः तडिदूष्मणा विलीय किम् क्षितेः कपालरङ्गः अजायत । यत् हे मृगाक्षि ( सा क्षितिः ) उद्गतश्यामलशष्पकुन्तला जराविमुक्ता इव लक्ष्यते ।

व्याख्या

नील श्याम घन मेघ तडितो विद्युत ऊष्मा तेजस्तेन तडिदूष्मणा विद्युत्तेजसा विलीय विलीनो भूत्वा किं क्षिते पृथिव्या कपालरङ्ग केशश्यामत्व-सायको वर्ण अजायत आसीत् । यद्यस्मात्कारणात् हे मृगाक्षि मृगनयने ! सा क्षिति उद्गतानि निर्गतानि श्यामलानि कृष्णवर्णानि शष्पाणि बालतृणानि "शष्प बालतृण घास" इत्यमर । एव कुन्तला केशा 'चिकुर कुन्तलो बाल' इत्यमर । यस्यास्सा जरया वृद्धावस्थया 'विस्रसा जरा' इत्यमर । —वेनाशो मुक्ता इव रहिता इव लक्ष्यते दृश्यते । कृष्णवर्णकेशत्वाज्जरारहितत्वमिति भाव ।

भाषा

क्या काले रङ्ग का मेघ बिजली की गर्मी से पिघल कर पृथ्वी का खिजाब बन गया है ? क्यों कि हे मृगनयनी ! यह पृथ्वी, उत्पन्न भए हुए काले (हरे)

रग के घास रूपी बाला से मुक्त होने से बुढौनी से मुक्त होने के समान दीख पड़ती है।

न वेद्मि कस्मिन्समये तथाविधा तरङ्गिणीभर्तुरकीर्तिरुत्थिता ।
नमो नमः कुम्भभुवे भवेदसौ तदङ्गनानामपि सम्मुखोऽद्य चेत् ॥५३॥

अन्वयः

कस्मिन् समये तरङ्गिणीभर्तुः तथाविधा अकीर्तिः उत्थिता (इति) न वेद्मि । कुम्भभुवे नमः नमः भवेत् असौ अद्य तदङ्गनानाम् अपि सम्मुखः ( स्यात् ) चेत् ।

व्याख्या

कस्मिन्समये वर्षाभिन्नसमय इत्यर्थः । तरङ्गिणीभर्तुः नदीनां पत्युः तथाविधा अकीर्तिः 'अगस्त्येन समुद्रः पीतः शोषित इति' दुष्कीर्तिः उत्थिता इति न वेद्मि। कुम्भभुवे अगस्त्याय 'अगस्त्यः कुम्भसम्भवः' इत्यमरः। नमः नमः वारम्वार नमस्कारः स्याद्यद्यसावद्य वर्षाकाले तदङ्गनानां समुद्रस्त्रीणामपि सम्मुखः स्यात् चेत् । वर्षाजलेन प्रवृद्धजलसम्पत्तीनां नदीनां सम्मुखे आगत्य समस्तजलपानं कृतं स्यात् । तत्तु न सम्भाव्यते ।

भाषा

किस काल में समुद्र की वैसी अपकीर्ति फैली कि अगस्त्य ने तीन आचमन में सुखा दिया मैं नहीं जानता। अगस्त्यमुनि को बार २ नमस्कार किया जाता यदि वे इस वर्षाऋतु में समुद्र की स्त्रियों का भी सामना ले सकते। अर्थात् नदियों के जल को भी पी सकते।

पयोदवृन्दं गगनस्थलोल्लसत्त-
डिल्लतादोहदकर्दमद्युति ।
चकास्ति संक्रान्तकलङ्कमम्भसां
नभश्च्युतानामिव गालनांशुकम् ॥५४॥

अन्वय

गगनस्थलोल्लसत्तडिल्लतादोहदकर्दमद्युति पयोदवृन्दं नभश्च्युतानाम् अम्भसां सक्रान्तकलङ्कं गालनांशुकम् इव चकास्ति ।

अथ वियोगिनीनां मेघोपलम्भमुपक्रमते कविः—

**क्षणप्रभां नूनमपश्यतः प्रियां तवायमाक्रन्दरवः पदे पदे ।**
**पयोद यन्नोदयते दयापि ते वियोगिवर्गे तदहो महाद्भुतम् ॥५६॥**

अन्वयः

हे पयोद क्षणप्रभां प्रियां नूनम् अपश्यतः तव अयं पदे पदे आक्रन्दरवः । पयोद वियोगिवर्गे ते दया अपि यत् न उदयते तत् अहो महाद्भुतम् ।

व्याख्या

हे पयोद हे मेघ ! क्षणप्रभा विद्युत् प्रिया प्रियां भार्यामिव नूनं निश्चयेनाऽपश्यतः अनालोकयतः तव मेघस्य अयं पदे पदे क्षणे क्षणे आक्रन्दरवः 'सारावे यथिते भार्याक्रन्दो दारुणो रणे' इत्यमरः । आह्वानरोदनादि शब्दः श्रूयते । हे पयोद हे मेघ ! वियोगिवर्गे स्वस्त्रीविरहिसमूहसम्बन्धे ते तव दयापि नोत्पद्यते तदहो महाद्भुतं महाश्चर्यम् । स्त्रीविरहजन्यदुःखं भवतानुभूयते परन्तु तदेव दुःखमन्यविरहिणामपि तव शब्दे श्रुते तव रूपे दृष्टे च भवतीति ज्ञात्वा त्वया शब्दो न कर्तव्यः स्वस्वरूपमपि न दर्शयितव्यमेतादृशी, दया नोत्पद्यत इति महदनुचितमिति भावः ।

भाषा

हे मेघ ! अपनी प्यारी स्त्री विजली को न देखने से निश्चय ही तुम्हारी यह चिल्लाने की आवाज क्षण क्षण पर सुनाई पड़ती है । परन्तु जो विरहीलोगों के सम्बन्ध में तुम्हारी दया भी उत्पन्न नहीं होती है अर्थात् उनकी दया नहीं आती है यह एक बड़ा आश्चर्य है । अर्थात् भुक्त भोगी होने पर भी जो तुमको देखने से और तुम्हारे शब्द सुनने से विरही लोगों को कष्ट होता है उन पर दया कर तुम अपना दर्शन व शब्द नहीं दूर करते हो यह अनुचित है अतएव भुक्त भोगी होने के नाते आश्चर्यकारक है ।

**ध्रुवं त्वया सन्ततमङ्कलालिता तडिन्न जानाति परव्यथामियम् ।**
**अमन्थरं पान्थवधूकदर्थनान्निषेधति त्वां न किमर्थमन्यथा ॥५७॥**

### अन्वयः

इयं त्वया सन्ततम् अङ्कलालिता तडित् परव्यथां न जानाति । (इति) ध्रुवम्, अन्यथा इयम् अमन्थरं पान्थवधूकदर्थनात् त्वां किमर्थं न निषेधति ।

### व्याख्या

इयं प्रत्यक्षदृश्या त्वया भवता सन्ततं निरन्तरं 'सन्ततमविरतानिशम्' इत्यमरः । अङ्के उत्सङ्गे 'उत्सङ्गचिह्नयोरङ्कः' इत्यमरः । लालिता पालिता तडित् विद्युत् परेषां जनानां व्यथां दुःखं न जानाति न वेत्ति इति ध्रुवं निश्चितमेव अन्यथा एवं न चेत्तर्हि विद्युत् अमन्थरं निरन्तरं पान्थानां पथिकानां 'पान्थः पथिक इत्यपि' इत्यमरः । वध्वः स्त्रियस्तासां कदर्थनात् दुर्दशाकरणात् त्वां भवन्तं किमर्थं कथं न निषेधति निवारयति ।

### भाषा

तुम्हारे द्वारा सतत गोद में रखकर लालित यह बिजली दूसरो की मानसिक पीडा को नही समझती है। यह बात निश्चित है। अर्थात् जो सुख में रहता है उसे दूसरो की पीडा का अनुभव नही होता है। नही तो यह बिजली पथिको की स्त्रियो को लगातार पीडित करते रहने से तुम मेघ को क्यो नही मना करती है।

कथञ्चिदायाति यदि प्रियस्तदा न निश्चितं विश्वसिमः पुनस्त्वयि ।
मुहुः स्पृशन्विष्णुपदं नवाम्बुद स्वकार्यतात्पर्यमलं न मुञ्चसि ॥५८॥

### अन्वयः

यदि कथञ्चित् प्रियः आयाति तदा त्वयि पुनः निश्चितं न विश्वसिमः । हे नवाम्बुद मुहुः विष्णुपदं स्पृशन् स्वकार्यतात्पर्यम् अलं न मुञ्चसि ।

### व्याख्या

यदि यदा कथञ्चित् कृच्छ्रादपि प्रियः मम पतिः आयाति गृहमागच्छति तदा तस्मिन्समये त्वयि भवति मेघविषये पुनः निश्चितं न विश्वसिमः विश्वासं कुर्मः । हे नवाम्बुद मेघ ! मुहुर्वारम्वारं विष्णुपदमाकाशं 'वियद्विष्णुपदं वा तु

पुंस्याकाशविहायसी' इत्यमरः । विष्णुचरणं वा स्पृशन् स्वकार्यतात्पर्यं स्वकार्यतत्परतां पान्थस्त्रीदुःखसमर्पणपरायणतामलं पूर्णतया न मुञ्चसि न परित्यजसि ।

भाषा

यदि किसी प्रकार प्रियवर आ भी जायें तो भी तुम्हारे प्रति पूर्ण विश्वास नहीं किया जा सकता। हे नूतन मेघ ! तुम आकाश में पहुँच कर या विष्णु भगवान् के चरण छूकर बार बार कसम खाने पर भी पथिकों की स्त्रियों को दुःख देने के अपने कार्य को पूर्णतया नहीं छोड़ते हो ।

न केवलं ते बहिरेव नीलिमा नितान्तमभ्यन्तरमप्यनिर्मलम् ।
यदध्वगस्त्रीवधपातके घन प्रयासि मन्त्रित्वमयुग्मपत्रिणः ॥५९॥

अन्वयः

हे घन ते केवलं बहिः एव नीलिमा न अभ्यन्तरम् अपि नितान्तम् अनिर्मलम् । यत् अध्वगस्त्रीवधपातके अयुग्मपत्रिणः मन्त्रित्वं प्रयासि ।

व्याख्या

हे घन हे मेघ ! 'घनजीमूतमुदिरजलमुग्धूमयोनयः' इत्यमरः । ते केवलं बहिरेव बहिर्भाग एव नीलिमा श्यामता न प्रतीयते तेऽभ्यन्तरमन्तस्तलमपि हृदयमपि–नितान्तमत्यन्तमनिर्मलं श्यामलम् कालुष्ययुक्तमित्यर्थः । यदस्मात्कारणात् अध्वगानां पथिकानां स्त्रीणां कान्तानां-वधरूपपातके विनाशरूपपापकर्मणि अयुग्माः विषमाः पत्त्रिणो बाणाः 'पत्त्रिणौ शरपक्षिणौ' इत्यमरः । यस्य ॥ तस्य कामस्य मन्त्रित्वं साचिव्यं प्रयासि गच्छसि । अत्र काव्यलिङ्गालङ्कारः ।

भाषा

हे मेघ ! तुम्हारे में केवल बाहरी कालिमा ही नहीं है अर्थात् तुम ऊपर के ही काले नहीं हो, किन्तु तुम्हारा हृदय भी काला है । क्योंकि तुम पान्थों की स्त्रियों के प्राणों का अपहरणरूपपाप करने में कामदेव का मन्त्रित्व करते हो ।

अदक्षिणोऽपि प्रियकांक्षिणीष्वहो त्वमेतदेकं विदधासि कौतुकम् ।
वियोगिनिर्मूलनमूलकण्टकं मृगाङ्कबिम्बं कवलीकरोषि यत् ॥६०॥

अन्वयः

प्रियकाङ्क्षिणीषु अदक्षिणः अपि त्वम् अहो एतत् एकम् कौतुकं विदधासि। यत् वियोगिनिर्मूलनमूलकण्टकं मृगाङ्कबिम्बं कवलीकरोषि।

व्याख्या

प्रियकाङ्क्षिणीषु पतिसङ्गमेच्छावतीषु कान्तासु अदक्षिणः अनुदारः कटुव्यवहारवान् त्वं मेघः, अहो इत्याश्चर्यं, एतदिदमेवैकं कौतुकं प्रियं वस्तु विदधासि रचयसि। यद्यस्मात्कारणात् वियोगिनां विरहिणां निर्मूलनाय समूलविनाशाय मूलकण्टकं मूलकारणरूपं मृगाङ्कबिम्बं चन्द्रमण्डलं 'ग्लौर्मृगाङ्कः कलानिधिः' 'बिम्बोऽस्त्री मण्डलं त्रिषु' उभयत्राप्यमरः। कवलीकरोषि भक्षयसि।

भाषा

अपने प्रिय से मिलने की इच्छा रखने वाली वियोगिनियों से तुम बुरा व्यवहार करने वाले होने पर भी आश्चर्य की बात है कि तुम उनका यह एक प्रिय कार्य करते हो कि वियोगियों के नाश करने के मूल कारण चन्द्रबिम्ब को तुम खा जाते हो अर्थात् छिपा देते हो।

अखण्डितस्त्वं मकराकरादपि प्रभूतमाकृष्य जलं यदागतः।
किमुच्यते भाग्यविपर्ययस्य तद्विजृम्भितं पान्थचकोरचक्षुषाम् ॥६१॥

अन्वयः

यत् त्वं मकराकरात् प्रभूतं जलम् आकृष्य अपि अखण्डितः आगतः तत् पान्थचकोरचक्षुषां भाग्यविपर्ययस्य विजृम्भितम् किम् उच्यते।

व्याख्या

यद्यस्मात्कारणात् त्वं (मेघः) मकराणां मकरादिहिंस्रजन्तूनामाकरात् स्थानात् समुद्रात् यत्र गतस्सन् कोऽपि जीवित अच्छिन्नभिन्नो न पुनरावर्तते, नक्रग्राहादि महाघातुकजन्तुप्रहारादितिभावः। प्रभूतं प्रचुरं 'प्रभूतं प्रचुरं प्राज्यं' इत्यमरः। जलं पय आकृष्याऽपि गृहीत्वाऽपि अखण्डितः अच्छिन्नशरीरस्सन् आगतः पुनरागतः सकुशलमेव, तत्तस्मात्कारणात् पान्थानामध्वगानां चकोरचक्षुषश्च-कोरनेत्रास्त्रियस्तासां भाग्यस्य विपर्ययं वैपरीत्यं तस्य विजृम्भितं विलसितमिदं किमुच्यते किं कथ्यते। अत्राक्षेपालङ्कारः।

### भाषा

जो तुम मगरो आदि हिंस्र जानवरों से पूर्ण समुद्र में से बहुत सा जल लेकर भी बिना चुटीले भये सकुशल आ गये हो यह पान्थों की चकोर के ऐसी आंखों वाली स्त्रियों के दुर्भाग्य का विलास या प्रादुर्भाव है इस सम्बन्ध में क्या कहा जाय।

इदं तव क्ष्माधरशृङ्गसङ्गिनो विषापहारौषधिसङ्गतेः फलम् ।
रुणत्सि मार्गं यदनूरुसारथेस्तुरङ्गवल्गाभुजगैरभक्षितः ॥६२॥

### अन्वयः

(हे मेघ) (त्वं) यत् तुरङ्गवल्गाभुजगैः अभक्षितः अनूरुसारथेः मार्गं रुणत्सि इदं क्ष्माधरशृङ्गसङ्गिनः तव विषापहारौषधिसङ्गतेः फलम् ।

### व्याख्या

(हे मेघ त्वं) यत्तुरङ्गाणां सूर्याश्वानां 'घोटके वीतितुरगतुरङ्गाश्वतुरङ्गमाः' इत्यमरः। वल्गाः मुखरज्जव एव भुजगास्सर्पास्तैः अभक्षितः अकवलितः अनूरुः सारथिर्यस्य 'सूर्यसूतोऽरुणोऽनूरुः' इत्यमरः। स तस्य सूर्यस्य मार्गमध्वानं रुणत्सि, इद क्ष्माधराणां पर्वतानां शृङ्गाणि शिखराणि 'कूटोऽस्त्री शिखरं शृङ्गं' इत्यमरः। तेषां सङ्गो तस्य तव मेघस्य विषस्यापहारो निवर्तनं तस्यौषधयस्ततसङ्गतेस्सङ्गमस्य फलम्। पर्वतशृङ्गोपरि विषापसारकौषधीनां प्राचुर्येण प्राप्तिसम्भवः अतएव वल्गाभुजगानां न किमपि भयमिति भावः।

### भाषा

हे मेघ! जो तुम सूर्य के घोड़ो की लगाम रूपी सर्पों से बिना खाये गये सूर्य के मार्ग को रोक लेते हो यह पर्वत की चोटियों पर रहने वाले तुम्हारा विष दूर करने वाली औषधियों के सम्पर्क का ही फल है। अर्थात् पर्वत की चोटियों पर विषापहारी औषधियों के बल से ही तुम्हें घोड़ो की लगामरूपी सर्पों का विष असर नहीं करता।

सुरद्विपस्य ध्रुवमब्धिवार्तया कयापि पाथोद गतोऽसि बन्धुताम् ।
भवन्तमुन्मूलयितुं प्रगल्भते दिवि भ्रमन्वं न यदभ्रमूपतिः ॥६३॥

### अन्वयः

हे पाथोद कया अपि अब्धिवार्तया सुरद्विपस्य बन्धुतां गतः असि (इति) ध्रुवम् यत् अभ्रमूपतिः दिवि भ्रमन्तं भवन्तम् उन्मूलयितुं न प्रगल्भते।

### व्याख्या

पाथ उदकं 'कबन्धमुदकं पाथः' इत्यमरः। ददातीति पाथोदस्तत्सम्बोधने हे पाथोद मेघ ! कयापि अब्धिवार्तया समुद्रसम्बन्धिवृत्तान्तेन समुद्रसन्देशेन वा सुरद्विपस्यैरावतस्य, समुद्रादैरावतस्योत्पत्तिस्ततस्स तस्य पिता, तस्य बन्धुता प्रियत्वं भ्रातृभावं गतोऽसि इति ध्रुव निश्चयः। यत् अभ्रमु, ऐरावतस्य स्त्री 'करिण्योऽभ्रमु कपिला' इत्यमरः। तस्याः पतिः दिव्याकाशे भ्रमन्तं चरन्तं भवन्तं त्वामुन्मूलयितुं विनाशयितुं न प्रगल्भते न समर्थो भवति।

### भाषा

हे मेघ समुद्र के किसी सन्देश से अर्थात् पिता समुद्र के सन्देश वाहक होने के नाते तुम ऐरावत के अवश्य प्रिय हो गये हो। क्योंकि ऐरावत आकाश में स्वच्छन्द घूमने वाले तुमको उखाड़ कर फेंक देने में अर्थात् नष्ट कर देने में नहीं प्रवृत्त होता है।

अलं प्रलापैस्तुषधूमधूसरो विधूय यन्मृत्युशतानि गर्जसि।
प्रवासिकान्ताजनपापमूर्जितं तदेति जीमूत तवोपकारिताम् ॥६४॥

### अन्वयः

हे जीमूत प्रलापैः अलं यत् तुषधूमधूसरः (त्वं) मृत्युशतानि विधूय गर्जसि तत् ऊर्जितं प्रवासिकान्ताजनपापं तव उपकारिताम् एति।

### व्याख्या

हे जीमूत मेघ ! प्रलापैरनर्थकवाक्यप्रयोगैरलं यत् तुषाणां धान्यत्वचां 'धान्यत्वचि तुषः पुमान्' इत्यमरः। धूमवद्धूसर त्वं मृत्युशतानि प्रवासिकान्ता-जनशतमृत्युजनितपापानि विधूय निरस्य गर्जसि दर्पं प्रदर्शयसि तत् ऊर्जितं बलवत् प्रवासिनां स्वदेशमपहायान्यत्र गतवतां पुरुषाणां कान्ताजनानां स्त्रीजनानां पापं दुरितमेव तव मेघस्योपकारितां सहायतामेति प्राप्नोति।

भाषा

हे मेघ ! अब अधिक व्यर्थ की बातें करने से क्या लाभ । धान की भूसी के धूए ऐसे काले तुम जो पान्थो की सैकडो स्त्रियो के प्राण लेने के पाप को दबा कर गर्जना करते रहते हो इसका कारण यह है कि प्रवासीजनो की स्त्रियो का उत्कट पाप ही तुम्हारा उपकारक हो जाता है अर्थात् प्रवासी जनो की स्त्रियाँ अपने उत्कट पाप से ही दु ख भोगती है यह इनका पाप ही तुम्हारा उपकारक हो जाता है । नही तो तुम्हारे ऐसे प्राणघातक पापी इतना पाप कर भी गर्जना न कर सकते ।

स्मरज्वरव्याकुलितः कलावति ब्रवीति पाथोधरमुद्धुरध्वनिम् ।
अकुण्ठकण्ठागतबाष्पगद्गदैः पदैरिति प्रोषितवल्लभाजनः ॥६५॥

अन्वयः

हे कलावति ! स्मरज्वरव्याकुलितः प्रोषितवल्लभाजनः उद्धुरध्वनिं पाथोधरम् अकुण्ठकण्ठागतबाष्पगद्गदैः पदैः इति ब्रवीति ।

व्याख्या

हे कलावति ! चन्दलदेवि ! स्मरज्वरेण कामज्वरेण व्याकुलितः व्यग्रचित्तः प्रोषितानां पान्थानां वल्लभाजन. स्त्रीजनः उद्धुरः प्रचण्डो ध्वनिः शब्दो यस्य स तं पाथोधरं जलधरमकुण्ठानि अकुण्ठितानि अविरलानि कण्ठेषु गलेषु 'कण्ठो गलोऽथ ग्रीवायां' इत्यमरः । आगतानि बाष्पाणि अश्रूणि तैर्गद्गदानि तैः पदैः शब्दैरित्यमुना प्रकारेण ब्रवीति कथयति ।

भाषा

हे चन्दल देवी ! कामज्वर से पीडित पान्थो की स्त्री लोग, प्रचण्ड ध्वनि करने वाले मेघ को, लगातार गले में आए हुए आसुओ के कारण गद् गद् शब्दो से अर्थात् भरे गलो से इस प्रकार कहने लगी ।

अथ मेघस्तुतिं कुलकेनारभते—

क्षणद्युतिस्ते क्षणमस्तु मान्यथा सदाङ्कपर्यङ्कतले निषीदतु ।
घन त्वदीयध्वनिडिण्डिमं विना पतिं लभन्ते कथमध्वगाङ्गनाः ॥६६॥

अन्वयः

हे घन क्षणद्युतिः ते क्षणम् अन्यथा मा अस्तु । सदा अङ्कपर्यङ्कतले निषीदतु, त्वदीयध्वनिडिण्डिमं विना अध्वगाङ्गनाः कथं पतिं लभन्ते ।

व्याख्या

हे घन मेघ ! क्षणद्युतिर्विद्युत् ते तव क्षणमल्पकालमप्यन्यथा त्वद्वियुक्ता मास्तु । सदा अनवरतमङ्कमेव पर्यङ्कतलं 'मञ्चपर्यङ्कपल्यङ्काः खट्वया समाः' इत्यमरः । तस्मिन्नुत्सङ्गशयनतले निषीदतु निवसतु । त्वदीयध्वनिरूपं डिण्डिमं वाद्यघोषं 'मड्डुडिण्डिमझर्झराः' इत्यमरः । विना अध्वगाङ्गनाः पथिकाङ्गनाः कथं पतिं स्वकान्तं लभन्ते प्राप्नुवन्ति । तव शब्दं श्रुत्वैव कामासक्ता भूत्वा प्रियां प्रति प्रयान्तीति भावः ।

भाषा

हे मेघ ! बिजली से एक क्षण के लिये भी तुम्हारा वियोग न हो । वह सदैव तुम्हारी गोद रूपी पलङ्ग पर निवास करे । आपके शब्द रूपी नगाड़े के घोष बिना पथिको की स्त्रियाँ कैसे अपने २ पति को प्राप्त कर सकती हैं । अर्थात् वे तुम्हारे शब्द को सुनकर ही कामासक्त होकर प्रिया के पास आते हैं ।

न षोडशीमप्युपयाति ते कलां प्रसिद्धिमात्रं स्मरबान्धवो मधुः ।
शिरस्यकुर्वन्मदनस्य शासनं मुखं त्वदीयं मलिनं सहेत कः ॥६७॥

अन्वयः

मधुः स्मरबान्धवः प्रसिद्धिमात्रं (सः) ते षोडशीम् अपि कलां न उपयाति कः मदनस्य शासनं शिरसि अकुर्वन् त्वदीयं मलिनं मुखं सहेत ।

व्याख्या

मधुर्वसन्तः स्मरस्य कामस्य बान्धवः बन्धुस्सहायकः इति प्रसिद्धिमात्रं परन्तु स वसन्तः ते मेघस्य षोडशीं कलां सादृश्यमपि नोपयाति न प्राप्नोति । कामस्य साहाय्यकरणे यादृश उपयोगी त्वं तादृशः वसन्तो न "मेघालोके भवति सुखिनो-ऽप्यन्यथावृत्ति चेतः । कण्ठाश्लेषप्रणयिनि जने किं पुनर्दूरसंस्थे" । इति मेघदूते कालिदासः । कः मदनस्य कामस्य शासनमाज्ञां शिरसि मूर्ध्नि 'उत्तमाङ्गं

शिरः शीर्षं मूर्धा ना मस्तकोऽस्त्रियाम्' इत्यमरः। अकुर्वन्नपालयन् त्वदीयं त्वत्सम्बन्धि मेघस्य तव मलिन कृष्ण मुखमाननमप्रभागं सहेत सोढुं शक्नुयात्।

### भाषा

वसन्त ऋतु कामदेव का मित्र है यह प्रसिद्धिमात्र है अर्थात् खाली कहने की बात है। वह तुम्हारी सोलहवीं कला को भी नहीं प्राप्त होता अर्थात् इस काम में वह तुम्हारा सोलहवाँ हिस्सा भी नहीं है। कौन ऐसा है जो कामदेव की आज्ञा का बिना शिरसा पालन किये तुम्हारे इस कृष्ण वर्ण के मुख को देखने की भी हिम्मत करेगा।

समागतप्राणसमा करोति या न ते सपर्याविधिमध्वगाङ्गना।
पुनः प्रियोऽस्याः किमतः परेण वा घन त्वमेवाशुकविर्भवोपरि ॥६८॥

### अन्वयः

या समागतप्राणसमा अध्वगाङ्गना ते सपर्याविधिं न करोति। अस्याः प्रियः परेण वा किं ( आनीतः स्यात् ) हे घन, अतः त्वम् एव भवोपरि आशुकविः ( असि )

### व्याख्या

या, प्राणैः समः प्रियः प्राणसमः पतिः, समागतः विदेशात् प्रत्यागतः प्राणसमः पतिर्यस्यास्सा अध्वगाङ्गना पथिककान्ता ते मेघस्य सपर्याविधिं पूजाविधिं "पूजा नमस्यापचितिः सपर्यार्चार्हणाः समाः" इत्यमरः। न करोति न सम्पादयति। अस्याः विरहिण्याः प्रियः पतिः परेणान्येन केन वा किं कृपमपि आनीतः स्यात्। त्वदभावे वियोगिनां सम्मेलनं न केनापि कृतं स्यादिति भावः। हे घन हे मेघ! अतः अस्मात्कारणात् त्वमेव भवानेव भवोपरि अस्मिन् लोके आशुकविः समस्यापूरको वियोगिनां दुःखहर्ताऽसि। त्वद्दर्शनजन्यचित्तोद्वेगेन स्वकान्तामिलनार्थं पुनः प्रतिनिवृत्य पथिकाः गृहं प्राप्नुवन्ति। मेघकृततादृशोपकारकरणाद्वियोगिन्यास्तस्य पूजा समुचितेति भावः।

### भाषा

जिन पथिकों की स्त्रियों के पति आ गये हैं वे स्त्रियाँ यदि तुम्हारा पूजनादि करें तो ठीक ही है। क्या कोई दूसरा उनके पति को ला मिला सकता है।

हे मेघ ! इसलिये तुम ही इस संसार में समस्यापूरक हो अर्थात् वियोगियों को मिलाने में समर्थ हो।

**वियोगिनां संघटने भवत्समः परोऽस्ति जीमूत न दूतकर्मणि ।**
**वदन्ति नान्यैः सह याः कुलस्त्रियो ध्रुवं तदर्थं वहसि क्षणप्रभाम् ॥६९॥**

अन्वयः

हे जीमूत वियोगिनां संघटने दूतकर्मणि भवत्समः परः न अस्ति। याः कुलस्त्रियः अन्यैः सह न वदन्ति तदर्थं क्षणप्रभां ध्रुवं वहसि।

व्याख्या

हे जीमूत मेघ ! 'जीमूतो मेघपर्वतौ' इत्यमरः। वियोगिनां विरहिणां स्त्रीणां पुरुषाणां च संघटने सम्मेलनविषये दूतकर्मणि सन्देशहारककार्ये भवत्समः त्वत्तुल्यः परः अन्यो नास्ति। याः कुलस्त्रियः कुलीनाङ्गना अन्यैरितरपुरुषैस्सह न वदन्ति भाषणं न कुर्वन्ति तदर्थं भाषणादिकार्यकरणार्थं क्षणप्रभां विद्युतं स्त्रियं ध्रुवं निश्चयेन वहसि धारयसि। स्त्रीणां स्त्रीभिस्सह वार्तालापादिकार्यं सुलभं भवतीत्याशयेन मेघो विद्युतं सहैव धारयतीति भावः। अत्रोत्प्रेक्षालङ्कारः।

भाषा

हे मेघ ! वियोगियों को मिलाने में दूत का कार्य करने में तुम्हारे ऐसा दूसरा कोई नहीं है। जो स्त्रियाँ पर पुरुष से भाषण करने में सकोच करती हैं उन्हीं के लिये निश्चित रूप से तुम बिजली को अपने साथ रखते हो।

**विमुक्तवेणीवलयाः पुरन्ध्रयः प्रियाङ्कपालीपरिवासशीतलाः ।**
**अनङ्गसाम्राज्यविलासमन्त्रिणः प्रभावमम्भोद निवेदयन्ति ते ॥७०॥**

अन्वयः

हे अम्भोद ! विमुक्तवेणीवलयाः पुरन्ध्रयः प्रियाङ्कपालीपरिवास-शीतलाः ( सत्यः ) अनङ्गसाम्राज्यविलासमन्त्रिणः ते प्रभावं निवेदयन्ति।

व्याख्या

हे अम्भोद हे मेघ ! विमुक्तानि निश्शिलीकृतानि वेणीवलयानि वेणीरूपेण ग्रथिताः शिरोरुहा याभिस्ता विमुक्तवेणीवलयाः विरहिण्य, विप्रलम्भावस्थायां विर-

हिप्य एकवेणीव्रतेन तिष्ठन्तीति, पतिसमागमेन तद्व्रतं समाप्यत इति भावः। पुरन्ध्रयः अङ्गनाः प्रियाणां पतीनामङ्कपालीपूत्सङ्गेषु परिवासेन स्थितिकरणेन शीतलाः शान्तकामसन्तापाः सत्यः, 'मेघदर्शनेन पथिकाः स्वगृहे प्रतिनिवृत्य स्वकान्ताभिस्सह रमन्ते' इति भावः। अनङ्गसाम्राज्यस्य कामनृपाधिपत्यस्य विलासमन्त्री रतिक्रीडामात्यो मेघस्तस्य प्रभावं माहात्म्यं निवेदयन्ति विज्ञापयन्ति प्रकटयन्तीति भावः।

भाषा

हे मेघ ! वे स्त्रियाँ जिनकी विरहावस्था का एकवेणीव्रत पति के आ जाने से छूट गया है अर्थात् जिनकी वेणी का बंधन खुल गया है, वे अपने प्रिय की गोद में रहने से शीतल भई हुई, कामदेव के साम्राज्य के रतिक्रीडामन्त्री तुम्हारा प्रताप प्रकट कर रही हैं।

**स्मरातुराणां विदधासि दुर्दिनं प्रियाभिसाराय कुरङ्गचक्षुषाम् ।**
**रतोत्सवे काण्डपटत्वमेषि च त्वमग्रणीर्मेघ परोपकारिणाम् ॥७१॥**

अन्वयः

हे मेघ (त्वम्) स्मरातुराणां कुरङ्गचक्षुषां प्रियाभिसाराय दुर्दिनं विदधासि, रतोत्सवे काण्डपटत्वं एषि, त्वं परोपकारिणां अग्रणीः।

व्याख्या

हे मेघ ! त्वं स्मरेण कामेनातुराणां पीडितानां कुरङ्गचक्षुषां मृगनयनानां प्रियान्प्रत्यभिसाराय संगन्तुं दुर्दिनं मेघच्छन्नं 'मेघच्छन्नेऽह्नि दुर्दिनम्' इत्यमरः। दिनमन्धकारयुक्तमित्यर्थः। विदधासि रचयसि। मेघावृतत्वादन्धकारे गुप्तगमनं सम्भवतीति भावः। रतोत्सवकाले काण्डपटत्वं जवनिकात्वम् एषि प्राप्नोषि त्वं परोपकारिणां मध्येऽग्रणीर्नेता श्रेष्ठ इत्यर्थः। असि। अत्र काव्यलिङ्गमलङ्कारः।

भाषा

हे मेघ ! तुम काम से पीडित मृगनयनियों के अपने प्रिय के पास अभिसरण करने के लिये अर्थात् छिप कर आने के लिये आकाश को ढँक कर दिन में अंधेरा कर देते हो अर्थात् अंधेरा कर देने से छिप कर जाने में सहूलियत पैदा कर देते हो। रति क्रीडा के समय परदे का काम करते हो। तुम परोपकारियों में सर्वश्रेष्ठ हो।

विभाववर्गे जलद त्वमग्रणीर्न चन्द्रिकापि द्युतिमेति तावकीम् ।
करोषि किं शुभ्रतया तदीयया न सुन्दरं चन्दनमेणनाभितः ॥७२॥

अन्वयः

हे जलद विभाववर्गे त्वम् अग्रणीः, चन्द्रिका अपि तावकीं द्युतिं न एति । तदीयया शुभ्रतया किं करोषि, एणनाभितः चन्दनं सुन्दरं न भवति ।

व्याख्या

हे जलद मेघ ! विभाववर्गे चन्द्रचन्दनचन्द्रिकाद्युद्दीपनसमूहे त्वमग्रणीर्नेता श्रेष्ठोऽसि । चन्द्रिका चन्द्रप्रकाशोऽपि तावकीं द्युतिं शोभां नैति साम्यं न प्राप्नोति, तदीयया चन्द्रिकासम्बन्धिन्या शुभ्रतया किं करोषि, एणनाभितः 'एणस्त्यैणमुभे त्रिषु' इत्यमरः । कृष्णवर्णकस्तूर्यपेक्षया श्वेतवर्णं चन्दनं सुन्दरं रमणीयं न भवति । अत्र दृष्टान्तालङ्कारः ।

भाषा

हे मेघ ! चन्द्र, चन्दन, चन्द्रिका आदि उद्दीपन विभावों में तुम सर्वश्रेष्ठ हो । चन्द्रिका भी तुम्हारी बराबरी नहीं कर सकती । उसकी सफेदी का क्या विचार करना है । काले रंग की कस्तूरी से सफेद रंग का चन्दन बढ़ कर नहीं होता है ।

करोति चैत्रः सह चन्दनानिलैः किमिन्दुना कोकिलपञ्चमेन च ।
न विद्यते जेतुरनङ्गभूपतेः किमन्यदेकाङ्गभटस्त्वया समः ॥७३॥

अन्वयः

चैत्रः चन्दनानिलैः इन्दुना कोकिलपञ्चमेन च सह किं करोति । किम् अन्यत् । जेतुः अनङ्गभूपतेः त्वया समः एकाङ्गभटः न विद्यते ।

व्याख्या

चैत्रः वसन्तमासः चन्दनानिलैः चन्दनपवनैः इन्दुना चन्द्रेण कोकिलपञ्चमेन कोकिलस्य पञ्चमस्वरेण च सह किं करोति, कामस्य किं साहाय्यं कर्तुं शक्नोतीति भावः । किमन्यद्वक्तव्यम् । जेतुः जयनशीलस्यानङ्गभूपतेः कामनृपस्य त्वया मेघेन समः सदृशः एकाङ्गभटोऽद्वितीयरक्षको वीरो न विद्यते । नास्तीत्यर्थः ।

भाषा

चैत्रमास या वसन्तऋतु चन्दन से सुगन्धित दक्षिणानिल, चन्द्रमा और कोयल के पञ्चम स्वर के साथ रहने पर भी क्या करता है अर्थात् कामदेव की कौन सी सहायता करता है। और दूसरा क्या कहा जाय। विजय करने वाले कामदेव राजा का तुम्हारे समान अद्वितीय रक्षक वीर अन्य कोई नहीं है।

**पयोद ! यासां भवतोऽपि दर्शनान्न वल्लभः संघटते मृगीदृशाम् ।**
**न ताः क्रियन्ते गणनासु दुर्भगाः करोति कश्चित्रमजातभित्तिषु॥७४॥**

अन्वयः

हे पयोद यासां मृगीदृशां वल्लभः भवतः दर्शनाद् अपि न संघटते ताः दुर्भगाः गणनासु न क्रियन्ते कः अजातभित्तिषु चित्रं करोति।

व्याख्या

हे पयोद मेघ ! यासां मृगीदृशां हरिणनयनानां वल्लभः प्रियः भवतः मेघस्य दर्शनादपि न संघटते न सम्मिलति स्वकान्ताभिः । ताः स्त्रियः दुर्भगाः अभाग्यवत्यः गणनासु संख्याकाले न क्रियन्ते, यतस्तासां प्राणवियोगात्संख्यावसर एव न भवतीति भावः । कः पुरुषः अजातभित्तिषु अविद्यमानेषु कुड्येषु 'भित्तिः स्त्री कुड्यमेडूकं' इत्यमरः । चित्रं करोति निर्मातुं प्रभवति।

भाषा

हे मेघ ! जिन (विरहिणी) मृगनयनियों के पति आपके दर्शन होने पर भी अर्थात् वर्षाऋतु आने पर भी उनसे नहीं आ मिलते है, उन अभागी स्त्रियों की कोई गणना नहीं है क्योंकि विरहावस्था में वर्षाऋतु के आने पर भी पति के न मिलने से उनका देहान्त हो जाना स्वाभाविक है। क्योंकि भीत के न रहने पर कौन उस पर चित्रकारी कर सकता है। अर्थात् जब ऐसी स्त्रियाँ जीवित ही नहीं रहती तो उनकी गणना करना ही व्यर्थ है।

**समागते प्रेयसि चाटुकारितामिति स्मितक्षालितपाटलाधराः ।**
**भजन्ति काश्चिद्विमलेन चेतसा विलासमीलन्नयनाः पयोमुचः ॥७५॥**

अन्वयः

काश्चित् प्रेयसि समागते (सति) स्मितक्षालितपाटलाधराः विलासमीलन्नयनाः(सत्यः)विमलेन चेतसा पयोमुचः इति चाटुकारितां भजन्ति।

### व्याख्या

काश्चिदङ्गना मेघाडम्बरं दृष्ट्वा प्रेयसि कान्ते समागते गृहं प्राप्ते सति स्मितेनेषद्धास्येन क्षालितः समलङ्कृतः पाटलो रक्तोऽधरो 'श्वेतरक्तस्तु पाटलः' इत्यमरः । यासान्ताः विलासेन मीलत्संकुचन्नयन यासान्ता सत्य विमलेन पत्युरागमनात्प्रसन्नेन चेतसा हृदयेन पयोमुचः मेघस्य इति पूर्वोक्तां चाटुकारितां भजन्ति समक्षं तस्य प्रशंसा कुर्वन्ति ।

### भाषा

पति के आने पर मुस्कुराहट से चमकने वाले लाल अधरोष्ठ वाली, कोई स्त्रियाँ, मस्ती से आँखें बन्द कर, पति के मिलन से प्रसन्न भए हुए हृदय से पूर्वोक्त प्रकार से मेघ की चापलूसी करती हैं ।

अथाभिसारिकाणां नदीं प्रत्युपालम्भकुलकम्—

अलब्धरत्नाकरसङ्गमामृता तथा गता ग्रीष्मदिनेषु तानवम् ।
अदृष्टदुःखेव सखि ! प्रयासि मे कुतः प्रियालिङ्गनभङ्गहेतुताम् ॥७६॥

### अन्वयः

हे सरित् अलब्धरत्नाकरसङ्गमामृता (अतएव) ग्रीष्मदिनेषु तथा तानवं गता (त्वं) अदृष्टदुःखा इव मे प्रियालिङ्गनभङ्गहेतुतां कुतः प्रयासि।

### व्याख्या

हे सखि ! नदीं प्रति सम्बोधनम् । अलब्धमप्राप्त रत्नाकरस्य समुद्रस्य 'रत्नाकरो जलनिधिः' इत्यमरः । सङ्गमस्सममृतं यया सा अतएव ग्रीष्मदिनेषूष्णदिनेषु तथा तादृश तानवं कृशत्व गता प्राप्ता त्व विरहिणी तथा परञ्च सम्प्रति वर्षतौ अदृष्टमननुभूत दुःख यया सा अदृष्टदुःखा इव मे मम प्रियस्य मम पत्युरालिङ्गनस्याश्लेषस्य भङ्गस्तस्य हेतुतां कारणतां कुतः कस्माद्धेतोः प्रयासि । नदीषु जलपूर्णाभिसारिकाणां नदीपारगमनं न सरलतया सम्भवमतएव पत्युरालिङ्गनभङ्गहेतुता नदीनामिति भावः ।

### भाषा

हे सखी नदी ! समुद्र के आलिङ्गन रूपी अमृत को न प्राप्त करने वाली अतएव गर्मी में विरहावस्था के कारण उस प्रकार सूखी हुई तू, मानो तूने कभी

विरहवेदना का अनुभव ही न किया हो ऐसी होकर मेरे पति के आलिङ्गन का भङ्ग करने में कारणीभूत क्या हो रही हूँ। अभिसारकाओं का वर्षाऋतु में नदी बढ जाने से प्रेमी से मिलने में बाधा होती है।

मुहूर्तमामीलितमूर्तिरम्बरे विगाहसे फालविलङ्घनीयताम् ।
सलीलमुत्तीर्य भवन्ति पांसुलाः समुल्लसन्मांसलकान्तकेलयः ॥७७॥

अन्वयः

अम्बरे मुहूर्तम् आमीलितमूर्तिः ( सती ) फालविलङ्घनीयता विगाहसे ( तदा ) पांसुलाः सलीलम् उत्तीर्य समुल्लसन्मांसलकान्त-केलयः भवन्ति ।

व्याख्या

अम्बरे आकाशे मुहूर्तं क्षणमामीलिता गोपिता मूर्तिर्जलडम्बर यया सा, ग्रीष्मे सूर्यकिरणैर्गृहीत तासां जलाधिक्य गगने तिष्ठतीति भाव । सती, फालेनोत्प्लवनेन विलङ्घनीयता पारगमनक्षमता विगाहसे प्राप्नोषि तदा पांसुलास्स्वैरविहारिण्योऽङ्गना 'स्वैरिणी पांसुला च स्यात्' इत्यमर । लीलया विलासेन सहित सलील यथा स्यात्तथा उत्तीर्य विनैव प्रयास पार गत्वा प्रिय-निवासदेश प्राप्य समुल्लसन्त्यो वर्धमाना मांसला बहुला कान्तस्य प्रियस्य केलय क्रीडा मासान्ता भवन्ति, सानन्द प्रियैस्सह रमन्त इति भाव ।

भाषा

(जब) थोड़ी देर के लिये आकाश में अपने जल समूह को छिपा रखने वाली होकर अर्थात् ग्रीष्म में सूर्य की किरणो से जिसका जलसमूह खींचकर आकाश में ले जाया गया है, ऐसी होकर एक छलाग में पार की जा सकने वाली हो जाती है तब अभिसारिकाऐं सहज ही में तुम्हारे पार उतर कर अर्थात् तुम्हे पार कर (अपने प्रिय से मिलकर) उमडी हुई (रस भरी) अपने प्रिय की अनेक रतिक्रीडाओ को प्राप्त करने वाली हो जाती हैं।

घटं समारुह्य विघट्टितोर्मयः प्रयान्ति ते पारमवारिताः पराः ।
अपुण्यवत्याः पुनरेष मे गतिं भिनत्ति नावापि नितम्बडम्बरः ॥७८॥

अन्वयः

पराः घट समारुह्य विघट्टितोर्मयः अवारिताः ते पारं प्रयान्ति ।
पुनः अपुण्यवत्याः मे एषः नितम्बडम्बरः नावा अपि गतिं भिनत्ति ।

व्याख्या

परा अन्या नायिका घटं समारुह्य घटोपरि स्थित्वा विघट्टिता विशृङ्खलिता भग्ना या ऊर्मयो वीचयो 'भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रियां वीचि' इत्यमरः। याभिस्ता अवारिता अप्रतिरुद्धास्सत्य ते तव नद्याः पारं प्रयान्ति, स्वप्रिय-सम्मिलनार्थमभिसारिका गच्छन्ति। किं पुनः अपुण्यवत्या दुर्भाग्यशालिन्या मे मम एष नितम्बडम्बरो नितम्बभारः नावा नौकयाऽपि गतिं प्रियसमीपगमनं भिनत्ति निवारयति। नितम्बस्यातिभारान्नावापि गमनमसम्भवमिति भावः।

भाषा

दूसरी स्त्रियाँ घड़े पर बैठकर लहरों को काटती हुईं बिना रोक टोक के तुम्हारे (नदी के) पार हो जाती हैं। और फिर मुझ पापिनी का यह नितम्ब का बोझ प्रिय के समागम में नाव पर भी पार जाने में बाधक होता है। अर्थात् नितम्ब के अधिक बोझे से नाव से भी तुम्हें पार करना मुझ पापिनी के लिये कठिन है।

विधाय कोलाहलमूर्मिभिर्मुधा किमित्यनाकर्णितकेन गच्छसि।
उपार्जितस्त्रीवधपापसम्पदः कथं पयोधिस्तव सङ्गमेष्यति ॥७६॥

अन्वयः

(हे नदि) ऊर्मिभिः मुधा कोलाहलं विधाय अनाकर्णितकेन किम् इति गच्छसि। पयोधिः उपार्जितस्त्रीवधपापसम्पदः तव सङ्गं कथम् एष्यति।

व्याख्या

(हे नदि) ऊर्मिभिस्तरङ्गैः मुधा वृथा कोलाहलं कलकलशब्दं विधाय कृत्वा अनाकर्णितकेन किमपि कस्यापि कथनं न श्रुत्वा, असमाकर्णितपूर्वमिव यथा। किमिति गच्छसि प्रवहसि। पयोधिस्समुद्रः उपार्जिता सङ्गृहीता स्त्रीणां वधजन्या पापसम्पत् एनोबाहुल्यं 'कलुषं वृजिनैनोऽघम्' इत्यमरः। यया सा तस्यास्तव (नद्याः) सङ्गं सङ्गमं कथमेष्यति प्राप्स्यति।

भाषा

हे नदी! लहरों से व्यर्थ ही कोलाहल मचाकर किसी की भी बात को न सुनती हुई तू कैसे चली जा रही है। (विरहिणी) स्त्रियों की हत्या करने

के पाप को उपार्जित करने वाली का, तेरा समुद्र से मिलन कैसे हो सकता है। अर्थात् पाप का सचय करने वाली को पति-सगम ऐसा सुख कैसे प्राप्त होगा। अथवा तेरे ऐसी पापिनी का समुद्र कैसे सग करेगा।

**नयस्व पारं पुलिनद्वयानुगां तरङ्गदोलामधिरोप्य मामितः।**
**प्रसीद यावन्न निशा विशीर्यते यशांसि ते गायतु पांसुलाजनः ॥८०॥**

अन्वयः

यावत् निशा न विशीर्यते मां पुलिनद्वयानुगां तरङ्गदोलाम् अधिरोप्य इतः पारं नयस्व। प्रसीद पांसुलाजनः ते यशांसि गायतु।

व्याख्या

यावत्काल निशा रात्रिर्न विशीर्यते समाप्ति न गच्छति तावत्काल माम-सहायामबला पुलिनद्वय तीरद्वय 'तोयोत्थित तत्पुलिनम्' इत्यमरः। अनुगच्छतीति पुलिनद्वयानुगा ता तरङ्ग एव दोला प्रेङ्खा 'दोला प्रेङ्खादिकास्त्रियाम्' इत्यमरः। तामधिरोप्य समारोप्य इत अस्मात्प्रदेशात् पारमन्यतट नयस्व प्रापय। प्रसीद प्रसन्ना भव। पासुलाजन स्वैरविहारिणीजन 'स्वैरिणी पासुला च स्यात्' इत्यमरः। ते यशासि गायतु तव प्रशसा करोतु।

भाषा

जब तक रात खतम नही होती है उसके पहिले ही मुझे दोनो किनारो से सट कर बहने वाले लहर रूपी झूले पर चढाकर यहा से उस पार ले जा। कृपा कर। स्वच्छन्दचारिणी स्त्रियाँ अर्थात् अभिसारिकाएँ ऐसा करने से तेरा यश गान करेंगी।

**सहस्रशः कृष्णनिशास्वहं गता पदं तव न्यस्य शिरस्यवारिता।**
**समृद्धिगर्वेण किमन्धतां मुधा दधासि नन्वस्ति घनात्ययः पुनः॥८१॥**

अन्वयः

अहं कृष्णनिशासु सहस्रशः तव शिरसि पदं न्यस्य अवारिता गता। समृद्धिगर्वेण अन्धतां मुधा किं दधासि घनात्ययः ननु पुनः अस्ति।

व्याख्या

अहं कृष्णनिशासु कृष्णपक्षरात्रिषु सहस्रशः सहस्रवारमगणितवारमित्यर्थः । तव नद्याः शिरसि पदं चरणं न्यस्य निक्षिप्य ग्रीष्मकाले अवारिता केनापि अप्रतिरुद्धा नदीपारं गता । सम्प्रति वर्षर्तौ समृद्धिगर्वेण जलसम्पत्तिदर्पेणान्धतामविवेककारिता मुधा वृथा किं वधासि धारयसि । घनानां मेघानामत्ययो विनाशो 'स्यात्पञ्चता कालधर्मो दिष्टान्तः प्रलयोऽत्ययः' इत्यमरः । ननु निश्चयेन पुनः अस्ति । पुनरपि स कालः समागच्छति यस्मिन् घनानामभावः स्यादिति भावः ।

भाषा

(ग्रीष्म ऋतु में) कृष्ण पक्ष की हजारों काली रातों में मैं तुम्हारे मस्तक पर पाँव रखकर अर्थात् तुम्हें लाँघ कर बिना रोक टोक के उस पार (प्रेमी से मिलने) गई हूँ । (वर्षाऋतु में) जल से समृद्ध हो जाने के कारण तू व्यर्थ ही मदान्ध हो रही है । वर्षाऋतु की समाप्ति फिर से होगी और ग्रीष्मऋतु आवेगा ही ।

परिस्खलद्वीचिदुकूलपल्लवा बलात्समुद्राभिमुखी प्रधावसि ।
करोषि चान्यासु निषेधमित्यहो स्वयं विमूढासि परासु पण्डिता ॥८२॥

अन्वयः

( हे नदि ) त्वं परिस्खलद्वीचिदुकूलपल्लवा बलात् समुद्राभिमुखी प्रधावसि अन्यासु च निषेधं करोषि इति अहो स्वयं विमूढा परासु पण्डिता असि ।

व्याख्या

हे नदि ! त्वं परिस्खलन् स्वस्थानात्प्रभ्रश्यन् वीचयस्तरङ्गा एव दुकूलपल्लवो वस्त्राञ्चलो यस्यास्सा बलाद् वेगात समुद्राभिमुखी समुद्रं स्ववल्लभमभिलक्ष्य प्रधावसि गच्छसि अन्यासु नायिकासु च प्रियसमीपगमनस्य निषेधं विरोधं करोषी-त्यहो इत्याश्चर्यम्, स्वयं विमूढा विवेकशून्या परासु अन्यासु नायिकासु अभि-सारिकासु पण्डिता निषेधोपदेशदानचतुरा असि । नैतद्युक्तमिति भावः ।

भाषा

हे नदी ! खिसकने वाले तरङ्गरूपी साड़ी के आँचल वाली तू हठपूर्वक (अपने प्रिय) समुद्र से मिलने को दौड़ रही है और दूसरों को मना कर रही है ।

अरे कैसे आश्चर्य की बात है कि अपने तो (पति से मिलने के लिये) व्याकुल होकर विवेक शून्य हो रही हैं और दूसरों के लिये ऐसा न करने के लिये उपदेश देने में पण्डित बनती हैं।

नितम्बपर्यन्तगलज्जलांशुका समुत्सुका किं कुटिले प्रधावसि।
कुलापगान्तःपुरवक्त्रचुम्बिनो न लप्स्यसे दास्यमपि त्वमम्बुधेः॥८३॥

अन्वयः

हे कुटिले नितम्बपर्यन्तगलज्जलांशुका समुत्सुका (सती) किं प्रधावसि। कुलापगान्तःपुरवक्त्रचुम्बिनः अम्बुधेः त्वं दास्यम् अपि न लप्स्यसे।

व्याख्या

हे कुटिले! स्वभाववक्रे! नितम्बस्तटप्रदेशः कटिपश्चाद्भागश्च तत्पर्यन्तं गलद्गच्छद् जलमेवांशुकं वस्त्रं यस्यास्सा समुत्सुका सती समुद्ररूपपतिमिलनोत्सुका सती किं प्रधावसि वेगेन गच्छसि। कुलापगा कुलपर्वतनद्यः मूलनद्य एव अन्तःपुरं स्त्र्यगारं "स्त्र्यगारं भूभुजामन्तःपुरं स्यादवरोधनम्। शुद्धान्तश्चावरोधश्च" इत्यमरः। तत्स्थकान्तास्तन्मुखस्य (अग्रभागस्य) चुम्बिनः अम्बुधेस्समुद्रस्य त्वं दास्यमपि सेवकत्वमपि, सामीप्यमपीति भावः। न लप्स्यसे न प्राप्स्यसि किं पुनः रतिविलासम्। कुलनद्य एव समुद्रं प्राप्नुवन्ति न पर्वतनद्य इति भावः। अत्र समासोक्तिरलङ्कारः।

भाषा

अरे कुटिल बुद्धि वाली नदी! नितम्ब तक या तट प्रदेश तक गिरने वाले या बहने वाले जल रूपी वस्त्र को धारण करने वाली तू बड़े उमंग से क्यों दौड़ रही है अर्थात् क्यों अपने प्रिय समुद्र से मिलने के लिए उतावली हो रही है। तू (गङ्गादि) कुलनदी रूपी अन्तःपुर की स्त्रियों का मुख चुम्बन करने वाले समुद्र की दासता या समीपता भी नहीं प्राप्त कर सकती। अर्थात् कुलनदियाँ ही समुद्र तक पहुँच पाती हैं पहाड़ी नदियाँ नहीं।

मया कुमार्यापि न सुप्तमेकया न जारमुत्सृज्य पुमान्विलोकितः।
अनेन गोत्रस्थितिपालनेन मे प्रसन्नतामेत्य भवोपकारिणी॥८४॥

व्याख्या

मया कुमार्या अपि एकया न सुप्तम्, जारम् उत्सृज्य पुमान् न विलोकितः। अनेन गोत्रस्थितिपालनेन प्रसन्नताम् एत्य मे उपकारिणी भव।

व्याख्या

मया कुमार्याप्यपरिणीतयापि एकया केवलया न सुप्तं न निद्रितं जारमन्यपुरुषं 'जारस्तूपपतिः समौ' इत्यमरः। उत्सृज्य परिहाय पुमान् स्वभर्ता न विलोकितः न दृष्टो नापेक्षित इति भावः। अनेन गोत्रस्याभिसारिकाकुलस्य स्थितिर्मर्यादा तस्याः पालनेन परिरक्षणेन प्रसन्नतां प्रसादं 'प्रसादस्तु प्रसन्नता' इत्यमरः। एत्य प्राप्य मे ममोपरि उपकारिण्युपकारकर्त्री भव।

भाषा

मैं कुमारी अर्थात् अविवाहिता होने पर भी अकेली नहीं सोई। परपुरुष को छोड़ कर अपने पति का मुख भी नहीं देखा या अपने पति को कभी प्रतीक्षा न की। इस अभिसारिकाओं के कुल की मर्यादा का पालन करने के कारण तू मेरे ऊपर प्रसन्न होकर मेरा उपकार करने वाली हो।

इति स्मरार्तः प्रमदाजनोऽधुना निशासु कान्तानभिगन्तुमुद्यतः।
न वक्ति कोपात्कतरां तरङ्गिणीमनङ्गशृङ्गारसमुद्रवाहिनि ॥८५॥

अन्वयः

हे अनङ्गशृङ्गारसमुद्रवाहिनि निशासु स्मरार्तः सन् कान्तान् अभिगन्तुम् उद्यतः प्रमदाजनः अधुना कोपात् कतरां तरङ्गिणीम् इति न वक्ति।

व्याख्या

अनङ्गः काम एव शृङ्गारसमुद्रः शृङ्गाररसपारावारस्तस्य वाहिनी नदी तत्सम्बोधने हे अनङ्गशृङ्गारसमुद्रवाहिनि! निशासु रात्रिषु स्मरार्तः कामपीडितः सन् कान्तान् स्वप्रियानभिगन्तुमभिसर्तुमुद्यतः सन्नद्धः प्रमदाजनः स्त्रीजनोऽधुना इदानीं कोपात् कोपात् कतरां कां तरङ्गिणीं नदीं "तरङ्गिणी शैवलिनी तटिनी ह्रादिनी धुनी" इत्यमरः। इति पूर्वोक्तरीत्या न वक्ति कोपातान्न ब्रूते।

### भाषा

हे काम रूपी शृङ्गार समुद्र की नदी ! चन्द्रलेखा ! रात्रियों में काम से पीडित होकर, अपने प्रियों के पास अभिसरण करने के लिए तत्पर ललनाजन, वर्षाऋतु में क्रोध से किस नदी को पूर्वोक्त बातें नहीं कहता।

इति सरिदुपालम्भात्मकं कुलकम्।

अविरलजलधाराधोरणीधौतवस्त्राः
सपदि मदनहस्तन्यस्तहस्तास्तरुण्यः।
किमपि न गणयन्ति प्राणनाथाङ्कपाली-
रभसपुलकिताङ्ग्यः पङ्किलासु स्थलीषु ॥८६॥

### अन्वयः

सपदि अविरलजलधाराधोरणीधौतवस्त्राः मदनहस्तन्यस्तहस्ताः प्राणनाथाङ्कपालीरभसपुलकिताङ्ग्यः तरुण्यः पङ्किलासु स्थलीषु किम् अपि न गणयन्ति।

### व्याख्या

सपदि तत्क्षणमेव अविरला घना या जलधारास्तासां धोरणी परम्परा 'पुंस्यं पन्नं च धोरणम्। परम्परावाहनं यत्' इत्यमरः। तया धौतं प्रक्षालितं वस्त्रं वासो 'वस्त्रमाच्छादनं वासः' इत्यमरः। यासान्ता मदनस्य कामस्य हस्ते न्यस्तो निक्षिप्तो हस्तस्स्वकरो याभिस्ता प्राणनाथानां कामुकानामङ्कपाली आश्लेषः तदर्थं रभसेन वेगेन पुलकितानि रोमाञ्चयुक्तान्यङ्गानि यासान्तास्तरुण्यो नवयुवतयः पङ्किलासु जलार्द्रासु स्थलीषु भूमिषु किमपि दुःखं विघ्नबाधादि न गणयन्ति न विचारयन्ति। सर्वा बाधा विजित्य कान्तानभिसरन्तीति भावः। अत्र मालिनीच्छन्दः।

### भाषा

उसी क्षण में, मुसलधार वृष्टि की परम्परा से भीजे हुए वस्त्र वाली, कामदेव के हाथ पर हाथ रखने वाली अर्थात् कामोद्दीपित होने से हिम्मत रखने वाली, अपने प्राणनाथ का आलिङ्गन करने के लिये वेग से रोमाञ्चित शरीर वाली नवयुवतियाँ कीचड से भरी जमीनों में किसी बात की भी परवाह नहीं

करती हैं। अर्थात् किसी भी दुःख की परवाह न कर अपने प्रियों के पास अभिसरण करती हैं।

यः स्पर्धामदधान्मृदङ्गनिनदैः सौदामिनीताण्डवे
यः कोदण्डममर्त्यभर्तुरकरोट्टङ्कारशङ्कास्पदम्।
मत्तैरावणकण्ठगर्भविलुठद्गम्भीरगर्जाघनः
सोऽयं व्योमनि घूर्णते विरहिणीघाताय मेघध्वनिः ॥८७॥

### अन्वयः

यः सौदामिनीताण्डवे मृदङ्गनिनदैः स्पर्धाम् अदधात्, यः अमर्त्यभर्तुः कोदण्डं टङ्कारशङ्कास्पदम् अकरोत् सः अयं मत्तैरावणकण्ठगर्भविलुठद्गम्भीरगर्जाघनः मेघध्वनिः व्योमनि विरहिणीघाताय घूर्णते।

### व्याख्या

य (मेघशब्द) सौदामिन्या विद्युत 'तडित्सौदामनीविद्युत्' इत्यमर। ताण्डवे नृत्यसमये मृदङ्गनिनदं मृदङ्गस्य मुरजस्य "मृदङ्गा मुरजा भेदास्त्वंक्या लिंग्योर्ध्वकास्त्रय" इत्यमर। वाद्यविशेषस्य निनदैर्घोषैं सह स्पर्धा सादृश्यमदधात् धारितवान् मृदङ्गध्वनितुल्य इत्यर्थ। योऽमर्त्यभर्तुरिन्द्रस्य देवस्वामिन कोदण्ड धनु 'धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम्' इत्यमर। टङ्कारस्य धनुष्टङ्कारस्य शङ्काया सन्देहस्यास्पद स्थान 'आस्पद पदकृत्ययो' इति मेदिनी। अकरोत् कृतवान्। सोऽय मत्तो मदान्धो य ऐरावणस्तस्य कण्ठस्तस्य गर्भेऽभ्यन्तरे विलुठन्तो व्याप्नुवाना गम्भीरा गर्जा गर्जन तद्वद्घनस्सान्द्रो मेघध्वनिर्मेघशब्दो व्योमन्याकाशे विरहिणीनां प्रियवियोगिनीनां घाताय विनाशाय घूर्णते साटोपं भ्रमति। अत्र शार्दूलविक्रीडित छन्द।

### भाषा

जो (यह) मेघ का शब्द, बिजली के नाच में पखावज के शब्दों की बराबरी करता है जो इन्द्र के धनुष को टङ्कार (शब्द) का स्थान बनाता है अर्थात् मेघ के शब्द से इन्द्रधनुष में टङ्कार हो रहा है ऐसा भास होता है, मदोन्मत्त ऐरावत के गले में विद्यमान गम्भीर गर्जना के समान ठोस, वह यह मेघ का शब्द, वियोगिनी स्त्रियों के घात के लिये आकाश में गूंज रहा है।

विद्युत्पङ्कजखण्डपङ्कपटली व्योमस्थलीशाद्वलम्
केदारः कलमाङ्कुरप्रतिभुवां धारालतानामयम् ।
शेवालावलिरद्रिमूर्धसरितां सूरेन्दुकारागृहं
कन्दर्पोत्सववैजयन्ति भवतु प्रीत्यै तवाम्भोधरः ॥८८॥

अन्वयः

हे कन्दर्पोत्सववैजयन्ति अयं अम्भोधरः विद्युत्पङ्कजखण्डपङ्कपटली व्योमस्थलीशाद्वलं कलमाङ्कुरप्रतिभुवां धारालतानाम् केदारः अद्रिमूर्धसरितां शेवालावलिः सूरेन्दुकारागृहं तव प्रीत्यै भवतु ।

व्याख्या

कन्दर्पोत्सवस्य मदनसम्बन्ध्युत्सवस्य वैजयन्ती पताका 'पताका वैजयन्ती स्यात्' इत्यमरः । तत्सम्बोधने हे कन्दर्पोत्सववैजयन्ति ! अयमेष अम्भोधरो मेघो विद्युदेव पङ्कजखण्डं कमलवनं तस्य पङ्कपटली कर्दमसमूहः उत्पत्तिस्थानं श्यामत्वादिना साधर्म्येण रूपकम् । व्योमस्थल्या गगनस्थलस्य शाद्वलं हरिततृणयुक्तं स्थानं 'शाद्वलः शादहरिते' इत्यमरः । कलमाङ्कुराः शाल्यङ्कुराः 'शालयः कलमाद्याश्च' इत्यमरः । तेषां प्रतिभुवां सदृशीनां धारालतानां जलधारावल्लीनामयं मेघः केदारः आलवालः 'केदारोऽद्रौ शिवे क्षेत्रे भूमिभेदालवालयोः' इति विश्वः । अद्रीणां पर्वतानां मूर्धसु शिरस्सु सरितो नद्यस्तासां शैवालानां जलनीलीनां 'जलनीली तु शैवालं' इत्यमरः । आवलिः पङ्क्तिः 'वीथ्यालिरावलिः पङ्क्तिः' इत्यमरः । सूरः सूर्यः इन्दुश्चन्द्रः इति सूरेन्दू तयोः कारागृहं प्रतिरोधकः तव सख्याः प्रियाया वा प्रीत्यै प्रसादायानन्दसमर्पणाय वा भवतु । अत्र मालारूपकालङ्कारः । अत्रापि शार्दूलविक्रीडितं छन्दः ।

भाषा

हे कामोत्सव की ध्वजा रूपिणी चन्द्रलेखा ! बिजली रूपी कमल वन का कीचड़ समूह अर्थात् उत्पत्ति स्थान, (कीचड़ भी काला होता है और मेघ भी काले रंग का है अतः इन दोनों का सादृश्य है।) आकाश स्थली का हरी घास से भरा मैदान, धान के अङ्कुरों की समानता करने वाली जल धारा रूपी लता का थाला, पर्वतों के शिखरों पर बहने वाली नदियों का सेवार, सूर्य और चन्द्र का कैदखाना, (सूर्य और चन्द्र को मेघ छिपा देता है या बंद कर लेता है,) यह मेघ, तुमको आनन्द दे अर्थात् इस मेघ को देखकर तुम्हें आनन्द हो।

उत्कर्षाधानहेतुर्निखिलशिखिगलक्रोडकूजाङ्कुराणां
धारावल्लीवनानां मधुकरपटलश्यामलः पल्लवौघः ।
दीर्घद्वैदूर्यरत्नामलगगनतलादर्शलीलानिचोल-
श्चोलस्त्रीकेशपाशैः सहचरति रतिव्याकुलैः कालमेघः ॥८६॥

अन्वयः

निखिलशिखिगलक्रोडकूजाङ्कुराणाम् उत्कर्षाधानहेतुः, धारावल्लीवनानां मधुकरपटलश्यामलः पल्लवौघः, दीर्घद्वैदूर्यरत्नामलगगनतलादर्शलीलानिचोलः कालमेघः, रतिव्याकुलैः चोलस्त्रीकेशपाशैः सहचरति ।

व्याख्या

निखिलास्सकला शिखिनो मयूरास्तेषां गलक्रोडे कण्ठमध्ये या कूजा केका 'केकावाणी मयूरस्य' इत्यमरः । तदङ्कुराणां तन्निस्सरणानामुत्कर्षाधान हेतुः समुल्लासकारणम्, धारावल्लीवनानां जलधारालतासमूहानां मधुकरा भ्रमरास्तेषां पटलं समूहस्तद्वत् श्यामलः कृष्णः पल्लवानां किसलयानां 'पल्लवोऽस्त्री किसलयं' इत्यमरः । ओघस्समूहः, दीर्घवृत्तलसद्वैदूर्यरत्नं मरकतमणिस्तद्वदमलं निर्मलं धूलिरहितं गगनतलमाकाशमेवादर्शं दर्पणं 'दर्पणे मुकुरादर्शौ' इत्यमरः । तस्य लीला विलासस्तस्य निचोलं आवरणं, 'खोल' इति हिन्द्याम् । यथा गगनदर्पणं मलिनं न भवेत्ततो मेघ एव तस्याच्छादनं भवतीति भावः । कालमेघः कृष्णमेघः रतिव्याकुलैः रतिक्रीडाव्यस्तैः चोलदेशस्त्रीकेशसमूहैस्सहचरति सादृश्यं भजति । अत्र स्रग्धराछन्दः ।

भाषा

समस्त मयूरों के कण्ठस्थित केका शब्द के प्रादुर्भाव को उत्कर्ष देने में कारणीभूत, अर्थात् मयूरों के गला में केका शब्द रहता ही है किन्तु मेघ को देखकर ही वे शब्द करते हैं। अतः केका शब्द को उत्कर्ष देने में मेघ प्रधान कारण है। जल धारा रूपी लता समूहों का, भौंरों के समूह के समान काले रंग का नूतन पत्तों का ढेर, चमकने वाले मरकत मणि के समान निर्मल आकाश रूपी ऐने की सुन्दर खोली, (दर्पण पर खोल चढ़ा देने से उसपर गर्दा न पड़ने से वह निर्मल रहता है)। यह काले रंग का मेघ रतिक्रीडा में व्यस्त चोल देश की स्त्रियों के केशपाशों से मिलता-जुलता है, अर्थात् उनकी समानता रखता है।

निखिलभुवनलक्ष्मीवल्लभो वल्लभायाः
प्रकृतिसुभगपाकोद्रेकपूतैर्वचोभिः ।
इति शिरसि दधानः शासनं मीनकेतो-
र्जलदसमयशोभां वर्णयामास देवः ॥९०॥

अन्वयः

निखिलभुवनलक्ष्मीवल्लभः देवः वल्लभायाः इति प्रकृतिसुभगपाकोद्रेकपूतैः वचोभिः मीनकेतोः शासनं शिरसि दधानः ( सन् ) जलदसमयशोभां वर्णयामास ।

व्याख्या

निखिलभुवनस्य सकलभुवनस्य लक्ष्मीस्तस्या वल्लभ प्रिय पतिरूपो देवो विक्रमाङ्कदेवो वल्लभायाश्चन्दलदेव्या पुरत वल्लभां वा इति पूर्वोक्तप्रकारेण प्रकृत्या स्वभावेनैव सुभगपाक रोचकपूर्णता तस्योद्रेकवशाद्वायिकमात् पूतै पवित्रै रमणीयैर्वचोभि वचनै मीनकेतो कामस्य शासनमाज्ञा शिरसि मूर्धनि दधान सन् जलदसमयस्य वर्षतो शोभां रामणीयकं मेघकालागमनरमणीयतां वर्णयामास विस्तारेण कथयामास । अत्र मालिनीछन्दः ।

भाषा

समस्त भुवनो की लक्ष्मी के स्वामी राजा विक्रमाङ्कदेव ने, अपनी प्यारी चन्दल देवी के सामने पूर्वोक्त प्रकार से, स्वाभाविक सुन्दर रचनाओ की विशेषता से रमणीय हुए वचनो से, कामदेव की आज्ञा को शिरसा धारण करते हुए अर्थात् कामासक्त होकर, वर्षा‌ऋतु की शोभा का वर्णन किया ।

इति श्री त्रिभुवनमल्लदेव-विद्यापति-काश्मीरकभट्ट श्रीबिल्हणविरचिते विक्रमाङ्कदेवचरिते महाकाव्ये त्रयोदश सर्ग ।

नेत्राब्जाभ्रयुगाङ्कविक्रमशरत्कालेऽत्र दामोदरात्
भारद्वाजकुलोत्तमात्समुदितः श्रीविश्वनाथः सुधीः ।
चक्रे रामकुबेरपण्डितवरात्संप्राप्तसाहाय्यक-
ष्टीकायुग्ममिदं त्रयोदशमिते सर्गे रमानुमहात् ॥

ॐ शान्तिः शान्तिः शान्तिः ।

॥ श्री ॥

॥ श्रीगणेशाय नम ॥

॥ श्रीसङ्कष्टनाशिन्यै नम ॥

# परिशिष्टम्

## "क"

### विक्रमाङ्कदेवचरितमहाकाव्यस्याऽष्टमसर्ग-तस्त्रयोदशसर्गान्तर्गताः सूक्तयः ।

**अष्टमसर्गे—**

लम्भिताः कदलीस्तम्भास्तदूरुभ्यां पराभवम् ।
अत्यन्तमृदुभिर्लब्धो जडैः क्व जयडिण्डिमः ॥१५॥

**नवमसर्गे—**

कन्यापितॄणां पदमुत्सवस्य न श्लाघ्यजामातृसमं समस्ति ॥४०॥
इह हि सदृशयोगः कस्य न प्रीतिहेतुः ॥१५०॥

**दशमसर्गे—**

अकौशलं पत्युरिदं चिरेण विश्वासमायाति नवा वधूर्यत् ॥७॥

निरुध्य रन्ध्रं मधुपूरितस्य पुष्पस्य लोभाद्भ्रमरोऽवतस्थे ।
अन्येन मार्गेण पपुस्तदन्ये लुब्धैर्जनानामयमेव मार्गः ॥१३॥

तेषां प्रसक्तो हि विलासवाणः क्रीडन्ति दासैरिव यैर्मृगाक्ष्यः ॥२४॥

भाग्येषु नास्ति प्रतिषेधमार्गः ॥४१॥

निखिलभुवनलक्ष्मीवल्लभो वल्लभायाः
प्रकृतिसुभगपाकोद्रेकपूतैर्वचोभिः ।
इति शिरसि दधानः शासनं मीनकेतो-
र्जलदसमयशोभां वर्णयामास देवः ॥९०॥

अन्वयः

निखिलभुवनलक्ष्मीवल्लभः देवः वल्लभायाः इति प्रकृतिसुभगपाकोद्रेकपूतैः वचोभिः मीनकेतोः शासनं शिरसि दधानः ( सन् ) जलदसमयशोभां वर्णयामास ।

व्याख्या

निखिलभुवनस्य सकलभुवनस्य लक्ष्मीस्तस्या वल्लभः प्रियः पतिरूपो देवो विक्रमाङ्कदेवो वल्लभायाश्चन्दलदेव्याः पुरतः वल्लभा वा इति पूर्वोक्तप्रकारेण प्रकृत्या स्वभावेनैव सुभगपाकः रोचकपूर्णता तस्योद्रेकवशादाधिक्यात् पूतैः पवित्रैः रमणीयैर्वचोभिः वचनैः मीनकेतोः कामस्य शासनमाज्ञा शिरसि मूर्धनि दधानः सन् जलदसमयस्य वर्षतोः शोभां रामणीयकं मेघकालागमनरमणीयता वर्णयामास विस्तारेण कथयामास । अत्र मालिनीछन्दः ।

भाषा

समस्त भुवनों की लक्ष्मी के स्वामी राजा विक्रमाङ्कदेव ने, अपनी प्यारी चन्दल देवी के सामने पूर्वोक्त प्रकार से, स्वाभाविक सुन्दर रचनाओं की विशेषता से रमणीय हुए वचनों से, कामदेव की आज्ञा को शिरसा धारण करते हुए अर्थात् कामासक्त होकर, वर्षाऋतु की शोभा का वर्णन किया ।

इति श्री त्रिभुवनमल्लदेव-विद्यापति-काश्मीरकभट्ट श्रीबिल्हणविरचिते विक्रमाङ्कदेवचरिते महाकाव्ये त्रयोदशः सर्गः ।

नेत्राब्जाभ्रयुगाङ्कविक्रमशरत्कालेऽत्र दामोदरात्
भारद्वाजकुलोत्तमात्समुदितः श्रीविश्वनाथः सुधीः ।
चक्रे रामकुबेरपण्डितवरात्संप्राप्तसाहाय्यक-
ष्टीकायुग्ममिदं त्रयोदशमिते सर्गे रमानुग्रहात् ॥

ॐ शान्तिः शान्तिः शान्तिः ।

॥ श्री ॥

॥ श्रीगणेशाय नमः ॥

॥ श्रीसङ्कष्टनाशिन्यै नमः ॥

# परिशिष्टम्

## "क"

### विक्रमाङ्कदेवचरितमहाकाव्यस्याऽष्टमसर्ग-
### तस्त्रयोदशसर्गान्तर्गताः सूक्तयः ।

**अष्टमसर्गे–**

लम्भिताः कदलीस्तम्भास्तदूरुभ्यां पराभवम् ।
अत्यन्तमृदुभिर्लभ्यो जडैः क्व जयडिण्डिमः ॥१५॥

**नवमसर्गे–**

कन्यापितॄणां पदमुत्सवस्य न श्लाघ्यजामातृसमं समस्ति ॥४०॥

इह हि सदृशयोगः कस्य न प्रीतिहेतुः ॥१५०॥

**दशमसर्गे–**

अकौशलं पत्युरिदं चिरेण विश्वासमायाति नवा वधूर्यत् ॥७॥

निरुध्य रन्ध्रं मधुपूरितस्य पुष्पस्य लोभाद्भ्रमरोऽवतस्थे ।
अन्येन मार्गेण पपुस्तदन्ये लुब्धैर्जनानामयमेव मार्गः ॥१२॥

तेषां प्रसन्नो हि विलासबाणः क्रीडन्ति दासैरिव यैर्मृगाक्ष्यः ॥२४॥

भाग्येषु नास्ति प्रतिषेधमार्गः ॥४१॥

किमस्ति वैदग्ध्यवतामसाध्यम् ॥४६॥

स्त्रीणां हि सौभाग्यमदप्रसूतिः प्रियःप्रसादो मदिरासहस्रम्॥५२॥

लज्जा कुतः स्वार्थपरायणानाम् ॥६२॥

निसर्गरम्येऽपि विचेष्टिते यदतिप्रसङ्गो रसभङ्गहेतुः ॥८७॥

एकादशसर्गे—

सत्त्वमुन्नतपदात्पतितानां विद्यते न महतामपि नूनम् ॥४॥

कं विडम्बयति नो कुसुमेपुः ॥२४॥

त्रयोदशसर्गे—

परोपतापैकपरायणाश्चिरं क वा भवन्त्यभ्युदयस्य भूमयः ॥२॥

करोपि किं शुभ्रतया तदीयया न चन्दनं सुन्दरमेणनाभितः ॥७२॥

---

# परिशिष्टम्

## "ख"

### विक्रमाङ्कदेवचरितमहाकाव्यस्याऽष्टमसर्गतस्त्रयोदशसर्गान्तर्गतानां श्लोकानां अकारादिवर्णानुक्रमेणाऽनुक्रमणिका ।

# परिशिष्टम्

## "ग"

### विक्रमाङ्कदेवचरितमहाकाव्येऽष्टमसर्गतस्त्रयोदशसर्गान्तर्गतानां प्रधाननाम्नामकारादिक्रमेण सूची ।

( अत्र प्रथमसंख्या सर्गसूचिका द्वितीया श्लोकानाम् । )



---



# परिशिष्टम्

## "घ"

### विक्रमाङ्कदेवचरितमहाकाव्यस्य विक्रमादित्यस्य च वर्णनात्मका लेखा ग्रन्थाश्च ।


१ विक्रमाङ्कदेवचरितमहाकाव्यम् Edited by Shastri Murari Lal Nagar, Sahityacharya, from Saraswati Bhavan, Benares, in 1945.

२ अय्यणवद्यचरितकाव्यम् (Manuscript.) by Shri Shyam Bhatt Bharadwaj.

3 Annual Reports of the Archaeological Survey of India.


---